it may be noted, that Paramesvara was not sure of certain readings in the text. He has discussed some textual variants in his commentary.[3] So it may be inferred that the original may be older than the commentary at least by one century. On the basis of this inference Cidânanda may be placed in the fourteenth century.

In all possibility Cidânanda was a scholar who flourished in Kerala. All the old manuscript copies of his work now known belong to Kerala and they are written in Malayalam script. All of his commentators also appear to be sons of Kerala. Further Cidânanda is accepted as an authority by the two Nârâyanas of Kerala who composed the Manameyodaya

The work is an elucidation of the Mîmâmsa doctrines in forty-four sections. It follows the school of Kumârila Bhatta and it discusses in detail the twenty-three *nītis* in Mîmamsa so as to bring out their exact significance. According to the Sânkhya system of philosophy twenty-three principles originate from Prakrti In the same manner, it is held that twenty three nitis emerge from the *Ślokavārtika*.[4]

The Nîtitattvavirbhâva is a Prakaraṇa work and in it the author strives to establish the views of the *Bhaṭṭas* which are controverted by the adherents of other sastras and the followers of Prabhâkara school of Mîmamsa. One of the stanzas seen at the end brings out clearly the author's estimate of the importance of the work.

---

3 See the commentary on the सर्वं प्रमाणम्

4 Sri Paramesvara's commentary on the Nîtitattvâvirbhâva.

साकूतं गहनं कुमारिलमतं जिज्ञासुभिः पण्डितै-
रप्यस्मास्ववधीरणा यदि परं अन्योऽयमभ्यस्यताम् ।
नो चेदुद्धततर्कतार्किकसमामध्यास्थितानां भवेत्
तत्तन्मार्गविचक्षणत्वविरहाद्दास्यैव नो वञ्चितः ॥ ४

According to the author the work is indispensable for all scholars who participate in the discussions on the Kumārila's school of Mimāmsa.

Three commentaries on the work are known till now.

1. The commentary by Parameśvara II of the Payyūr family in Kerala.[5]

2. Mangalatika by Nīlakantha.[6]

3. Commentary by Mukundānandayati.[7]

For this edition of the work the following manuscripts are used:-

| | | |
|---|---|---|
| क | L. 814. | Travancore University Manuscripts Library. |
| ख | 1032. | Do. |
| ग | 666. | H. H. The Maharaja's Palace Library. |
| घ | | Manuscript from the Adayar Library. |
| ङ | 665 | H. H. The Maharaja's Palace Library. |

---

5 For details see introduction to the Jaiminiyasutrarthasangraha page 21-22, Trivandrum Sanskrit Series No. 156

6. For details see ibid pp 29 30

7. See A. Triennial Catalogue of Manuscripts, Govt Oriental Manuscripts Library Madras, Vol. IV Part II Sanskrit A. p. 4255

I acknowledge with thanks the assistance I have received from Sri V. G. Namboothiri and Sri S. Sankararama Sastri, Pandits, University Oriental Manuscripts Library in the publication of this work.

Trivandrum,
15-5-1958.

P. K. NARAYANA PILLAI.

# विषयानुक्रमणी ।

॥ श्रीः ॥

चिदानन्दपण्डितप्रणीतः

# नीतितत्त्वाविर्भावः ॥

## प्रत्यक्षपरीक्षा ॥

वन्दे कल्याणयोरेकमिन्दुचूडमुकुन्दयोः ।
अङ्गं कलिन्दहिमवत्सुतयोरिव सङ्गमम् ॥

आचार्यकृतिप्रकृतेराविर्भावाय नीतितत्त्वानाम् ।
अयमिह यत्नः क्रियते सन्तः पुष्यन्तु सन्तोषम् ॥

विदुषामयं प्रबन्धो दुर्जनदृष्योऽपि जायते प्रीत्यै ।
किं शर्करा न मधुरा पित्तोपहतस्य तिक्तेति ॥

आदौ स्वाध्यायविध्यर्थनिर्णयाय यतामहे ।
शास्त्रारम्भस्य वैधत्वप्रतिपादनसिद्धये ॥

यदि हि "स्वाध्यायोऽध्येतव्य"[1] इति विधिः अध्ययनस्य स्वाध्यायसंस्कारद्वारेणार्थज्ञानसाधनत्वं बोधयतीति न प्रतिपद्येत, तर्ह्यर्थज्ञानानुष्ठानस्य वैधत्वनैधुर्यापादकभूतं मीमांसाश्रवणमपि न वैधं स्यात्, अर्थश्च न वैधं स्नानमुत्कष्टुमर्हति, इति नाध्ययनानन्तरं तद्धेतुका धर्मजिज्ञासा कर्तव्या भवेत्। अतो मीमांसाश्रवणस्य वैधत्वप्रतिपादनाय स्वाध्यायाध्ययनविधिः अधीतेन स्वाध्यायेनार्थज्ञानं सम्पादयेदिति बोधयति न वेति चिन्त्यते।

---

१· परब्रह्मणो· प· २· पाठे· क· १· भत्वाणाशाग. ग. ग. प.

तत्र "स्वाध्यायोऽध्येतव्य" इति तव्यप्रत्ययावगता विध्यवच्छिन्ना भावना समानपदोपात्तमध्ययनमपुरुषार्थत्वादुल्लङ्घ्य पुरुषार्थरूपं भाव्यमाकाङ्क्षमाणा समनन्तरपदोपात्तं स्वाध्यायमपि तत एव भाव्यतया नाभिलषति। न च स्वाध्यायस्य संस्कार्यतया भाव्यत्वं, भूतभाव्युपयोगरहितस्य तस्य सक्तुवदसंस्कार्यत्वात्। न च अर्थज्ञानस्य भाव्यत्वम्, अन्तरेणापि विधिं सामर्थ्यादेवाधीतेन स्वाध्यायेनार्थज्ञानं जायत इत्यवगतेर्विध्यानर्थक्यप्रसङ्गात्। न च नियमार्थो विधिः, अक्रत्वर्थत्वात्। अवघातादयो हि क्रतावेव नियम्यन्ते, न तण्डुलादिस्वरूपे; प्रमाणान्तरविरुद्धत्वात्। तस्मात् पुस्तकवाचनापरिगृहीतादपि स्वाध्यायादर्थज्ञाननिष्पत्तिदर्शनाद् अधीतेनैव स्वाध्यायेनार्थज्ञानं जायत इति नियमो[2] न सम्भवति इति न तदर्थो विधिः[3]। अतोऽध्ययनस्वाध्यायार्थज्ञानानामभाव्यत्वादन्यस्य च कस्यापि शब्देन सामर्थ्येन चोपादीयमानस्याभावादाध्ययनमधिकृत्यार्थवादानामसम्भवादार्थवादिकफलमप्यत्र न रात्रिसत्रवत् सम्भवतीति[4], विश्वजिन्न्यायेन सकलाध्येतृपुरुषाभिलषितः स्वर्ग एव भाव्यतया कल्प्यते।

न च धारणाध्ययनगोचरस्यार्थवादस्यातिदेशतः प्रथमाध्ययनेऽपि प्राप्तेरार्थवादिकफलान्वय इति वाच्यम्, अनतिदेश्यत्वाच्छास्त्रस्य। न च शब्दमात्रेणेतिकर्तव्यतात्वेनातिदेशः, तदितिकर्तव्यतात्वेनापि प्राशस्त्यमात्रस्यैवातिदेशात्। अतोऽतिदेशतोऽपि फलस्याप्राप्तेः स्वर्गस्यैव भाव्यत्वम्, इत्यर्थज्ञानस्याध्ययनसंस्कृतेन स्वाध्यायेन सम्पाद्यत्वं न विधिरवबोधयति

---

१. स्य सक्तु. ख. २. मोऽपि न. क. ३. विधि। अतोऽध्ययनस्वाध्यायार्थज्ञाननिष्पत्तिदर्शनादधीतेनैव स्वाध्यायेनार्थज्ञानं जायत इति नियमोऽपि न सम्भवतीति तदर्थो विधिः। अतोऽध्ययन ४. नि विश्वजिन्न्यायेन, ५. . देशत्वात् . ग.

इति तदनुष्ठानस्य वैफल्यवैधुर्यात् तदनुरोधेन वैफल्यस्य स्नानस्योत्कर्षासम्भवाच्चाध्ययनानन्तरं तद्धेतुका धर्मजिज्ञासा कर्तव्येति पूर्वः पक्षः ।

सिद्धान्तस्तु—

> अर्थबोधादिरूपस्य दृष्टस्य सति सम्भवे ।
> फलस्य न फलं स्वर्गः कल्पनामधिरोहति ॥

दृष्टार्थत्वे[1] सम्भवत्यदृष्टार्थत्वस्यान्याय्यत्वाद्, अर्थबोधादेश्च दृष्टस्यैव फलस्य सम्भवान्न विश्वजिन्न्यायेन स्वर्गस्यावकाशः । न चाधीतात् स्वाध्यायादर्थबोधादिसिद्धेः सामर्थ्यलभ्यत्वाद्विध्यानर्थक्यमिति वाच्यं, नियमार्थत्वाद्विधेः । नचाक्रत्वर्थत्वान्न नियम इति वाच्यम्, अक्रत्वर्थेषु द्रव्यार्जनादिषु पुरुषार्थेष्वपि नियमदर्शनात् । यत्त्वर्थबोधादेर्दृष्टत्वात् तत्र नियमविधौ प्रमाणान्तरविरोध इत्युक्तं, तदयुक्तं; सर्वनियमविधीनां दृष्टैकगोचरत्वात् । न हि प्रमाणान्तरागोचरे क्रतौ नियमः सम्भवति, तत्र नखनिर्लुञ्चनादेरुपायान्तरस्याप्राप्तेः पक्षेप्राप्त्यसम्भवादवघातादिनियमानुपपत्तेः । ननु दृष्टे तण्डुलादिस्वरूपेऽपि नियमो न सम्भवति प्रमाणान्तरविरोधादित्युक्तम् । सत्यम्; अत एव अवघातादेस्तण्डुलादिस्वरूपे साधनत्वमेव विधिविषयः, नियमस्तु वाक्यार्थ एव कल्प्यमानम्, इति नियमविदां रहस्यम् । मन्वेत तर्ह्यज्ञातज्ञापनमिति चेन्नैवं, यावद्धि तण्डुलादिसाधनत्वमेवावघातादेरन्वयव्यतिरेकमूलां व्याप्तिमवगम्य पक्षधर्मत्वादिकव्याप्त्यनुमन्यापानुमातव्यं तावदतिशीघ्रया "व्रीहीनवहन्ति"इत्यादिकया श्रुत्यैवावघातादेस्तण्डुलादिसाधनत्वस्य प्रथममवगतेः । श्रुतेर्लिङ्गतः शीघ्रप्रवृत्तेः । ननु त्रिकालाप्राप्तविषयो विधिः

1 दैवे मध्य॰ ग॰ २॰ स्नातनियम ग॰ घ॰ ३॰ यॆव्वारेद क॰ ध॰ ४॰ सुध्या, ग॰ ५॰ एतया, य॰

पश्चादपि सामर्थ्यलभ्यमर्थं विदधाति। मैवम्, नियमविधीनामनन्यलभ्यविषयत्वाभावात्। भावे वा पूर्वोक्तनयेन नियमविधित्वभङ्गप्रसङ्गात्। अतस्तण्डुलाद्यर्थिनां नखनिर्लुञ्चनाद्युपायान्तरसम्भवेऽपि अवघा-[3]तादेव नियमेन प्रवृत्तिरिति योऽयन्नियमः[4] स विधेः फलं, तस्य च स्वयमफलस्य फलान्तरानुगुणत्वेऽपि विधिफलत्वानुपपत्तेः फलान्तरं कल्प्यं, तथावघातादिषु प्रकृतत्वात् क्रतुरेव। याजनादिषु तु फलान्तरस्याप्रकृतत्वादुपायान्तरप्रवृत्तौ प्रत्यवाय एव। अतोऽध्ययनमन्तरेणोपाया-[6]न्तरप्रवृत्तौ प्रत्यवायकल्पनात् तत्परिहारायाध्ययन एव प्रवृत्तिरिति योऽयं नियमः तस्सिध्यर्थमन्यलभ्यमेवार्थज्ञानसाधनत्वमध्ययनस्य विधिरवबोधयतीति न काचिदनुपपत्तिः।

नचैवमध्ययनस्य स्वाध्याये तस्य चार्थबोधेऽपि विनियोजकाभावादसंस्कार्यत्वम्, अस्यैव विधेर्विनियोजकत्वात्। तर्ह्यध्ययनस्यार्थज्ञानेन विनियोग इति चेद्, मैवं; यथैव "चरुमुपदधाती"त्यत्र चरोः स्थलशेषत्वे चरुशेषत्वे चोपधानस्य प्रमाणान्तरासम्भवेऽपि चरूपधाने स्थलशेषतया विनियुक्ते चरुमन्तरेणोपधानस्य तत्साधनत्वानुपपत्तेर्दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वस्यान्याय्यत्वात् चरोः स्थलशेषत्वमुपधानस्य तु तत्संस्कारतया तद्द्वारेण स्थलशेषत्वमिति स्थलनिष्पत्तिपर्यन्तो विनियोगः,[10,11] यथा वा "साम्ना स्तुवीते"त्यत्र स्तुतावक्षराणां विनियोगान्तराभावेऽप्यक्षराण्यन्तरेण स्तुतिमात्रस्यानुपपत्तेर्दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वस्यान्याय्यत्वाच्च साम्नोऽक्षराभिव्यक्तिद्वारेण[12] तत्संस्कारतया

---

१. भ्यम विदधाति. ख ग. भ्यमर्थं नान्तदधाति. घ २ पायसम्भवेऽपि ध. ३. तादेव क ४ योऽनियम ख. ग ५ त्वे विधिपरत्वा ख ६ त्यता। तत्परि ग. घ. ७ ति नियम ८ मनन्य ख. ग. ९ चार्थावबोधेऽपि. ख, ग. १०. स्थलनिष्पत्तिशेष क ग ११ नियोगकान्त १२ रेणैतत्स. घ

स्तुतिसाधनत्वमिति तत्पर्यन्तो विनियोगः, एवं स्वाध्यायस्यार्थज्ञानादौ । तत्र चाध्ययनस्य विनियोजकान्तराभावेऽपि स्वाध्यायाध्ययनस्यार्थज्ञानादौ विनियोगं[1] विनान्तरेण च स्वाध्यायमध्ययनमात्रात् तदनिष्पत्तेर्दृष्टार्थत्वे च सम्भवत्यदृष्टार्थत्वस्यान्याय्यत्वात् स्वाध्यायोऽर्थज्ञानादौ साधनम्, अध्ययनन्तु तद्द्वारेण तत्संस्कारतया तत्साधनम्, इति संस्कारविधित्वे-ऽप्यर्थज्ञानपर्यन्तो विनियोग इति ।

नचैवं संस्कारविधेः संस्कार्यविनियोगपर्यन्तत्वे होमविधेरपि संस्कार्य-सक्तुविनियोगपर्यन्तत्वेन संस्कारविधित्वं[2] भवेदिति वाच्यं, तत्र दृष्ट-सामर्थ्यानुसारस्य सहकारिणोऽसम्भवादेव संस्कार्यविनियोगपर्यन्तत्वे-नापि संस्कारविधित्वानुपपत्तेः ।

स्यादेतत् । स्वयमफलस्यार्थज्ञानस्य फलवत्कर्मानुष्ठानोपाय-त्वात् फलत्वम्, इत्यनुष्ठानानुपयोगि[3]क्षत्रियाद्यधिकाराश्वमेधादिप्रतिपाद-कानां वेदभागानामनर्थकानां च हुमादीनां[4] नार्थज्ञानार्थमध्ययनमिति तत्र तस्यादृष्टार्थत्वे कल्प्ये सर्वत्रादृष्टार्थत्वमेव युक्तम् । नैवम्[5]; तत्रापि जपधारणपारायणादेर्दृष्टस्यैव विध्यन्तरापेक्षितत्वेन फलत्वाङ्गी-करणात् । न च फलभूयस्त्वाद्विनियोगभूयस्त्वं, यदेव किञ्चिद्विध्य-न्तरापेक्षितं स्वाध्यायेन शक्यसम्पादं तत्सर्वमधीतेन स्वाध्यायेन कुर्यादिति भूयस्त्वे[6]ऽप्येकोपाधिपरिगृहीतानामेकत्वादेषां च फलानां बहुत्वेऽपि दृष्टत्वेन कल्प्यत्वाभावाद् "एकं वा चोदनैकत्वाद्" इति न्यायस्यानवकाश एव ।

१. गान्त. ग. २. स्कारपर्यन्तत्वे विनि. ग. स्कारवि. घ. ३. ष्ठानोप. घ. ४. हुमादीनाव नार्थं ख. ग. हूमादीनां घ. ५. वम् । न युक्तम्; तत्रापि. ख. ग. ६. स्त्वेऽस्यैवो घ.

ननु फलवदर्थज्ञानसाधनत्वेन फलभूतस्य स्वाध्यायस्यैव सं[1]मनन्तरपदोपात्त-त्वात् किमिति न भाव्यत्वम्? उच्यते—स्वयमफलस्य फलान्तर-साधनतया फलत्वम्, अव्यवहितव्यवहि[3]तयोरव्यवहितस्यैव मुख्यत्व-मिति स्वाध्यायाद्व्यवहि[4]तस्यार्थज्ञानस्यैव भाव्यत्वम् इति। अतोऽध्य-यनविधेर्याजनादिविधिवत् पुरुषार्थनियमविधित्वात् सिद्धमध्ययनस्यार्थ-ज्ञानार्थत्वम्। तथा च तस्येतिकर्तव्यताभूतं विचारमन्तरेणाध्ययन-मात्रादनिष्पत्तेस्तदनुष्ठानमपि वि[6]धिरवबोधयतीति तदनुरोधेन स्मार्तस्य स्नानस्योत्कर्षोऽध्ययनानन्तरं वेदेतुका धर्मजिज्ञासा कर्तव्येति।

एकदेशिनस्त्वाचार्यकरणविधिप्रयुक्तिलब्धानुष्ठानस्याध्ययनविधे-रधिकारपरत्वचिन्तायां प्रथमावगतत्वेनाचार्यकाधिकारपरत्वमाशङ्क्य-न्तरङ्गत्वादर्थज्ञानाधिकारपरत्वमेवेति वर्णयन्तः शास्त्रारम्भं समर्थयन्ते। तथाप्युक्तम्, अध्यापनविधेरेवाभावात्। कः खल्वध्यापनविधिः।

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते॥"

इति स्मृत्यनुमित उपनीयाध्यापनेनाचार्यकं भावयेदित्येवंरूप इति चेन्, मैवम्; एतद्विषयायाः श्रुतेरनेवंविधया स्मृत्यानुमातुमशक्य-त्वात्[10]। इयं ह्युपनीयाध्यापयितारमाचार्यं वदन्तीति[11] प्रतिपादयति।

---

१. समनन्तरपदोपात्तत्वात् ख. २. भाव्यत्वम् ३ तयोरव्यवहित. ख. ४. तस्यैवार्थज्ञानस्यैव. ५ स्वयमेव. ख. ६. विधिरेव बोधयति। इति तदनुरोधेन स्मार्तस्नानस्यो. ग. ७ र धर्म ग. प. ८. इति स्मरणानुमितेन आचार्यकाम उपनीयाध्यापयेदित्येवरूप. ग. ९. नेन चचार्यक. ग १०. इयमुपनीय. ग. ११. वदन्तीति. ग

न पुनरध्यापने विधत्ते । विधिपरत्वे तु यो द्विजस्तमाचार्यं प्रचक्षत इत्यंशेनैकवाक्यत्वविरोधात् । न चोपनीयाध्यापयेदिति विधिमुक्त्वा विधिप्रसिद्धमर्थं यस्त्विति निर्दिश्याचार्यलक्षणमिति वाच्यं, स्वरसतो विधित्वाप्रतिपत्तौ वाक्यभेदेनापि विधित्वाश्रयणे मूला[1]भावात् । यत्तुन- "विहितानेकनियमसहितोपनयनयुक्ताध्यापने कृत आचार्य इत्युक्तं, तद्यदि क्रियागर्भोऽप्यत्राध्यापकसम्बन्धोऽप्यनुवर्तते, तथापि न ताव- न्मात्रे शब्दः, दृष्टस्यानियमे नियमे[2] चाभेदाददृष्टादेव भेद इत्यलौकिक शब्दः, तदलौकिकं विध्यर्हं फलम्, इयमेव यूपाहवनीयादिविधे" रित्युक्तम्; तदयुक्तम् । नहीदं वचनमनेकनियमोपेतोपनयनयुक्ताध्यापन साध्यमाचार्यकमित्याह । किन्तु उपनेयशेषभूतसनियमकोपनयनयुक्ता- ध्यापनक्रियाकर्तृस्वरूपमाचार्यशब्दवाच्यमिति । तथाच पाचकादिपद- वदाचार्यपदमपि लौकिकार्थमेव । यूपाहवनीयादिकं तु द्वितीयाश्रुत्या- दिभिरनेकनियमकतक्षणाधानादिसाध्यत्वेनावगतमिति तत्साध्यस्य दृष्ट- स्यादर्शनादुक्तं तद्वाचिनो यूपाहवनीयादिपदस्यालौकिकार्थत्वम् ।

यदप्याहुः—अध्यापनक्रियानि[6]वृत्तावप्या"चार्याय वरो देय"इति श्रुतेस्तदानीमाचार्यपदस्य भूतार्थोपलक्षकत्वमनुसृत्य मुख्यार्थत्वायालौकिका- र्थत्वमाश्रयणीयमिति, तदाचार्यकोत्पत्तेः पूर्वमध्यापनक्रियावेलायामेव "आचार्यस्य वाङ्मात्रे स्थित्वाधीयीत" इति श्रुतेस्तदानीमाचार्यपदस्य भाव्यर्थोपलक्षकत्वमनुसृत्य मुख्यार्थत्वायोपनयनोपक्रमाध्यापनान्तस- नियमकक्रियासन्तानयोगित्वमेवार्थत्वेन स्वीकरणीयमिति वैपरीत्यापादनेन

---

१. लासम्भवात्. ख. ग. २. मे चा. ग. ३. इत्ययमेव च. ग. इममेव च. घ. ४. न्तूपनयनशे. ग. ५. यसनियमको. घ. ६. निर्वृत्तावाचार्याय. ख. निवृत्तौ वाचा- र्याय. ग. निवृत्तावप्याचार्याय वरो देय. घ. ७. मक्रिया. क. ख.

परिहरणीयम्। अधन्या च भूतलक्षणातो भाविलक्षणा, सामग्रीविघटन-सम्भवेन भाविनोऽर्थस्य सन्दिग्धत्वात्। तस्मादाचार्यत्वस्य यूपादिवद-लौकिकत्वादुत्पत्तिविधानं युक्तमिति रिक्तं वचः।

किञ्च योऽध्यापयेदिति यच्छब्दयोगो विधित्वमुपहन्ति। न च यदाग्नेय इत्यादौ यच्छब्दस्यानुपघातकत्वं, तत्रापि यच्छब्दयुक्तस्य विधित्वभङ्गेनार्थवादादिपरिकल्पितस्यान्यस्यैव विधित्वस्वीकारात्। अतो न तावद् "उपनीय तु यःशिष्यम्" इत्यादिस्मृत्यनुमितं वचनमध्यापन-विधौ प्रमाणम्।

स्यादेतत्—"अष्टवर्षं ब्राह्मणमुपनयीत" "तमध्यापयेत्" इति श्रवणादुपनयन आचार्यकरणप्रयोजन आत्मनेपदस्मृतेरध्यापनविधिरपे-क्षिताचार्यकरणविधिरेवेति। तदयुक्तं; द्रव्यार्जनार्थतयैव प्राप्तस्या-ध्यापनस्य विध्यनर्हत्वात्। न चाचार्यकस्यालौकिकत्वात् तत्साधनत्वेना-प्राप्तमध्यापनं विध्यर्हमिति वाच्यम्; अलौकिकस्याचार्यकस्यान्यतोऽसिद्धेः। नचोपनयीतेत्यात्मनेपदात् सनियमकोपनयनशेषित्वमनीतेराचार्यकमलौ-किकमिति वाच्यम्; उपनयतेराचार्यकरणं वर्तमानात् कर्त्रभिप्रायार्थत्वादा-त्मनेपदविधानस्य। अन्यथा कर्त्रभिप्राये क्रियाफले "स्वरितञितः" इत्या-दिनैवात्मनेपदप्राप्तेः 'सम्मानन'सूत्रानर्थक्यप्रसङ्गात्। यत्तु नः क्रियाफलस्य कर्त्रभिप्रायत्वं नाम न कर्त्रभिलषितत्वं किन्तु कर्तृगतत्वमित्यङ्गीकृत्योपनयन-क्रियाफलस्य माणवकगतत्वेनाकर्त्रभिप्रायत्वात् पूर्वोक्त एतार्थे पदसाधुत्व-मिष्टमिति, तदयुक्तम्। एवं सन्यायानैक्रियाफलस्याग्निगतत्वेनाकर्त्रभि-

---

१. कार्यत्वात् - म. २. वर्धित. स. म. प ३ धानत्व प म प

प्रायत्वात् क्रियाफलस्य "स्वरितञितः" इत्यादिनात्मनेपदासम्भवादधीनादधीतेति न स्यात्। न चोपनयनक्रियाफलस्य संस्कारस्य माणवकाभिलषितत्वादेवाकर्त्रभिप्रायत्वम्; आचार्यानभिलषितत्वेन तस्य क्रियाफलत्वानुपपत्तेः। न च क्रियाजन्यं यस्य कस्यचिदभिलषितं वा क्रियाफलम्, किन्तु कर्तुरभिलषितं सत् क्रियाजन्यं क्रियाफलम्। अन्यथा श्रमादिकमपि क्रियाजन्यमहितस्य कस्यचिदभिलषितञ्चेति "स्वर्गकामो यजेत" इत्येवमादावकर्त्रभिप्रायत्वात् क्रियाफलस्यात्मनेपदं न स्यात्। न चास्यत्पक्ष इव माणवकसमीहितसाधनत्वेनैवोपनेतुरुपनयनक्रियाफलमभिलषितम्; येन क्रियाफलस्याकर्त्रभिप्रायत्वं स्यात्। आचार्यककामस्य तत्साधने माणवकाधिकारे समीहानुपपत्तेः। उत्पत्तौ वा माणवकाधिकारस्यैवानुमंहितस्य प्रयोजकत्वम्, नाचार्यकाधिकारस्येति स्यात्। अत आत्मनेपदात् क्रियाफलस्याकर्त्रभिप्रायत्वावगतेरकर्तृभूतमाणवकसमीहितसाधनत्वेनोपनयनस्य प्रतीतिः।

न च शिष्यमुपनीयाध्यापयेदिति क्त्वाप्रत्ययादाचार्यकशेषत्वमुपनयनस्य स्वध्यवसानम्; स्मृतिगतो हि क्त्वाप्रत्ययः, स च स्वतस्समानकर्तृकत्वमेवाह। तत्र प्रयोगैक्यम्। तत्पुनरङ्गाङ्गित्वमिति प्रत्यक्षवेदगतत्वेन साक्षादङ्गाङ्गिभावविषयत्वेन च क्त्वाप्रत्ययतो बलीयस्या "वसन्ते ब्राह्मणमुपनयीत" इति द्वितीययोपनयनस्योपनेयशेषत्वप्रतीतेः। न चोपनेयसंस्कारस्याचार्यकशेषत्वात् तद्द्वारेणोपनयनस्यापि तदङ्गत्वं क्त्वाप्रत्ययोऽवगमयतीति वाच्यम्; उपनेयसंस्कारस्याचार्यकार्थत्वे माण-

---

१. त्वम्. घ. २. यमभिलषित वे तस्य कि॰ ग घ ३. दोचाकर्त्र॰ ग.घ. ४. यतेऽकर्तृ ग.घ. ५. कर्तृत्व क॰ ६. यस्तत्र्द्व ख॰ ग॰ य स्याद्. घ. ७. पनयनशे. ग. ८ पनयन॰ ख॰ घ. ९. कार्यत्वात् घ. १०. यो गम॰ ग॰

यक्रार्थत्वे च सोपयोगत्वसाम्येऽपि पुरुषान्तरगामित्वेन बहिरङ्गादाचार्यकादेकपुरुषगामित्वेनाध्ययनमन्तरङ्गमिति तदर्थत्वसिद्धेः। यदि चैवं स्मार्तत्वाप्रत्ययानुरोधेनान्तरङ्गत्वं बाध्येत, ततो भवत्पक्षेऽध्यापनविधिप्रयुक्तस्याध्ययनविधेः किमधिकारपरत्वमिति चिन्तायाम् "अधीत्य स्नायाद्" इति स्मार्तस्नानप्रत्ययानुरोधेनान्तरङ्गत्वयुक्तेर्बाधादाचार्यकाधिकारपरत्वं स्यात्। अतोऽकर्नाधिमायविहितात्मनेपदबलादन्तरङ्गत्वयुक्तेश्चोपनयनमध्यापनाङ्गमिति कथमुपनयनाङ्गत्वादाचार्यकमलौकिकम्? अत "एतयान्नाद्यकामं याजयेद्" इत्यादाविव प्रयोजकव्यापारगतो विधिशब्दः प्रयोज्यव्यापारविधिपर एव।

यत्पुनर्वैपश्चिमनोक्तम्, "एतयान्नाद्यकामं याजयेद्" इति कामिन एव विध्यपेक्षया याजनमनुवादो युक्त इति। तदयुक्तम्; "निषादस्थपतिं याजयेद्" इत्यत्र कामिश्रवणाभावेऽपि प्रयोज्यव्यापारविधिपरत्वाङ्गीकरणात्। अत एवमादावन्यतः प्राप्तिरेवाऽविधेयत्वे हेतुः। स च प्रकृतेऽपि समान एव। एतेन

> "उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
> वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥"

इत्यादि वचनं व्याख्यातम्। स्मृत्यन्तरञ्च—

> "उपनीय ददद्वेदमाचार्यस्स उदाहृतः।"

इति क्रियायोगमेवाचार्यशब्दार्थत्वेन व्यक्तमुपदर्शयति। अतो नाचार्यविधिर्नाम कश्चित्।

---

१. बाध्यते, क. २. यो वेदमर्थाद्य. ग. घ. ३. स्याद्। अकर्त्रे. ख. घ. ४. दावदि. ग. ५. न्द्य. ग. घ ६ इति वचन. ग. ७. योगिन्नमे घ. ८. पनयति. ग.

किञ्च सत्यप्यध्यापनविधौ कुतस्तत्प्रयुक्तमध्ययनं न स्वविधि-प्रयुक्तम् ? अध्ययनविधौ नियोज्याभावादिति चेत्, कल्प्यतां तर्हि विश्व-जिदादिवन्नियोज्यः। नचानुष्ठानार्थत्वान्नियोज्यस्यान्यतस्तत्सिद्धौ न नियो-ज्याश्रयणमिति वाच्यम्; अनुष्ठानार्थत्वादधिकारस्य । अन्यतस्तत्सिद्धौ नाधिकाराश्रयणमित्यर्थबोधाधिकारासम्भवेन तन्मूलस्य मीमांसाश्रवणस्या-प्यसम्भवप्रसङ्गात् । अथान्यतोऽनुष्ठानलाभेऽपि विधित्वार्थमेवाधिकारा-पेक्षा । विधिर्हि प्रवृत्तिहेतुः कार्यरूपः। प्रवृत्तिहेतुत्वञ्च स्वसाधनैश्वर्योपाद-नक्षमत्वम्, ईश्वरस्य स्वत एव प्रवृत्तेः। अतोऽनुष्ठानलाभेऽपि प्रवर्तक-त्वमन्तरेण विधित्वमनिरूढमिति विधित्वसम्पत्तयेऽधिकारपर्युपासन-मिति चेत्, तर्ह्यन्यतोऽनुष्ठानलाभेऽपि कार्यार्थमेव नियोज्यापेक्षा। कार्यं हि कृत्युद्देश्यम्। उद्देश्यञ्च कस्यचिदेव किञ्चित्, न सर्वं सर्वस्य। अतोऽन्यतोऽनुष्ठाने सिद्धेऽपि कृत्युद्देश्यत्वमन्तरेण विधित्वमनिरूढमिति तदर्थंनियोज्यपर्यवसानम्। न च नियोज्याभावेऽप्याचार्यकृति प्रत्युद्देश्य-त्वादध्ययननियोगस्य कृत्युद्देश्यत्वमप्यस्तीति शङ्कनीयम्; आचार्यक-कामस्यातत्साधनेऽध्ययननियोगे कृत्युद्देश्यत्वासम्भवात्। अतः प्रया-जादिनियोगवदसत्यपि साक्षान्नियोज्ये स्वेष्टहितसाधनत्वेन कृत्युद्देश्यत्वा-सम्भवादर्थज्ञानस्य च विषयफलत्वेनातत्कामस्य नियोज्यत्वानुपपत्तेः, कृत्युद्देश्यत्वार्थमध्ययनविधौ नियोज्यः कल्प्य एवेति सनियोज्यत्वादध्य-यनस्य स्वविधिप्रयुक्तिरेव युक्ता।

किञ्चाध्ययनविधौ यदि नियोज्यो न भवेत्, कथन्तर्हि प्रत्युदस्य स्वाधिकारप्रयुक्तिमध्येऽधिकारश्च स्याताम् ? नहि नियोगसाधने कर्मण्य-

---

१. स्या. ■ घ. २. ज्यस्याभा ग. ३. प्रवृत्तिहेतुत्वञ्च स्वसाधनैश्वर्योपादन ईश्वरस्य. ग ४. वाप्ररते, ग. ५. अतोऽन्यतः. घ. ६. तर्ह्यतोऽनुष्ठा. घ. ७. न सर्वस्य. ग. ८. यत्ने नियोजकस्य ख. ९. सन्निहित. घ. १०. न तत्का. ख. ग. घ.

नियोज्यस्य नियोगप्रतिपत्त्यभावादैश्वर्यं सम्भवति, अनीश्वरश्च कथमध्ययनं विचारं वाऽनुतिष्ठेत्? न च प्रबुद्धस्य स्वविधिप्रयुक्तिर्मध्येऽधिकारश्च न स्त एवेति वाच्यम्, विधिपर्यवसानार्थमध्ययनात् परतो मीमांसातश्च पूर्वमवगतस्य स्वीकारान्मध्येऽधिकारो न व्यर्थो[3], तथा यदा नाचार्यो-ऽबुभूषुः तदा माणवकः स्वसंस्कारं द्विजातिकर्मानुगुणं प्रबुद्धः प्रयुङ्क्ते तद्धितार्थी चेत्युक्तत्वात्। अतस्तत्राध्ययने नियोज्यो वाङ्गीकरणीयः, नियोगसाधने कैर्मण्यनियोज्यस्याप्यधिकारो वाङ्गीकरणीय इति सिद्धम्। तथा च तद्धेत्वध्ययने नियोज्यो भवेत्, अनियोज्यस्याप्यधिकारो वा भवेत्, इति स्वाधिकारत एव प्रयुक्तिलाभात् किमध्यापनप्रयुक्ति-व्यसनेन।

किञ्च "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यात्मनेपदद्वितीयाभ्यामुप-नयनस्योपनेयसंस्कारत्वावगतेः संस्कर्तव्यस्य कर्तव्यापेक्षायामुपनयनं प्रकृत्य तमध्यापयेदिति प्रयोजकव्यापारगतस्यापि विधिशब्दस्य याजयेदिति-वदमात्रापेक्षितप्रयोज्यव्यापारविधिपरत्वावगमात् सोऽधीयीतेति वाक्यार्थ-निष्पत्तेरप्रवर्णो ब्राह्मणो नियोज्यः श्रुत एवेत्यश्रुतनियोज्यमध्यापन-मध्ययनविधिरेव प्रयुङ्क्ते। न च बालेनावगन्तुमशक्यत्वादध्ययनाधि-कारस्य, न तस्य प्रयोजकत्वम्, अपि तु त्वद्वदाचार्यावगतस्य कल्प्य-स्याध्यापनाधिकारस्यैवेति[13] वाच्यम्; हितकारिभिः पित्रादिभिरप्यनु-

---

१ प्राग्गतस्य घ २. वृथा। यदा घ ३ चार्योऽबुभूषु घ ४ गुण घ ५ कर्मणि नियोज्यो वाङ्गीकरणीय इति सिद्ध घ ६ नियोज्यस्या-प्यधिकारो वा भवेदिति स्वाधिकारत एव प्र० ख नियोज्यस्याधिकारो भवेदिति स्वाधि-कारत एव ग. नियोज्यो वा भवेत् अनियोज्यस्याप्यधिकारो वा भवेत् इति स्वाधि० घ ७ किमध्ययन ग किमध्यापनविधिप्रयुक्ति० घ ८ तद्धेत्व०. ख ९ स्याधि ग. १०. तस्य ■ घ ११ स न प्र ग स्य न तस्य० घ १२. चार्यगतस्य घ १३ स्यैवेति वाच्यम् ग. घ

संहितस्य माणवकाधिकारस्य प्रयोजकत्वेलाभात् । न चानुष्ठातैव प्रयोजको ज्ञातव्य इति वाच्यम्, अध्ययनाधिकारस्येवाध्यापनाधिकारस्यापि माणवकेनानवगतस्याप्रयोजकत्वप्रसङ्गात् ।

एतेन सोऽयन्तौन्मूलिकश्शास्त्रार्थ इत्यपास्तम्; उक्तेन न्यायेन तन्मूलत्वमन्तरेणापि शास्त्रार्थसिद्धेः । अपि च एकस्यां क्रियायां परस्परानुगुणस्य फलद्वयस्यानन्वयान्नियोगार्थस्याध्ययनस्याचार्यकमर्थबोधो वा न फलमिति, द्वयोरन्यतराधिकारपरत्वमभ्युपगम्य किमधिकारपरो विधिरिति सन्देह एवानुपपन्नः ।

नियोग एव फलम्, अर्थज्ञानन्त्वर्थप्राप्तमधिकारपर्यवसानाय विधिरनुमन्यत इति चेत्, तदसत्; अध्ययनार्थज्ञानयोः साध्यसाधनभावस्य शास्त्रार्थत्वे पूर्ववदेकस्यां क्रियायां परस्परानुगुणस्य फलद्वयस्यानन्वयः अध्ययनस्य नियोगार्थत्वे प्रधानकर्मत्वमर्थज्ञानार्थत्वे च संस्कारकर्मत्वमिति वैरूप्यञ्च स्यात् । अशास्त्रार्थत्वे तु न शास्त्रार्थस्य ज्ञानस्यैतदनुरोधादुत्कर्ष इत्युभयतस्पाशारज्जुप्राप्तेः ।

कथञ्चाध्ययनमात्रादपि सिध्यदध्यापनविधिविहितमेवाध्ययनं प्रयुञ्जीत? तस्यैव प्रकृतत्वादिति चेत्, तर्ह्यध्यापनविधिवाक्यप्रवृत्तिरध्ययनविधिवाक्यप्रवृत्तिपूर्विकैवेति मूलमूलिभावस्य वैपरीत्यप्रसङ्गः । तस्मादाचार्योक्तावेव पूर्वोत्तरपक्षौ युक्तियुक्ताविति सर्वमवदातम् ॥

इत्यध्ययनविधिवादः प्रथमः समाप्तः ।

---

१. त्याभावात्. ग. प्रयोजनलाभात्. घ. २. नावगतस्य, घ.
३. न्तान्मूलिकशास्त्रार्थसिद्धेः. घ. ४. र्थावबो. ग. ५. वा फलमिति. घ.
६. वाध्यापनं. घ. ७. त्तिपूर्विकैवाध्ययनविधिवाक्यप्रवृत्तीति मूल. ग.

[ कार्यवादः । ]

कृत्या साध्यं तत्प्रधानञ्च कार्यं
मानैरन्यैरप्यदृष्टं लिङर्थः ।
तच्चीर्णाङ्गं तच्च भावार्थसाध्या-
दित्याहुर्ये वक्ष्यते तन्निरासः ॥

अत्र हि प्राभाकराः कार्यस्यैव प्रवर्तकत्वमाचक्षाणाः प्रवर्तकवाक्ये-ष्वेव व्युत्पत्तिरिति निबध्नन्तः तदनुरोधेन कार्यान्वितस्वार्थाभिधानमितरेषा-मर्थान्तरान्वितकार्याभिधानञ्च लिङादीनामिति वर्णयन्तः स्वर्गकामपद-समभिव्याहारात् क्रियोत्तीर्णमपूर्वमेव मुख्यो लिङाद्यर्थः, क्रियारूपन्तु लक्षणयेति व्यवस्थां प्रतिपेदिरे ।

तत्र तावत् प्रवर्तकत्वेनाभिमतं किमिदं कार्यं नाम? कृतिसाध्यं कृतिं प्रति प्रधानमिति चेत्, किं पुनः प्राधान्यम्? यदि तदुद्देशेन कृतेः प्रवृत्तिस्तर्हि, मधुबोधाद्विषपाने प्रवृत्तस्य विषपानमपि कार्यं स्यात्; तदुद्देशेन कृतेः प्रवृत्तेः । न च तदस्य कार्यम्; नेदं कार्यमकार्यमेव तदुद्दिश्य मोहादहं प्रवृत्त इत्युत्तरकालमनुसन्धानात् । कथञ्च प्रवृत्ति-कारणनिरूपणावसरे प्रवृत्तिस्तस्या कारणम्? आत्माश्रयप्रसङ्गात् । अथ तदुद्देशेन कृतेः प्रवृत्त्यर्हत्वं प्राधान्यम्; तर्हि तदिष्टोपायतावबोधकार्य-समवायिकृतिविशेषजन्यत्वाच्चान्यदिति कथं कृतिविशेषजन्यत्वादन्यत् प्राधान्यं स्यात्? किञ्च नैत्र प्रमाणं न तावदनुमानादीनि; तत्प्रतिबद्ध-

---

१. रस्य दृष्टं. ग २. व हि प्रव. घ ३. कार्यम्; अकार्यमेव तदुद्दिश्य. घ. ४. तत्प्रमाणं. घ. ५. बन्धलिङ्गा. ग.

लिङ्गाद्यसम्भवात्, अनभ्युपगमाच्च। नापि प्रत्यक्षम्; कृत्यर्हत्वस्य कृतियोग्यपर्यायत्वात्, तस्य च प्रत्यक्षानर्हत्वात्। किञ्च प्रत्यक्षमपि न चक्षुरादिकं कृतिप्राधान्यं गोचरयतीति मानसमभ्युपगमनीयम्। मनश्च न बाह्यस्य कृतिप्राधान्यं गोचरयति; तस्य बहिरस्वातन्त्र्यात्। नापि सुखादेः; आन्तरस्य संयुक्तसमवेतसमवायस्यानभ्युपगमात्, अन्यस्य च सन्निकर्षस्याभावात्।

एतेन कृतिगतमेवोद्देश्यप्रतियोगिकं शेषत्वं प्राधान्यमित्यपास्तम्; उक्तेन क्रमेण तत्रापि प्राधान्यस्य दुरवगमत्वात्।

ननु यदाकारं वस्तु प्रतिपद्य पुंसां प्रवृत्तिः तदौत्सुक्यं वा जायते तदाकारयोगित्वमेव तस्य प्राधान्यम्; तच्च तदाकारावेदकप्रमाणेनैव शक्यावगममिति न तत्र प्रमाणाभावोऽपि। मैवम्। एवं हि फलं तत्साधनं चाधिगम्य तत्र प्रवृत्तिः तदौत्सुक्यं वा जायत इति न तदतिरिक्तकार्यसिद्धिः। अथ फलतत्साधनयोः परस्परव्यभिचाराद्ययानुगतं प्रयोजनत्वमेव कार्यत्वं, तर्हि तस्मान्यदभिलषणीयत्वादिति कथं तदतिरिक्तकार्यसिद्धिः? अस्तु तदेव कार्यमिति चेत्, न; तन्मात्रस्य प्रवर्तकत्वानुपपत्तेः, अप्रवर्तकस्य च कार्यत्वानभ्युपगमात्। तन्मात्रस्य कुतो न प्रवर्तकत्वमिति चेत्, सुखदुःखाभावयोः स्वात्मन्यप्रवर्तकत्वादिति ब्रूमः। न च तयोः स्वात्मन्यप्रवर्तकत्वेऽपि सोपाये प्रवर्तकत्वमिति वाच्यम्; अनव-

---

१. पर्यवसायित्वात्- ग. २. रादि कृति- ग. ३. रयतीति- ग. ४. शेषित्वं. ग. ५. मात्- ख- ग. ६. वावगम्य- ग. ७. गतत्वं प्रयो-. क. ८. र्हि न तस्मा-. क. ९. कत्वस्य. ख. १०. योरात्मन्य-. ख. ११. योरेव स्वात्मनि प्रवर्तकत्वाभावेऽपि. ख. यो. स्वात्मन्याहत्य प्र-. घ. योः स्वात्मनि अप्रवर्तकत्वेऽपि- ध.

गवतदुपायमात्रस्यापि तदुपाये प्रवृत्तिप्रसङ्गात् । अथ फलोपायता-ज्ञानमपि कारणम्; तर्हि तदेवास्तु कृतमितरैरिति सुनिरूपितः कार्यवादः। ननु नोपायमात्रं प्रवर्तकम्; अनिष्टोपायेऽपि तत्प्रसङ्गात्। फलावच्छिन्नस्य तु प्रवर्तकत्वे फलस्यापि प्रवर्तकत्वमेव। सत्यम्। वयमपि फलमात्रस्य प्रवर्तकत्वमेव निषेधयामः, न तु प्रवर्तकोपायावच्छेदकत्वेनापि फलस्य प्रवर्तकत्वं, इति न तदतिरिक्तं कृत्युद्देश्यत्वं नाम किञ्चित्।

स्यादेतत्— अस्ति तावन्ममेदं कार्यमिति धीः, न चेयं कृति-साध्यतामात्रविषया; दुःखतत्साधनयोरपि कार्यबुद्धिविषयत्वप्रसङ्गात्। नापि फलोपायत्वविषया; कृत्ययोग्येषु फलोपायेष्वपि कार्यबुद्ध्यनु-त्पादात्। न च फलत्वं विषयः; फलसाधनेऽपि तद्बुद्धिदर्शनात्। नाप्य-भिलषितत्वम्; मलयमारुतादेरभिलषितस्यापि कार्यबुद्धिविषयत्वा-भावात्। अतः पूर्वोक्तकृतिसाध्यत्वाद्याकारातिरिक्तमेव किमपि कार्यधीवि-षयमङ्गीकरणीयमिति। तदयुक्तं; यन्ममेदं कार्यमिति चिकीर्षैवेयम्, न धीभेदः।

यत् पुनः कार्यधियमन्तरेण चिकीर्षैव नोदेति; कृतिसाध्यत्वादि-बोधस्यानन्तरोक्तक्रमेण तदजनकत्वादिति मतम्, तदयुक्तं; कृति-साध्येष्टोपायताबोधस्य चिकीर्षोत्पत्तिहेतुत्वस्थितेः। अतो न पराभिमतं कार्यं नाम किञ्चित्। अस्तु वा, तथापि कथं तत्रैव शब्दानां व्युत्पत्तिः? ननु गामानयेति प्रयोजकवृद्धवाक्यश्रवणात् प्रयोज्यवृद्धस्य प्रवृत्तिमुपलभ्य तस्याः स्वात्मनि कार्यबोधाधीनतावधारणात् प्रवृत्तिहेतुत्वेन कार्यधिय-मनुमाय, तत्कारणगवेषणायामन्यस्याप्रतीतेः शब्दस्य च दृष्टत्वात् तस्यैव

१. कत्वमपीति. ग. २. फलतु. ख. ग. ३. त्वमपि. ग. ४. स्यापि. ख. ५. तेस्तस्यैक. ख. ग.

हेतुत्वं कल्पयन्नावापोद्वापाभ्यां[1] गवादेः कार्यान्वितस्वार्थाभिधायित्वं लिङादेरर्थान्तरान्वितकार्याभिधायित्वञ्च निश्चिन्वन्, वेदे स्वर्गकामपद-समभिव्याहारात् क्रियोत्तीर्णमपूर्वमेव मुख्यो लिङाद्यर्थ इति व्युत्पद्यते, सेयं लोकप्रारम्भा वेदावसाना व्युत्पत्तिरिति। तदसारम्,

व्युत्पत्तिलाभात् सिद्धेऽर्थे क्रियायाः कार्यतान्वयात्।
कामिनोऽनन्वयाभावादपूर्वानभिधानतः॥

लभ्यत एव सिद्धेऽप्यर्थे पदानां व्युत्पत्तिः। पुत्रजन्म दृष्ट्वा तन्नि-वेदनाय धावन्तं भृत्यमनुधावन् पुत्रस्ते जात इति भृत्यवचनानन्तरं पितुर्मुखविकासं पश्यन् तस्य प्रियार्थप्रतीतिहेतुत्वमवधारयन्, स्वस्मिन्निव परस्मिन्नपि वदनविकासहेतुत्वेन प्रियार्थप्रतीतेरनुमानात्, तस्याश्च कादाचित्कत्वेन स्वात्मनि हेत्वपेक्षायां स्वात्मनि पुत्रजन्मनो हर्षहेतुत्वा-वधारणात्, अन्यस्य[2] च हर्षहेतोरनुपलम्भात्, पुत्रजन्मनश्च[3] दृष्टत्वात् तस्यैव हर्षहेतुत्वमवधारयन्, तद्बोधसाधनत्वेनान्यस्यानुपलब्धेः, वच-नस्य[4] दृष्टत्वात् तस्यैव तदुपायत्वमवधारयन्नावापोद्वापाभ्यां[5] पुत्राद्यर्थे पुत्रादिपदं व्युत्पद्यत[6] इति। न च हर्षहेतुबोधकत्वेनादृष्टादेरपि शक्यत्व-त्वाद्वचनस्य तद्बोधकत्वं दुरवगममिति वाच्यम्; गामानयेति प्रवर्तक-वाक्येऽपि प्रवृत्तिहेतोः कार्यबोधस्यादृष्टाद्यधीनत्वशङ्कया वचनजन्यत्व-निश्चयाभावप्रसङ्गात्।

---

१. पोद्वाराभ्यां. ख. ग. २ च् भिद्धते. ग. ३ स्य हर्ष. ग. ४. स्य च, दृष्ट. घ. ५. पोद्वाराभ्या. ग. ६. त्पद्यत इति. ग.

अथ गामानयेति वाक्यप्रयोगे सति गवानयनकार्यबोधस्यासकृदुपलब्धेर्दृष्टस्य चान्यस्य तद्धेतोः सर्वत्राननुगतस्यादर्शनाददृष्टहेतुसम्भवे चादृष्टहेतुकल्पनानुपपत्तेः वचनस्य हेतुत्वं कल्प्यम्। तर्हि तेनैव क्रमेण हर्षहेतुबोधोत्पादकत्वमपि पुत्रस्ते जात इति वचनस्य सुतरां कल्प्यम्।

यत्पुनर्गवानयनविषयायाः प्रवृत्तेस्तत्कार्यबोधनियतत्वादुक्तं तथा तदनुमानम्, मुखविकासस्य तु पुत्रजन्मलक्षणहर्षहेतुविशेषप्रतीत्या नियमानुपलम्भात् कथं ततस्तदनुमानं? प्रियासुखप्रसवादेर्दृष्टस्यापि हर्षहेतोरनेकस्यापि सम्भवात् परिशेषासिद्धिरिति। तन्मन्दः पूर्वोक्तेन नयेन हर्षहेतुप्रतीतेर्भृत्यवाक्यजन्यत्वास्थितौ सामान्यतस्तावत् पदानां सिद्धार्थत्वस्यावगतत्वात्, प्रियासुखप्रसवादिव्यतिरेकेऽपि भूयो भूयः पुत्रजन्मनिवेदनप्रवृत्तभृत्यप्रयुक्ततद्वाक्यश्रवणानुविधायिनो वदनविकासस्य पुत्रजन्मलक्षणहर्षहेतुविशेषप्रतीतिजन्यत्वस्य सुपरिशेषत्वाच्च। यदि चैवमप्यदृष्टहेतुशङ्कया परिशेषाभावः, तर्हि कार्यधियोऽप्यदृष्टहेतुशङ्कया गामानयेत्यादिवाक्यजन्यत्वपरिशेषो न स्यात्। किञ्च गामानयेत्यादिवाक्यश्रवणात् प्रयोज्यवृद्धे प्रवृत्तिमुपलभ्य तद्धेतुपरिशेषस्य सतो दुष्करत्वेऽप्यात्मनि स्वतन्त्रप्रवृत्तेः कार्यबोधाधीनत्वनिश्चयात् कार्यबोधमेव तद्धेतुत्वेनावगच्छतीति वाच्यम्, अन्यथा परिशेषानुपपत्तेर्हेत्वभावः, वाक्यस्यैव वा कादाचित्कस्याहत्य प्रवृत्तिहेतुत्वं चेति प्रसङ्गात्। तथा च कार्यबोधस्यात्मनि समीहितोपायताबोधाधीनत्वानिश्चयात् परगतस्यापि कार्य-

---

१. स्यतो- घ. २. स्य तत्पुत्रजन्म. घ. ३. त कथं परिशेषासिद्धिरिति. ख. परितोषासिद्धिरिति. ग. ४. सुकरपरि. ख. ग. ५. शङ्कया. घ. ६. दिवचनज, ख. वचनमन्यस्य परि०. ग. ७. येति वाक्य- ख ग. ८. भृत्यो. ग. ९. वः, एवं वाक्य. ख. १०. च कादा. घ. ११. त्वं चेति न इति. ग

बोधस्य समीहितोपायताबोधमेव हेतुत्वेन निश्चिनोतीति[1] तद्बोधस्यानन्य-हेतुत्वात् तत्रैव पदानां शक्तिं कल्पयेत्; शब्दार्थस्यानन्यलभ्यत्वस्थितेः[2]। न चेष्टोपायताबोधाधीनत्वं[3] कार्यबोधस्यानभ्युपगतम्; इष्टोपायताधिया हि ममेदं[4] कार्यमिति बुद्ध्वा तत्र प्रवर्तत इत्युक्तत्वात्, कामिनियोज्यक्रिया-कार्ययोर्वैधुर्याभावेन[5] तन्निबन्धनापूर्वव्युत्पत्तिभङ्गप्रसङ्गाच्च। कथञ्च प्रवर्तक-वाक्येभ्यो भवन्ती[6] कार्यान्वितधीर्लिङादिसन्निधानादेवाकाङ्क्षादिप्रकल्पि-तार्थान्तरान्वितस्वार्थाभिधानमात्रगोचरस्यापि पदशक्त्या सम्भवन्ती[7] कार्यरूपं विशेषणमपि शक्यकोटौ निवेशयेत्, कथन्तरां लाघवस्यैवैकरूपत्वस्या-प्यननुग्राहकस्य कार्यान्वितस्वार्थाभिधानमितरेषामर्थान्तरान्वितकार्याभिधा-नञ्च लिङादेरिति[8], शक्तेर्गौरवमिव वैरूप्यमपि प्रतिकूलमङ्गीकारयेत्?

यत्पुनः कार्यान्वित एव धीदर्शनात् तदन्वित एव शक्तिः, नहि वह्निजातीयनिमित्ते फले द्रव्यमात्रे शक्तिरित्यवादि; तन्मन्दम्। तत्र हि द्रव्यमात्रगोचरतया क्लृप्तायामपि शक्तौ वह्निफलस्य दाहादेः वह्निमन्तरेण-द्रव्यमात्रादनुपपत्तेः तत्रापि शक्तौ कल्प्यायां लाघवात्तत्रैव शक्तिः, न द्रव्यमात्र इति युक्तम्। इह तु कार्यान्विताभिधानस्य पदानामर्था-न्तरान्वितस्वार्थाभिधानमात्रगोचरतया[9] शक्त्योपपत्तेर्न युक्तं विशिष्टशक्ति कल्पनमिति। भवतु वा कार्यान्विते पदानां शक्तिः, तथापि कथं सर्वत्र क्रियाया एव[10] कार्यत्वेनान्वयात्तदुचीर्णमपूर्वं लिङाद्यर्थः स्यात्? क्रियाकार्यस्य क्षणभङ्गुरत्वेन काम्यमानानुपायस्य स्वर्गकामनियोज्या-न्वयानुपपत्तेः क्रियोचीर्णमपूर्वमेव मुख्यो लिङाद्यर्थ इति चेत्, नैवम्;

---

१. नोति ख. ग. २. स्यानन्यलभ्यत्वात्तत्रैव. घ. ३. धाधीनत्वं, ग. ४. या ममेदं. क. ख. ५. वैधुर्याभावेन. घ. ६. भावे ख. क. ख. ७. जादिनि. घ. ८. ति, तदयुक्तं. क. ९. रतया. ख. १०. सर्वक्रियाया एव. ख.

यथा गोशब्दस्य गोत्वमात्रे शक्तस्य परिच्छिन्नतरतच्चव्यक्तिबोधेऽपि व्यक्ति विशेषपर्यन्तबोधाधायकत्वं प्रतीत्यपर्यवसानलभ्यं न स्वशक्त्यपेक्षं, एवं लिङादेरपि क्रियारूपमुन्मुच्य स्थिरास्थिरसाधारणकार्यमात्रे शक्तिग्रहात् क्रियारूपविशेषबोधेऽपि स्थायिकार्यविशेषस्य कार्यप्रतीत्यपर्यवसान-लभ्यतया स्थायित्वस्य लिङाद्यनभिधेयत्वापत्तेः। नियोज्यान्वयवैयर्थ्यं हि नियोगस्य शब्दार्थप्रतीतिविषयतया समाधेयं, न पुनः शक्ति प्रतियोगितया। तथा च लोके क्रियाकार्येऽपि लिङादिर्मुख्य एव स्यात्। युक्तञ्चैतत्। अन्यथा लौकिकवाक्येषु मुख्यार्थस्य पदस्या-भावादमुख्यार्थस्य चानभिधानात् अभिधानमेव पदानामव्युत्पन्नमिति वेदे लिङादेः कामिनियोज्यान्वितकार्याभिधानवैरस्यानवगतेः तन्मूला स्थायिकार्ये व्युत्पत्तिरपि भज्येत इति व्युत्पत्तिविरहादनभिधानमेव लोकवेदयोरिति स्यात्।

यत्पुनर्लिङादिव्यतिरिक्तानां पदानां स्थिरास्थिरसाधारणकार्य-मात्रे शक्तिरिति स्वीकारात् गामानयेत्यादिषु गवादिपदानां मुख्यार्थत्वेनान्विताभिधानव्युत्पत्तिरिति। तदयुक्तम्; एकेनैव प्रयोजकेन प्रथमप्रवृत्तेषु कस्यचित् स्थायिकार्यं मुख्योऽर्थः कस्यचित् कार्यमात्र-मिति विवेकस्य दुरभ्यूहत्वात्। नियोज्यान्वयवैयर्थ्यस्य च लिङादेः कार्यमात्रे शक्तत्वेऽपि पूर्वोक्तनयेन सुपरिहरत्वात्। कथञ्च मानान्तरा-गोचरे लिङादेः सम्बन्धिग्रहणनिबन्धना सम्बन्धावगतिः स्यात्? लिङा

---

१ तवर म ग　२ तथ घ　३ यातेज़र ग　४ वैयर्थ्यमपि नियोगस्य घ　५. वात् मुख्या घ.　६ स्याभिधानमात्रात् ग　७ न वैयर्थ्या घ.　८. कार्यांव्यु क　कार्येऽपि व्युत्पत्तिरपि घ　९ वैरस्यञ्च च घ　१०. नः सम्बन्ध- क ग. सम्बन्धावगम- घ

दिभिरेवावगतावन्योन्याश्रयप्रसङ्गात् । मानान्तरेणावगतौ मानान्तरापूर्वव्याकोपात् ।

यत्तु विमर्शारूढे स्थायिन्यर्थे व्युत्पत्तिरिति, तदयुक्तम् । विमर्शो नाम कश्चिदन्यतरकोटिपक्षपाती सन्देहविशेषः नूनमिदमेवमिति, न पुनरेवमेवेति नियमरूपः; तद्रूपत्वे तस्य संस्कारानधीनत्वेन प्रामाण्यप्रसङ्गात् । अतः स्थायिनि विमृष्टे सम्बन्धो विमृष्ट एव स्यात्, न तु निश्चितः; सम्बन्धनिश्चयस्य सम्बन्धिनिश्चयाधीनत्वात् । किञ्च यागक्रियायाः कार्यत्वं तावदवश्याभ्युपगन्तव्यम्; अन्यथा तत्र कार्यबोधाभावे तन्निबन्धनानुष्ठानस्याप्यसम्भवप्रसङ्गात् । अस्तु यागः कार्य इति चेत्, तत्र प्रष्टव्यम्—किं नियोगप्रसूतस्तत्र कार्यबोधः, किं वा फलप्रसूत इति । न तावत् नियोगप्रसूतः, काम्येषु करणस्यापि विध्यनुष्ठाप्यत्वप्रसङ्गात् । नापि फलप्रसूतः, क्षणभङ्गिनो यागस्य फलसाधनत्वानुपपत्तेः । न च स्वर्गसाधनापूर्वसाधनत्वात् कार्यत्वम्; साधनसाधने साध्यार्थिनः कार्यबोधानुत्पादात् । उत्पत्तौ वा विमर्शस्येन स्थायिना साधनसाधनत्वेन यागेऽपि कामिनः कार्यबोधो जायत इति पूर्वावगतक्रियाकार्यव्युत्पत्त्यनुसारेण क्रियाकार्यस्यैव लिङाद्यभिधेयत्वप्रसङ्गात् । अतः कामाधिकारवाक्येषु फलप्रसूतत्वाद्यागकर्तव्यत्वस्य यागस्वर्गयोः साध्यसाधनभावो वा साधनसाधनेऽपि साध्यार्थिनः कार्यबोधो वाङ्गीकरणीय इति न यागातिरिक्तस्य लिङ्र्थाभिधेयत्वसिद्धिः ।

---

१. मर्गारूढे. म. २ मार्गो हि नाग. ग. ३. ति हि सम्भवति. ख. ति सम्भवति. ग. ति हि भवति. घ. ४. गमनीयम् . ग. ५. कार्यमिति चेत्. म. घ. ६. का. ग. ७. स्यादे वा वि. ख. ८. स्वत्ताधनि, घ. ८. नसाधनेऽपि साध्यार्थिनः कार्यबोधो वा. घ. ९. मा. ग. १०. द्यभि, क. ख, घ.

अपि च, यदि विप्रकृष्टकालत्वान्न स्वर्गस्य यागसाध्यत्वं[1][2], तर्हि माध्यो-दीच्याद्यङ्गसव्यपेक्षतया विप्रकृष्टकालस्याधिकारापूर्वस्याग्नेयादिरसाधनं स्यात्। असाधनमेव, तस्य करणत्वादिति चेत् न; करणत्वस्य साधनत्वावान्तरविशेषत्वात् सामान्यनिवृत्तौ करणत्वस्यापि निवृत्तिप्रसङ्गात् स्वर्गं प्रति यागेऽपि तस्य सुवचत्वाच्च। अधिकारापूर्वं प्रत्युत्पत्त्यपूर्वाण्येव करणानि, आग्नेयादयस्तु करणमपि न[3] सम्भवन्तीति चेत्, नैवम्; नियोगं प्रति विषयभूतस्यैव तत्करणत्वमिति नियमाभावप्रसङ्गात्।[4] अवान्तरापूर्वाण्येवाधिकारापूर्वस्य विषयोऽपि इति चेन्न, नैवम्; कामाधिकारवाक्ये[5] हि कामिनियोज्यान्वयवैधेय्यालिङादेरपूर्वाभिधानप्युत्पत्तौ सिद्धायां आग्नेयादिवाक्यैरुत्पत्त्यपूर्वाण्यभिधेयानि, ततश्च करणीभूतस्यैव[6] विषयत्वाच्चेषां करणत्वमालोच्य सविषयाधिकारनियोगप्रतिपत्तिरिति[7][8] परस्पराश्रयचक्रकयोः प्रसङ्गात्। अतः प्रत्ययार्थमधिकारापूर्वं प्रति प्रकृत्यर्थस्य यागस्यैव विषयत्वात्, तस्य च करणीभूतस्यैव तत्त्वात् आग्नेयादिः करणीभूत इत्यभ्युपगमनीयम्। तथा च तद्वदेव यागस्य स्वर्गं प्रत्यपि करणत्वं प्रतिपन्नं[9] करणत्वनिर्वाहाय उत्पत्त्यपूर्ववत् परमापूर्वकल्पनञ्च सम्पत्स्यत इति कथं तस्य मानान्तरापूर्वत्वं[10][11] सिद्धार्थत्वं वा?

यत्पुनरधिकारापूर्वस्याग्नेयादिसाध्यत्वञ्चात्यन्तमयोग्य, तस्य तदनन्तरमुत्पत्तेरपि सम्भावितत्वात्, स्वर्गस्य तु यागसाध्यत्वमत्यन्तमयोग्यं; तस्य कालान्तरभावित्वेन प्रसिद्धत्वादिति वैषम्यमुक्तं[12];

---

१. साधनत्व, तर्हि. घ २ त्वं कथन्तर्हि ग ३. न भवन्तीति. ग. ४. भीभूत ख. ग ५ वैधल्यालिङादेः घ ६ तस्य विषयत्वात् ग. ७ कार. घ. ८. रप्रतिपत्तिरिति. ख घ ९. यो (जप ? ज) नप्रतिपत्तिरिति ग १०. कारणत्व, घ. ११ ग वा। यत्पुन. १२. मुक्तम्। स्वर्गस्यापि. ख ग,

तदयुक्तम्। स्वर्गस्यापि कालदेशदेहैर्विप्रकृष्टत्वमर्थवादेतिहासपुराणपर्यालोचनाधीनमिति तदनालोचयतां न यागानन्तरजत्वमयोग्यम्। अपूर्वस्यापि स्थिरकृदाद्युत्तराङ्गसव्यपेक्षतया विप्रकृष्टकालत्वमालोचयतामाग्नेयाद्यनन्तरजत्वमसम्भावितमिति सम्भावनासम्भावनयोरुभयत्र तुल्यत्वात्। अवश्याभ्युपगमनीयञ्च तथावगोरणस्य नरकपातसाधनत्वम्। नहि तत्र प्रत्यवायापूर्वस्य शब्दाभिधेयत्वं क्लृप्तं, येन तस्यैव नरकपातसाधनत्वं, अवगोरणस्य त्वपूर्वसाधनत्वमेवेत्युच्येत। किन्तु कल्प्यं, कल्पकञ्च न स्यात् अतो नरकपातस्यावगोरणसाध्यत्वात्।

यत्पुनः कामाधिकारवाक्येषु प्रथममपूर्वप्रतिपत्तेर्विमृश्यमानापूर्वद्वारमेवगोरणस्य नरकपातसाधनत्वं सुबोधं, कामाधिकारवाक्येषु प्रथममनपेक्षापूर्वप्रतिपत्तेस्तद्द्वारमपि यागस्य स्वर्गसाधनत्वं दुर्बोधमिति। तन्मन्दं; कामाधिकारवाक्येष्वपि लिङादेरपूर्वव्युत्पत्त्यर्थं कामिनियोज्यान्वयवैयर्थ्यतोऽपूर्वविमर्शस्य प्रथममभ्युपगतत्वात् तद्द्वारेण यागस्यापि स्वर्गसाधनत्वोपपत्तेः, परस्परानपेक्षवाक्यद्वयप्रवृत्तौ पौर्वापर्यनियमानुपपत्तेश्च। किञ्च यदि विप्रकृष्टकालसाध्यत्वात् स्वर्गो न यागसाध्यः, तर्हि क्षणभङ्गिन्याः कृतेर्विप्रकृष्टकालत्वात् अपूर्वं न साध्यमिति कृतिसाध्यत्वलक्षणं कार्यत्वमेव भज्येत। यागावान्तरापूर्वद्वारेण तु तस्य साध्यत्वे स्वर्गस्याप्यधिकारापूर्वद्वारा यागसाध्यत्वमिति सर्वं समानम्।

ननु यदि कार्यं न प्रवर्तकं न च तल्लिङाद्यर्थः, किन्तर्हि प्रवर्तकं लिङाद्यर्थः? उच्यते—

---

१. यागान्तर. घ. २. द्वयोर्विप्रकृ. ग. ३. त सम्भावनासम्भावन. घ. ४. त्वादिति। अवश्या. ग. ५. त्व, येन ख. ६. मार्गस्य. ग. ७. त्वानुपपत्तेः क. घ. ८. 'सेः। किञ्च ख. ग. ९. न यागसाध्यत्वमिति स्वर्ग. घ. १०. द्वारेण. ग. ११. न तल्लिङाद्यर्थः. ख. ग.

प्रवृत्तिहेतुः सर्वेषां कर्तव्यत्वैकसंश्रया ।
इष्टाभ्युपायता सैव लिङाद्यर्थो विधिर्मतः ॥

यदवगतं हि प्रवृत्तिं जनयति, तत् प्रवर्तकम् । इष्टोपायत्वं चावगतं प्रवृत्तिं जनयति । न च फलैर्व्यभिचारः, फलप्रवर्तकत्वस्य कार्यप्रवर्तकत्व-निरासवेलायामेव निरस्तत्वात् । न चेष्टोपायत्वस्य भूतादौ प्रवृत्त्य-जनकत्वात् अप्रवर्तकत्वं, कर्तव्यत्वैकार्थसमवायित्वेन विशेषणात् । अतः शब्दतद्व्यापारयोरन्यत्र प्रवृत्तिहेतुत्वाभावादिहैव तयोरन्यतरस्य प्रवृत्तिहेतुत्वकल्पनं दृष्टानुसारविरुद्धं गौरवाय चेति तयोरप्रवर्तकत्वात्, इच्छायाश्चोत्पत्तित एव प्रवर्तकत्वात्, कार्यफलयोः प्रवर्तकत्वस्य प्रागेव परास्तत्वात् । समीहितोपायता कर्तव्यत्वैकार्थसमवायित्वेन ज्ञाता सर्वत्र प्रवर्तिका, सैव च विधौ विहितस्य लिङादेरभिधेया इति सिद्धम् । अत एव—

श्येनस्वरूपं नानर्थस्तत्फलस्य त्वनर्थता ।

इत्युक्तं; श्येनस्वरूपस्य समीहितोपायतया लिङभिधेयस्य विधेयत्वादनर्थत्वानुपपत्तेः । ननु न विधेयः श्येनः तस्य विध्य-नुष्ठाप्यत्वाभावात् । यस्य हि विधिः स्वसिद्ध्यर्थमनुष्ठानमाक्षिपति तद्विधेयम् । काम्ये च फलार्थ एवानुष्ठानसिद्धौ विध्यनुष्ठाप्यत्वा-भावात् । नैवम्; एवं सति काम्येष्वङ्गानुष्ठानस्याऽपि फलप्रयु-क्ततया विधेयत्वाभावात् अग्नीषोमीयहिंसायामप्यधर्मत्वापत्तेः । अङ्गानां फलसाधनत्वस्यानवगतत्वात् । तत्र न फलमनुष्ठापकमिति चेत्, न; करणेऽपि संभवात् । अथ कृतितत्साध्यमध्यस्थस्य

१. त्वेन संश्रया. ग. २. यत प्रवृत्ति. घ. ३. फले. घ. ४. न च भूतादौ. ख. ग. ५. तयो. प्रवर्त. घ. ६. दनर्थनारत्ते घ ७. स्वविध्यर्थ. ग. ८. तथैवानु. घ. ९. वं काम्येषु. ख. १०. समानत्वात्. ग. ११. भ्यागादे. घ.

यागादेर्विषयत्वात्, तस्य च कामिकार्ये काम्यमानोपायत्वेनावगतस्यैव कामिकृतिव्याप्यतया विषयत्वात् प्रथमतः कामोपायत्वे प्रतिपन्ने तदेव तत्र प्रवर्तकमिति मतम्, तर्हि तत्र प्रष्टव्यं; किमङ्गोपेतस्य प्रधानस्य फलकरणत्वमुताङ्गविधुरस्य? इति। यद्यङ्गविधुरस्य तर्हि काम्येष्वङ्गविधुरस्य भावार्थमात्रस्यैव फलकरणत्वेन विधिविषयत्वात् कतिपयाङ्गविधुरेऽपि विषयविलयाभावान्नित्यकाम्यवैषम्यं न घटते। अथ अङ्गोपेतस्य भावार्थस्य फलकरणत्वं, तर्हि फलमेव करण इवाङ्गेऽप्यनुष्ठापकं इति श्येनाग्नीषोमीयविभागो भज्येत। इत्युभयतस्पाशा रज्जुः स्यात्। किञ्च—

> आकाङ्क्षासन्नियोग्यत्वैः पदार्थानां मिथोऽन्वयः।
> न च स्वर्गेण यागस्य त्रयमप्युपपद्यते॥

पदार्थानां हि परस्परान्वयस्तावदाकाङ्क्षादित्रयनिबन्धन इत्यविवादम्। तत्र यागस्वर्गयोरन्वये न त्रितयमप्यस्ति; यागस्वर्गयोर्नियोगस्यैव साध्यतया साधनतया च परस्परमाकाङ्क्षाभावात्, क्षणविनश्वरस्य यागस्य कालान्तरभाविस्वर्गसाधनायोग्यत्वात्, पदावयवभूतप्रत्ययेन साक्षात् साध्यत्वेनोपात्तादपूर्वात् नियोज्यविशेषणतया पदान्तरोपात्तस्य कल्प्यसाध्यभावस्य स्वर्गस्य विप्रकृष्टतरत्वाच्च। यदि चैवमपि यागस्वर्गयोः साध्यसाधनभावोऽभ्युपगम्यते ततोऽप्यगतस्वर्गोपायभावं यागमेव कामी कार्यतया बोद्धुमलमिति कामिनियोज्यान्वय-

१. लोपायत्वं. ख. ग. ड. लकारणत्वं. घ. २. न विषयत्वात्. घ. ■ ३. विरहेऽपि. ड. ४. ■ पूर्व. ग. ५. गम्येत. ड. ६. कामिकार्यतया. घ.

वैधत्वादपूर्वे व्युत्पत्तिशास्त्रस्याऽसवो भज्येरन्। अतो यागस्वर्गयोरुपायोपेयभावस्य दुरवगमत्वात् कथं तन्मूला करणेषु फलत प्रवृत्तिः? कथमन्तरामविन्यनुग्राह्यतया विधेयत्वाभावः? कथन्तमामविधेयत्वाच्छयेनस्य विधेयाग्नीषोमीयवैषम्यम्? नन्वग्नीषोमीयहिंसायाः विधेयत्वेऽपि सामान्यतो "न हिंस्याद्" इति निषिध्यमानत्वादधर्मत्वं स्यात्। न च पदाहवनीयन्यायेन सामान्यशास्त्रस्य बाधसङ्कोचयोरन्यतरसम्भवः; तयोर्विरोधमूलत्वात्। न च प्रकृते विरोधोऽस्ति; "न हिंस्याद्" इति सामान्यशास्त्रेण हिंसायाः प्रत्यवायहेतुत्वावगमेऽपि "अग्नीषोमीयं पशुमालभेत" इति विशेषशास्त्रत एव क्रतूपायत्वावगमस्याविरुद्धत्वात्। न च क्रतोः समीहितत्वात् समीहितक्रतूपायत्वं प्रत्यवायोपायत्वेन विरुध्यत इति वाच्यं, समीहितोपायस्यापि वेश्यासंवेशादेः प्रत्यवायोपायत्वावगमादिति। तदयुक्तम्। तथाहि—यद्यपि सामान्यविशेषशास्त्रयोः प्रत्यवायोपायत्वं क्रतूपायत्वञ्च विषय इति विषयभेदान्न[1] मितिवेलायां विरोधः, तथाप्यनुष्ठानपर्यन्तत्वाद्विधेस्तद्विरोधेऽपि विरोधो भवत्येव। न च नास्त्येवानुष्ठानविरोधोऽपीति वाच्यं, हिंसायाः क्रतूपायत्वावगमेऽपि प्रत्यवायोपायत्वावगतौ नियमेन तत्राप्रवृत्तेः। न च वेश्यासंवेशादाविव प्रवृत्तिरिति वाच्यम्; अतुल्यत्वात्। वेश्यासंवेशस्य हि सुखोपायत्वमन्वयव्यतिरेकावसेयत्वान्न सन्दिग्धं, नैतादात्विकञ्च। प्रत्यवायोपायत्वन्तु श्रुतिगम्यत्वादनतिश्रद्दधानानां सन्दिग्धं देहदेशकालैर्विप्रकृष्टञ्चेति विप्रकृष्टात् सन्दिग्धाच्च प्रत्यवायादसन्दिग्धं प्रत्यग्रञ्च सुखं बलवदिति युक्तं तस्य तत्र प्रवर्तकत्वम्। अग्नीषोमीयहिंसायाः क्रतूपायत्वं प्रत्यवायोपायत्वञ्च प्रमाणतो विप्रकर्षतश्च तुल्यमिति विषाविक्ते मधुनीव न तत्र चेतनस्य प्रवृत्तिः स्यात्। न च प्रत्यवायस्याल्पत्वं, क्रतुफलस्य

---

१. ति शास्त्रस्य ह २ पश्यप्रासि ॥ ३ मदोश स ह. ४. नातात्विकश्च ६. न तादात्विक च घ ५ २ वात् सन्दिग्धत्वाच ग. ६ स्य भू ह.

तु भूयस्त्वमित्यत्र प्रमाणमस्ति, येनाविगणय्य प्रत्यवायोपायत्वं क्रतवे यतेत। तस्मात् सामान्यविशेषशास्त्राभ्यामविशेषेण हिंसाया नरकोपायत्वं स्वर्गोपायत्वञ्चावधारितमिति न तत्र कश्चिदपि प्रवर्तेतेति भवत्येवानुष्ठानविरोध इति युक्तमेवं पदाहवनीयन्यायेन सामान्यस्य बाधाद्धर्मत्वमग्नीषोमीयहिंसायाः।

नन्वु "न हिंस्यात्" इति निषेधोऽनारभ्याधीतत्वात् पुरुषार्थः, स कथं क्रत्वर्थां हिंसां निषेधेत्, क्रत्वर्थहिंसानिषेधे क्रत्वर्थत्वप्रसङ्गात्। अनिषेधंश्च कथं विरुध्येत अविरुद्धश्च कथं बाध्येत? मैवम्; पुरुषार्थस्य निषेधस्य हिंसामात्रोद्देशेन प्रवृत्तेः। नचैवं क्रत्वर्थत्वापत्तिः; क्रतुप्रकरणानाम्नानात्। अग्रहणन्तु क्रतुप्रकरणाधीनत्वात् तदङ्गं, न क्रत्वङ्गग्रहणनिषेधरूपत्वात्। अन्यथा सर्वत्र निषेधस्य निषेध्यसाध्याङ्गत्वनियमे भोजनादिनानाप्रयोजनाङ्गं हिंसेति पुरुषार्थः तन्निषेधोऽपि भोजनाद्यङ्गं स्यादित्यलमतिदूरगमनेन। प्रकृतमनुसरामः।

> क्रियापूर्वाभिधायित्वं लिङादेर्यद्युपेयते।
> न हन्यादिति वाक्यस्य स्यादबोधकता तथ॥

यदि हि लिङादेः केवलस्य नञनुवेद्धस्य च कर्तव्यत्वैकार्थसमवेतमिष्टोपायत्वमनिष्टोपायत्वञ्चार्थं इत्यनभ्युपगम्य सर्वत्रापूर्वकार्यमेवार्थं इत्यङ्गीक्रियेत, ततो "न पिबेद्"इत्यादिषु निषेधशास्त्रेषु "यावज्जीवमग्निहोत्रं

१. वायत्वं. घ. २. यतते. ग. ३. ष्वावेदि ङ. ४. च यदा. घ. ५. धंः कथं. ग. ६. स्वर्गेन हिंस्यान्निषेधेत. ङ. ७. धे तत्त्वार्थं. क. ८. धेश्च कथं. घ. धांश्च ङ. ९. द्धंश्च. क. १०. णानधीतत्वात्. ख. नाम्नानात्. ग. ११. स्य साध्याङ्गत्वनियमे. घ. १२. ङ्गकत्व ख. १३. निरोधोऽपि. ग. १४. क्रियापूर्वाभिधायित्वं. ग. १५. थ.घ. घ. १६. येत. ग.

जुहोति"इत्येवमादिषु नैमित्तिकाधिकारेषु च सर्वथा कार्यार्थस्य दुरुपपादत्वात् अकार्यरूपस्य च शब्दार्थत्वानुपपत्तेः अबोधकत्वमेव तस्य स्यात्। नहि हिताहितप्राप्तिपरिहारतदुपायतातिविधुरस्य कार्यत्वं दुःखस्येव श्रुतिशतेनापि शक्यं बोधयितुम्; असमीहितस्य कृत्युद्देश्यत्वानुपपत्तेः अमुखस्यादुःखपरिहारस्यातत्साधनस्य च समीहितत्वानुपपत्तेः, व्यापकभूतसुखदुःखपरिहारतदुपायत्वनिवृत्तौ व्याप्यस्य समीहितत्वस्य निवृत्त्या तद्व्याप्यस्य कृत्युद्देश्यत्वस्यापि निवृत्तेः। न च निरपेक्षागमावसितकृत्युद्देश्यत्वबाधनाय व्याप्तिर्न प्रभवतीति वाच्यम्; वाक्यवृत्तिमूलस्य योग्यत्वस्यैवानुमानेन विघटितत्वात्। अन्यथा सहस्रसंवत्सरकर्तव्यत्वयोरन्योन्यान्वयायोग्यत्वबोधकस्य प्रमाणस्य तदन्वयावेदकेनागमेन विरुद्धार्थत्वात् सहस्रसंवत्सरपदं न मुख्यवृत्ति, किन्तु जघन्यवृत्त्या सहस्रदिवसपरमिति न स्यात्। प्रकृतिप्रत्यययोरेकपदत्वात् तद्योग्यत्वं न वाक्यार्थप्रत्ययं निरुणद्धीति चेत्, मैवं; प्रकृतिप्रत्यययोरेकपदत्वेऽपि तदर्थयोरन्वयानर्हत्वे तत्र व्युत्पत्त्यसम्भवेन पदार्थस्यैवाप्रतिपत्तेस्तन्मूलस्य वाक्यार्थप्रत्ययस्य सुतरामसम्भवात्। न च स्वर्गकामवाक्ये कामोपायत्वादपूर्वस्य लिङाद्यभिधेयत्वसिद्धौ नैमित्तिकनिषेधाधिकारयोरपि लिङादेस्तत्त्वेन प्रत्यभिज्ञानात् अपूर्वप्रतिपत्तिरिति वाच्यम्; एवं सति फलशिरस्कत्वादेवापूर्वस्य लिङाद्यभिधेयत्वव्युत्पत्तिः, नापरथेति नैमित्तिकनिषेधाधिकारयोरपि लिङादेस्तत्त्वेन प्रत्यभिज्ञानादपूर्वस्य फलशिरस्कत्वमेव स्यादिति नियोज्यवत् फलमपि नियोगप्रतिपत्तिनिर्वाहकमिति नियोज्या-

---

१. जुहुयादित्यादिषु ख. जुहोतीत्यादिषु. ग ङ. २. दुरुपपादकत्वादकार्यरूपत्वस्य च. ग. ३. कार्यार्थत्वं. ख. ङ. ४. त्तिः प्रभवतीति. ख. ग ङ. ५. र न मुख्यवृत्ति, किन्तु. ख ङ. ६ स्यार्थहानिः. घ.

भाव इव फलाभावे तत्र वेदस्याप्रामाण्यमेवेति प्रसङ्गात्। भवेतु वा फलरहितस्यापूर्वस्य यावज्जीवादिवाक्येषु कथञ्चिदभिधेयत्वम्। "न हन्यात्" "न पिबेत्" इत्यादिषु तु निषेधाधिकारेषु कथमस्यावगमः स्यात्? न हि निर्विषयो नियोगः प्रत्येतुं शक्यते। न च भावार्थादपरस्य विषयत्वम्। न च नञर्थो भावार्थः, तस्य प्रागभावरूपत्वात्। न च प्रागभावरूपस्यापि परिपालयत्वादिरूपेण कथञ्चित् साध्यत्वाद्दध्यादिवद्विधिविषयत्वमाशङ्कनीयं, परिपालनाद्यवच्छिन्नस्यापि प्रागभावस्य भावार्थत्वानुपपत्तेः। कृतिर्हि पुरुषप्रयत्नः, स च साध्यरूपमपि न वस्त्वन्तरं साक्षाद्व्याप्नोति, किन्तु यागादिरूपभावार्थमेवेति कृतिस्वभावालोचनया भावार्थादितरस्य कृतिव्याप्यत्वाभावादकृतिव्याप्यस्य च विधिविषयत्वानुपपत्तेः। दध्यादावपि दधिविभक्तस्य होमस्यैव विषयत्वं न होमविभक्तस्य दध्नः तथा। गोदोहनेऽपि तद्विभक्तस्य प्रणयनस्यैव विषयत्वम्। द्रव्यदेवतासम्बन्धस्तु भावार्थरूप एव यागप्रणादिकया कृतिव्याप्यो विषय इति सर्वथा भावार्थादितरस्य विषयत्वायोगः। न चात्रापि प्रागभावावच्छिन्नस्य पालनादेर्निवृत्तिमूलस्य प्रयत्नस्य भावार्थस्यैव विधिविषयत्वं; परिपालनादेर्भावार्थस्य नञर्थत्वानुपपत्तेः। प्रसक्तप्रतिषेधसम्भवेऽपि लक्षणाया अन्याय्यत्वात्। न्याय्यत्वे वा सर्वत्र

---

१. भावेऽपि. घ. २. फलतु. घ ३. षु निषे. घ. ४ न निर्विषयो. क. न हि निर्विषयो निषेध प्रत्येतु शक्य - ग न हि र्निर्विषयो ङ. ५ तिवाच्यत्वा. ङ. ६. स्य विधि. ख. ङ. ७. मस्य विषयत्व ख ङ. ८. न विधिविषयत्वम्. घ. ९. न विधिविषयत्वं. ग. १०. व्याप्यो विधिविषय इति. ग. व्याप्तो विषय इति ख. घ. ङ. ११. स्य विधिविषयत्वायोगात्. ग. १२. तस्य वा भावार्थस्यैव. ग. तभावार्थस्यैव. घ. १३. षे च. ख. घ ङ.

प्रसज्यप्रतिषेधभङ्गप्रसङ्गात् । प्रजापतिव्रतादौ[1] "नेक्षेतोद्यन्तमादित्यं" इत्यादौ "तस्य व्रत" इत्यधिकारात् प्रसज्यप्रतिषेधासम्भवादनीक्षणसङ्कल्पः पर्युदासवृत्त्या लक्ष्यत इति युक्तम् । सति सम्भवे तु लक्षणाया अन्याय्यत्वात् क्वचिदपि प्रसज्यप्रतिषेधो नास्तीत्यङ्गीकरणीयम्, अङ्गीकरणीयं वा निषेधाधिकारेषु विषयाभावादपूर्वप्रतिपत्तिर्नास्तीति । तस्मादुक्त[3] एव मार्गो लिङाद्यभिधेयनिर्णये सुन्दर इत्यास्तान्तावत् ॥

इति कार्यवादो नाम द्वितीयवादः समाप्तः ।

[ स्वतः प्रामाण्यवादः । ]

वेदानां कर्तृभावे गुणविधुरतया बाधि मा मानतेति
　प्रामाण्यस्य स्वरूपं प्रमितिजननयोस्तच्च तस्य स्वतस्त्वम् ।
मानानां लक्षणं तद्विषयविभजनं तद्बहिर्भूतरत्वे
　इत्यत्राचार्यगुप्तं प्रणिहितमनसस्तत्त्वतो वर्णयामः ॥

इह हि प्रामाण्याप्रामाण्ययोः स्वतस्त्वपरतस्त्वे प्रति विप्रतिपद्यन्ते वादिनः । केचिदाहुः—स्वतोऽसतामसाध्यत्वाद् उभयं स्वत इति । वदन्ति च—यदसत् तत् न क्रियते, यथा शशविषाणम् । असच्चेत् कारकव्यापारात् पूर्वं कार्यं तर्हि न क्रियेत क्रियते च, अतः सदेव पूर्वमपि । किञ्च तन्तुभिः पटः सम्बद्धो वा स्यादसम्बद्धो वा ? सम्बद्धश्चेदसतः

---

१. दौ मु. ख. ङ. २ धसम्भवाद ग ३. स्मादस्मदुक्त एव. ङ.
४. पय. ङ. ५. त अत. ग. ते क्रियते च अत. घ. ६. चेत. ङ.

सम्बन्धानुपपत्तेः प्राप्तं सत्कार्यत्वम् । असम्बद्धश्चेत्तन्तूनामेवोपादानत्वं, न वीरणादेः पटस्यैवोपादेयत्वं, न विश्वस्य इत्युपादानोपादेयनियमो न स्यात् । असत्त्वासम्बन्धयोरविशेषात् ।

यथाहुः—

> असत्त्वान्नास्ति सम्बन्धः कारकैस्सत्त्वसङ्गिभिः ।
> असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥

इति । स्यादेतत्—शक्तितो नियमान्नोपादानोपादेयनियमभङ्ग इति । तदयुक्तम्; शक्तेश्शक्ताश्रयायाः शक्येनासम्बन्धे पूर्ववदनियमापत्तेः, सम्बन्धे चासतस्सम्बन्धानुपपत्तेः पूर्ववत् सत्कार्यत्वप्रसक्तेः । अपि च कारणभावाच्च । नहि कार्यादभिन्ने कारणे सति कारणादभिन्नं कार्यमसद्भवति; विरोधात् । न च कार्यस्य कारणादभिन्नत्वमसिद्धम्; तन्तुभ्यः पटो न भिद्यते, तत्कार्यत्वात्, यद्यतो भिद्यते न तत् तस्य कार्यं, यथा गौरश्वस्य । तन्तुकार्यश्च पटः तस्मान्न तन्तुभ्यो भिद्यते । तथा यद्यतो भिद्यते तेन तस्य संयोगोऽप्राप्तिर्वा यथा कुण्डबदरयोः, मेरुविन्ध्ययोर्वा । न च तन्तुभिः पटस्य संयोगोऽप्राप्तिर्वा । तस्मात् न तन्तुभ्यो भिद्यते पट इत्यादिभिरभेदसाधनात् । अतस्सिद्धं सत्कार्यत्वं इति ।

अत्रोच्यते—न तावत् क्रियमाणत्वं सत्त्वसाधनम्; तस्य सत्त्वेऽप्यनुपपत्तेः असत्त्वेऽप्युपपत्तेश्चासाधारणत्वात्, सन्दिग्धविपक्षव्यतिरेकित्वाच्च ।

---

१. न्यत्वा. ग. २. पटत्वं, आविश्वस्य. ग. ३. त्सत्त्वसङ्गिभिः घ. ४. इति शङ्कितो. क. घ. ५. दनियमापत्तेः. ङ. ६. यमोपपत्तेः. ग. ७. ने कार. ङ. ८. ते तेन पट. घ. ९. सन्तादिति. ग. १०. पत्तेश्चासाधारणत्वात्. ग.

तथाहि—न सतो घटादेः क्रियमाणत्वं दृष्टम्; कृते कारकव्यापारानुपपत्तेः। नाप्यसतः क्रियमाणत्वमनुपपन्नम्; असतोऽपि समवहित पुष्कलकारणस्य क्रियमाणत्वाविरोधात्।

यत् पुनः कारकैरसम्बद्धस्य कार्यस्योत्पत्तावुपादानोपादेयनियमभङ्ग इति। तन्मन्दम्; किञ्चिदेवोपादानं कस्मिंश्चिदेव कार्ये शक्तमिति शक्तिनियमात्। न च शक्तिरपि शक्येनासम्बद्धा न नियन्त्रीति वाच्यम्; शक्तेश्शक्ताश्रयायाः शक्येनासम्बन्धेऽपि प्रतिनियतशक्यानुकूलस्वभावत्वात्। अन्यथा भवन्मतेऽपि प्रधानोपादानत्वाद्विश्वस्य सर्वं सर्वरूपेण सर्वत्र सर्वदा सत् इति कथं विलक्षणव्यवहारोपपत्तिः? विवेकहेतोरभावात्। अथ सत्त्वाविशेषेऽपि तत्तदभिव्यञ्जकहेतुसामर्थ्यनियमात् तदभिव्यक्तिनियमः, तर्हि तन्नियमादसदुत्पत्तिरपि भवन्तीति न विरोत्स्यते।

यत् पुन कारणाभेदादिति, तदसिद्धमेव। यानि तु तदभेदसाधनानि तानि प्रत्यक्षेण तन्तुपटयोर्भेदोपलब्धेस्तद्विरुद्धानि न दूषणान्तरं प्रयोजयन्ति। किञ्च कारकव्यापारात् प्रागपि यदि तन्तुषु पटः स्यात् किमिति नोपलभ्यते? अनभिव्यक्तत्वादिति चेत्, किमियमभिव्यक्तिः पूर्वमसती सती वा? सती चेत्, पूर्वमप्युपलब्धिः, असती चेदसत्या एवाभिव्यक्तेरुत्पत्तिरिति कथमसदुत्पत्तिनिषेधः? तस्मात् सत्कार्यत्वनिषेधात् प्रामाण्याप्रामाण्ययोः परस्परपरिहारित्वेन किञ्चित् प्रमाणं किञ्चिदप्रमाणमिति व्यवस्थानुपपत्तेश्च नोभयं स्वतः। किन्तु अप्रामाण्यं

---

१. हि सतो ग २ कार्योत्पत्ता ग ३. सादुत्पत्तिरपि ग. ४. वति न. घ. वन्ती न विरोत्स्यते. ङ. ५. ते। तत्पुन. कारणाभेदादिति घ ६ कारणभेदादिति. क. घ. ७. ती वा सती चेत् घ. ८. किञ्च, ग.

स्वतः प्रामाण्यं परत इत्यपरे । तथा हि—यदि प्रामाण्यं स्वतोऽवसीयते कथं तर्हि वस्तुवृत्त्या प्रमाणे प्रामाण्याप्रामाण्ये शङ्क्येयाताम् ? न ह्यन्यतरकोटिनिर्धारणे शङ्कावतरति, अतिप्रसङ्गात् । अतो गुणज्ञानादर्थक्रियाज्ञानाद्वा प्रामाण्यावगमः । न च प्रथममर्थतत्त्वानिश्चये कथं प्रवृत्तिः, तन्निश्चये वा कथं प्रामाण्यानिश्चय इति वाच्यम् ; कृष्यादाविवार्थसन्देहादेव प्रवृत्त्युपपत्तेः । प्रवृत्तस्य चार्थक्रियोपलब्धौ पूर्वावगतस्यार्थस्यार्थक्रियाकारित्वलक्षणं सत्त्वं निश्चितमिति तद्विषयस्य पूर्वज्ञानस्यापि तदर्थसम्भूतत्वेन पश्चात् प्रामाण्यं निश्चीयते । यथोक्तम्—

> तस्मिन् सदपि मानत्वं विनिश्चेतुं न शक्यते ।
> उत्तरार्थक्रियाज्ञानात् केवलं तत्प्रतीयते ॥ इति ।

न चैवमर्थक्रियाज्ञानस्यापि स्वविषयार्थक्रियापरिनिश्चये परापेक्षा; येनानवस्था भवेत्, तस्य फलरूपत्वात् । फलार्थं हि सर्वं परीक्ष्यं, न फलमन्यापेक्षमिति । अतः स्फुटाविकल्परूपत्वात् फलरूपत्वाच्चार्थक्रियाज्ञानं स्वत एव स्वविषयतथात्वावधारकं प्रमाणञ्च । न चैवं प्रामाण्यावगमस्य प्रवृत्त्यङ्गत्वात् प्रवृत्त्युत्तरकालमर्थक्रियया तन्निर्णयो निष्फल इति वाच्यम्; ज्ञानान्तरेषु निश्शङ्कप्रवृत्त्यर्थं विसंवादिज्ञानव्यावृत्तप्रमाणप्रतिबद्धरूपविशेषावकलनाय प्रवृत्त्युत्तरकालीननिर्णयस्योपयोगात् । प्रतीयते हि प्रवृत्तावभ्यासदशापन्ने ज्ञाने फलस्याप्रामाण्यस्यार्थक्रियारूपं फलमविपर्यीकुर्वतो विज्ञानान्तराद्विसंवादिभ्यो व्यावृत्तं वैलक्षण्यम् । यथाहुः—

---

१. रनिर्धारणे. ग २. स्यार्थक्रिया. घ ३. नि सदर्थ घ ४. म. स्यार्थमि. ट. ५. मित्यत्र स्फुट. ग ६. त्वाच्चार्थक्रियाज्ञान. ग ७ ज्ञानस्य व्यावृत्त. घ. ८. पन्न. ग. घ. ९. फल विपर्यीकुर्वतो. म.

वृत्तावभ्यासवत्यां तु वैलक्षण्यं प्रतीयते ।
अतद्विषयनो[2] ज्ञानादाद्येऽप्राप्तेऽपि तत्फले[3][4] ॥ इति ।

तस्मात् झटिति निश्शङ्कप्रवृत्तिरपि तत्र तत्र विसंवादिन्यावृत्तप्रमाणप्रतिबद्धरूपविशेषलिङ्गकानुमानादेवेति न स्वतः प्रामाण्यावभासः । अत्राभिधीयते—

भवेत्प्रामाण्यसंवित्तिरर्थयाथार्थ्यनिश्चयात् ।
तन्निश्चयस्तु संवादाद् गुणज्ञानाच्च नेष्यते ॥

प्रमितिसाधकतमत्वं हि प्रामाण्यम् । प्रमितिश्चानधिगततथाभूतार्थावधारणम् । न चैवमिन्द्रियादेरेव प्रामाण्यं न ज्ञानस्य, तस्यावधारणरूपत्वेनावधारणान्तरसाधकतमत्वानुपपत्तेरिति वाच्यम्; ज्ञानप्राकट्ययोः कार्यकारणभावेनातिदूरविप्रकृष्टयोरेकरूपेणानुत्पत्त्यर्थमवधारणशब्देन तन्त्रेणोपादानात् । ततश्चायमर्थः सम्पद्यते—द्विविधरूपमवधारणं; ज्ञानरूपं प्राकट्यरूपञ्च । तत्रानधिगततथाभूतार्थगोचरत्वेन प्राकट्यरूपावधारणसाधकतमत्वं ज्ञानस्य प्रामाण्यं, तादृशार्थगोचरत्वेन ज्ञानरूपावधारणसाधकतमत्वं इन्द्रियादेः प्रामाण्यम् इति । साधकतमत्वञ्च तादृशार्थावधारणानुगुणः प्रमाणगतः शक्तिभेद एव । तथा चानधिगततथाभूतार्थावधारणं प्रमितिः, तत्साधनं प्रमाणं, तद्भावः प्रामाण्यमिति नाशब्दार्थत्वमपि । तदेवमनधिगततथाभूतार्थावधारणशक्तिः अनेवं-

---

१. त्वत्याम. ङ २. यवज्ञा. ग. ३. तत्फलम्. ग. ४. ले । तस्मात्. घ. ५. अ विसंवादि ॥ ६. बन्ध. ग. घ. बद्धरूपविशेषाद्ग्राह्य ख. ङ. ७. धात्म्य. ग. ङ. ८. प्रतीतिश्चा ग. ९ पप्रामाण्यञ्च ख ग ङ. १० मधिगत. ग.

विधार्थावधारणशक्तिश्च प्रमाणाप्रमाणगोचरे प्रामाण्याप्रामाण्ये । ते च तथाभूतोऽयमर्थ इत्येवंरूपात् तथात्वावधारणादतथाभूतोयमर्थ इत्येवंरूपादतथात्वावधारणाच्च चकास्तः । तत्र तथाभूतार्थावधारणमर्थक्रियाज्ञानादिलक्षणपरानपेक्षत्वेन ज्ञानस्वरूपमात्राधीनमिति तदवसेयं प्रामाण्यमपि स्वतोऽवसीयत इत्युच्यते । अतथाभावावधारणन्तु ज्ञानस्वरूपमात्रानधीनत्वेन कारणदोषावगमादिलक्षणपरापेक्षमिति तदवसेयमप्रामाण्यमपि परतोऽवसीयत इत्युच्यते ।

न चातथाभावावधारणमपि ज्ञानस्वभावाधीनम्; भ्रमबाधयोरसम्भवप्रसङ्गात् । न च शुक्तौ रजतमतथाभूतमिति गोचरयतो ज्ञानस्य भ्रमत्वं बाधसम्भवो वा । तदेवमतथाभूतस्यापि तथाभूतत्वेनैव ज्ञानस्वभावादवधारणम्, अतथाभूतत्वेन तु कारणदोषावगमात् बाधकप्रत्ययाद्वा परत इति सिद्धम् । न चैवं इन्द्रियं स्वविषयं तथात्वावधारणायापि गुणज्ञानमर्थक्रियाज्ञानं वा परमपेक्षते ज्ञानम्; तथा सति तयोरपि स्वविषयतथात्वावधारणार्थं परापेक्षत्वेन तथाप्येवमित्यनवस्थापातात् । न चैवमर्थक्रियाज्ञानस्य स्वत एव स्वविषयतथात्वावधारणादवधृततथाभावेन तद्विषयेण साधनज्ञानविषयतथाभावावधारणं, तेन च

१. ण्ये तथा । ते तथाभूतोऽय. ग. ण्ये तथाभूतो. ङ. २. थात्वोऽय. ङ. ३. नत्वेनकारदोषावगमादि लक्षणपरापेक्षमिति तदवसेयमप्रामाण्यमपि परतोऽवसीयत इत्युच्यते । न चातथाभूत०. क. ४. वधीयत. ङ. ५. ते । कारणदोषावगमादि. घ. ६. प्राधीनत्वेन. ख. ङ. ७. पि तथात्वेनैव. ख. ग. पि अतथाभूतत्वेनैव ज्ञानस्वरूपावधारणम् घ. ८. न ज्ञानवत् ज्ञानस्वभावस्याद. ग. ९. नं कारण. ख. घ. ङ. १०. याव क. ११. यापि. ख. ग. १२. ज्ञाने विषयतथात्वावधारणम्. घ.

तत्प्रामाण्यावधारणात् परत एवाप्रामाण्यावगमः। नचानवस्थापीति वाच्यम्; विशेषाभावात्। स्फुटाविकल्पत्वं विशेष इति चेत्, न; साधनज्ञानेऽपि साम्यात्। साधनप्रत्ययानन्तरजत्वं फलप्रत्ययत्वञ्च विशेष इति चेत्, न; स्वप्ने कामिनीरूपसाधनज्ञानानन्तरभुवः तत्परिरम्भलक्षणफलज्ञानस्य स्वत एव स्वविषयतथात्वावधारकत्वेन स्वतःप्रामाण्यप्रसङ्गात्। अथ स्वप्ने सुखदुःखयोरेव फलत्वाद्वेतयोश्च सतोरेव ज्ञानविषयत्वात्, फलज्ञानस्य स्वविषयतथात्वावधारणं प्रामाण्यञ्च स्वत एव। यद्येवम् अस्तु तर्हि फलज्ञानस्य स्वविषयतथात्वावधारकत्वम्, अवधृततथात्वात्तु तद्विषयात् न साधनज्ञानविषयस्य तथात्वावधारणं युक्तम्; अतथाभूतादपि साधनज्ञानविषयात् कामिनीसङ्गमविभ्रमादिलक्षणात् सुखदुःखादिरूपस्य फलस्योपपत्तेः। अथोपप्लुतस्वप्नावस्थोत्पन्नफलप्रत्ययविषयतथात्वस्य व्यभिचारेऽप्यनुपप्लुतजाग्रदवस्थोत्पन्नफलप्रत्ययविषयतथात्वादव्यभिचारिणः साधनज्ञानविषयतथात्वावधारणं, तर्हि दूरत्वादिषु, विषयदोषेषु तिमिरत्वादिषु करणदोषेषु, पाण्डुत्वादिषु मनोदोषेषु वा सत्सु जायमानस्य व्यभिचारेऽपि त्रिविधदोषाभावे जायमानस्य साधनज्ञानस्य स्वविषयतथात्वावधारणमस्तु कृतमितरापेक्षया। किञ्च फलज्ञानमिव साधनज्ञानमपि कुतः स्वविषयतथात्वं नावधारयति? सन्देहग्रस्तत्वादिति चेत्, किमिदानीं सर्वमेव साधनज्ञानं स्वविषयतथात्वमतथात्वञ्च घटयत् सन्देहरूपम्? यद्येवं कुतस्तर्हि साधनज्ञानस्य परतो

---

१. माप्रगमः. क. २. जन्यत्वं. घ. ३. पग. स. ४. स्व विषयतथात्व. ग. ५. स्व विषयतथात्वावधारकमवधृततथात्वं तु विषयात्. ङ. ६ कृतिभ्र. ङ. ७. स्योत्पत्तेः. स. ग. ८. गरिताव. ग. ९. स्तु, मितरा. घ.

विषयतथात्वावधारणम्? अर्थक्रियाज्ञानादिति चेन्, न; तस्य स्वविषय-तथात्वमात्रव्यापारात्। अथार्थक्रियाविषयादेव ज्ञानादवधृततथात्वात् साधनज्ञानविषयतथात्वमनुमेयम्; तर्हि साधनज्ञानविषयतथात्वस्यार्थ-क्रियाज्ञानविषयतथात्वस्याप्यव्यभिचारावगमाय प्रथमतः प्रमाणान्तरेण निश्चयो वाच्य इति सिद्धं साधनज्ञानस्यापि स्वविषयतथात्वावधारकत्वम्। न च तत्राप्यविनाभावसापेक्षत्वम्; परस्पराश्रयप्रसङ्गात्। अतोऽभ्यास-दशापन्नस्य विषयतथात्वप्रतिबद्धरूपविशेषलिङ्गानुमेयं विषयतथात्वमित्य-पास्तम्; ज्ञानगतस्य तादृशरूपविशेषस्यादर्शनात्। उक्तेन क्रमेण व्याप्त्यवगमानुपपत्तेश्च। तत्सिद्धं ज्ञानानि स्वविषयतथात्वावधारणे न परापेक्षाणीति।

नन्वेवं यदि ज्ञानानि स्वत एव स्वविषयमुपस्थाप्य तथात्वमवधार-यन्ति कुतस्तर्हि सन्देहः? उच्यते—न तावत्सर्वत्र सन्देहः, त्रिविधदोषा-भावे ज्ञायमानेषु विषयेषु सन्देहस्यैवाभावात्। यत्रापि क्वचित् सन्देहः तत्रापि ज्ञानस्वरूपादेव स्वविषयतथात्वावधारणं, किन्तु काचादिषु दोषेषु सत्सु शुक्तिकारजतादावतथाभूतेऽपि तथात्वावधारणदर्शनाद् भवति सन्देहः—किं दोषसन्निधेरतथाभूत एव तथात्वावधारणमिदं उत तथाभूत एव इति। ततश्चातथाभूते एव तथात्वावधारणव्यापकं कारणदोषबाधप्रत्ययोः सद्भावं प्रयत्नेनापि जिज्ञासमानो यदि नाकलयेत् ततो योग्यानुपलम्भेन तदभावमवधारयंस्तद्व्याप्यस्यातथाभूत एव तथात्वावधारणस्याप्यभावमव-

---

१. पारतन्त्र्यात्. ख. घ. २. यादेवाज्ञानादवधृत. घ. याज्ञानविषयादेवावधृत. ग. ३. स्याव्यभिचारावगमात् प्रथमतः. ग. ४. नस्यापि. ङ ५. व्यनुगमानु. क. ६. तावदत्र सन्देहः. घ. ७. न विषय. ग. ८. एव तथात्वावधारण. क. ग.

धारयति । तत्तथासञ्जातशङ्कमिवोत्पन्नध्वस्तशङ्कमपि स्वत एव स्वविषयतथात्वावधारकम् । एवञ्च बाधकारणदोषयोरभावावगमस्याप्यतथाभावशङ्कोच्छेदमात्रव्यापारत्वात् सिद्धं स्वविषयतथात्वावधारणे परानपेक्षत्वलक्षणमनपेक्षत्वमपि । तस्मात् स्वशब्दस्यात्मीयवचनत्वेन ज्ञानस्वरूपाधीनात् तथात्वावधारणादवमीयमानं प्रामाण्यं स्वतोऽवसीयत इत्युक्तम् । नन्वेवमतथाभूतेऽपि तथात्वावधारणदर्शनात् कथं ततः प्रामाण्यानुमानम् ? यथा बाष्पे धूमभ्रमदर्शनेऽपि धूमाद्धूमध्वजानुमानमित्यवगम्य तुष्यतु भवान् ।

यत्पुनः प्रामाण्यं परतो ज्ञायते, अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्, इत्यादि प्रामाण्यस्य परतोऽवगमसाधनम् ; तदस्मन्मतेऽपि तथात्वावगमरूपात् परत एव तदवगतेरसिद्धसाधनं द्रष्टव्यम् ।

ननु प्रामाण्यस्य ज्ञप्तावनपेक्षत्वेऽप्युत्पत्तौ सापेक्षत्वमेव । तथा च नैयायिका वदन्ति—यदि ज्ञानहेतुमात्राधीनं प्रामाण्यं भवेत् तर्ह्यप्रमाणमपि प्रमाणमेव भवेत्, न हि तत्र ज्ञानहेतवो न सन्ति, तथा सत्यप्रमाणे ज्ञानत्वस्याप्यसम्भवप्रसङ्गात् । अथ दोषाभावस्य प्रामाण्यहेतुत्वात् सति दोषे तदभावान्नातिप्रसक्तिः, तर्हि दोषाभावमधिकमासाद्य प्रामाण्यमपि जायत इति कथं ज्ञानहेतुमात्रजत्वम् ?

---

१ मे न परापेक्षणमनपेक्षत्वमपि क मे परानपेक्षलक्षणमनपेक्षत्वमपि. घ मे परापेक्षत्वलक्षण ङ २ तु ततोऽप्रमाणमपि प्रमाणमेव भवेत् ख तु अप्रमाण ङ ३ त्वस्याप्य क घ ४ प्यसम्भवप्रसङ्गात् ग ५ ति च दोष ग ६. मपि ज जायत इति कथ ज्ञानहेतुमात्र ङ

अथ दोषाभावस्य प्रामाण्यहेतुत्वेऽपि गुणस्य तदहेतुत्वात् तदभावेऽपि वेदानां स्वतः प्रामाण्यं, नहि गुणस्य प्रामाण्यहेतुत्वेन दोषाभावस्य तदहेतुत्वात् तद्भावेऽपि गुणाभावादप्रामाण्यं वेदानां स्वतः प्रसजेत्। नहि गुणदोषयोः प्रामाण्याप्रामाण्ये प्रत्यन्वयव्यतिरेकयोर्विशेषमुपलभामहे। तत्सिद्धमुभयमुभयस्मात् परत इति।

अत्राभिधीयते—यत्कार्यगता हि या शक्तिः तस्या बाधकाभावे तत्कारणमात्राधीनत्वं, न हेत्वन्तराधीनत्वमित्येव न्याय्यम्; अन्यथा दाहकत्वस्य वह्निकारणमात्रानधीनत्वेन हेत्वन्तराधीनत्वप्रसङ्गात्। एवञ्च तथाभूतार्थावधारकत्वशक्तिः प्रामाण्यं अतथाभूतार्थावधारकत्वशक्तिरप्रामाण्यं च ज्ञानगते इति तयोरपि ज्ञानहेतुमात्राधीनत्वे प्रामाण्यस्याप्यप्रामाण्यप्रसङ्गादेकं ज्ञानहेतुमात्राधीनम्, इतरत्तु हेत्वन्तराधीनमिति प्राप्तम्। तत्र च।

> प्रामाण्यमनुवृत्तत्वाल्लाघवाच्च स्वतो धियाम्।
> दोषान्वयित्वाद्वैचित्र्यादप्रामाण्यञ्च न स्वतः॥

तद्धि तत्सामग्रीजन्यम्, यत्तस्यां सत्यामनुवर्तत एव। न चाप्रामाण्यं ज्ञानसामग्र्यां सत्यामनुवर्तते प्रमाणज्ञानेषु तददर्शनात्। अनुवर्तते तु प्रामाण्यमिदं रजतमित्यादिज्ञानेऽपि पुरोवर्तित्वत्रिकोणत्वाद्यंशे तथाभूतार्थावधारकत्वलक्षणम्। न चैतावता प्रमाणाप्रमाणविभागभङ्गः; केवलसत्यरूपस्य प्रमाणत्वं सत्यासत्यरूपस्य चाप्रमाणत्वमिति विभागात्, लाघवाच्च ज्ञानहेतूनां ज्ञानजनकत्व-

---

१. ■ हेतुत्वेऽपि. क. २. तदहेतुत्वेन. ग. ३. वृ तद्भावेऽपि क. ४. तुत्वे दोषा. ग. ५. ॰त्वमपि. ख. ग. ६. त्राधी. क. ७. स्याप्रामा. क. ८. तत्र प्रामाण्य. ग. ९. त्वसत्वशुक्लत्वभास्वरत्वाद्यंशे. ग. त्वसत्वशुक्लभास्वरत्वाद्यंशे. घ. १०. प्रमाप्रमाणविभाग. क. प्रमाण्याप्रामाण्यविभाग. घ. ११. केवलसत्यरूपस्य प्रमाणत्वं सत्यासत्यरूपस्य चाप्रमाणत्वमिति विभागात्.

शक्तो कल्पायां प्रमाणज्ञानानुगुणत्वेन कल्पने शक्यस्यैवाधिक्यं न शक्तेरिति लाघवम्। गुणदोषाभावयोरन्यतराधीनत्वे तु प्रामाण्यस्य ज्ञानहेतूनां ज्ञानजननशक्तिः, गुणदोषाभावयोरन्यतरस्य च प्रामाण्यजननशक्तिरिति शक्त्याधिक्यं भवेदित्यर्थः। अप्रामाण्यन्तु न ज्ञानहेतुमात्राधीनम्; दोषान्वयित्वात्। कामिलादौ दोषे सत्येव हि तद् भवति। न च गुणानां प्रामाण्यहेतुत्वात् गुणाभावे ज्ञानहेतुभ्य एवाप्रामाण्यमिति वाच्यम्; सत्यपि गुणे ज्ञानोत्पादनाय ज्ञानहेतूनामवैकल्यात् तन्मात्रनिबन्धनस्याप्रामाण्यस्य प्रमाणेऽपि प्रसङ्गात्, वैचित्र्याच्च। सन्तमसे भूतले संयुक्तायामेकस्यामेव वारिधारायां स्रक्सर्परज्जुरूपेण अतथाभूतार्थावधारकत्वलक्षणस्याप्रामाण्यस्य वैचित्र्यात्तत्र तत्र विचित्रा दोषा एव तद्धेतवः, नैकरूपा चक्षुरादिका ज्ञानसामग्री; कार्यवैचित्र्यस्य कारणवैचित्र्यं विनानुपपत्तेरिति। स्यादेतत्—यदि ज्ञानहेतुमात्राधीनं प्रामाण्यं भवेद्, भवेत्तर्हि स्मृतेरपि प्रामाण्यम्। न; प्रामाण्यशब्देनात्र प्रामाण्यावयवभूतस्य तथाभूतार्थावधारकत्वशक्तिमात्रस्यैवोपादानात्, तस्यैव च ज्ञानहेतुमात्राधीनत्वसमर्थनात्, अन्यथा नैयायिकमतेऽप्यप्रामाण्यस्य दोषहेतुत्वात्तदभावे स्मृतावप्रामाण्यासम्भवप्रसङ्गात्।

यत्पुनः प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावत् इत्यनुमानम्, तत् प्रमा गुणदोषाभावयोरन्यतराधीना

---

१. मात्. ग. घ. २. तरस्य च प्रामाण्य. ङ ३. त्यज्ञानहे. ग. ४. न्तु. ज्ञान. ङ ५. त्यमपाति. ख ६ मवैकल्यात्. ग ७. तस्यैव च ज्ञानहेतु ग. ८. त्यसम्भवप्र. ङ. ९. माणज्ञानहेत्वतिरिक्त. ग.

न भवति ज्ञानत्वात् अप्रमावत्, इत्यनेन निर्विशेषणहेतुजत्वेन विशेषविषयत्वेन च शीघ्रप्रवृत्तेन बाधितविषयं[1] करणीयम्। अत उत्पत्तावपि ज्ञानहेतुमात्राधीनत्वात् स्वत एव प्रामाण्यम्, अप्रामाण्यन्तु दोषाधी[2]नत्वात् परत इति सिद्धम् । सिद्धञ्च वेदानामपौरुषेयत्वेन गुणाभावेऽपि दोषाभावमात्रात् प्रामाण्यम्, इति सर्वमनवद्यम्।

इति स्वतःप्रामाण्यवादो नाम तृतीयवादः
समाप्तः ।

[ कालप्रत्यक्षतावादः । ]

किं पुनः प्रमाणम्? अनधिगततत्त्वज्ञानम्[3]मिति ब्रूमः। न चानधिगतगन्तुः प्रामाण्ये धारावाहिकेषु ज्ञानेषु[4] पूर्वगृहीतार्थगोचरत्वादुत्तरेषामप्रामाण्यम्; तत्रापि कालभेदस्याधिकस्य वेद्यत्वात् । न च कालभेदस्यातिसौक्ष्म्यादनवगमः; तदवगमपरिपन्थिसौक्ष्म्यासिद्धेः। उपाधिसौक्ष्म्यनिबन्धनत्वादौपाधिकसौक्ष्म्यस्य, उपाधेश्च सूक्ष्मस्य प्रत्यक्षत्वाभ्युपगम्[5]... वक्ष्यमाणत्वात्। न च कालो न प्रत्यक्षः; अमूर्तत्वे सति विभुत्वाद्, आत्मवदेवेति तत्प्रत्यक्षत्व[6]साधनात्। किञ्च यदि कालो न प्रत्यक्षः स्यात्, न स्यादेव तर्हि, तत्सद्भावावेदकप्रमाणानुपपत्तेः।

---

१. यं परीकरणीयम्. ख. ङ. २. पान्वयित्वात्. क. ३. नं प्रमाणमिति ब्रूमः. ग. ४. षु परिगृहीतार्थ- घ. ५. स्य उपाधेश्च प्रत्य०. क. स्य उपाधेश्चासूक्ष्मस्य प्रत्य०. घ. ६. त्वसाधनत्वात्. क.

स्यादेतत्—परापरव्यतिरेकयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययरूपैर्लिङ्गैरनुमेयः कालः। तथाहि—युवस्थविरयोर्दिग्विपर्ययेणापरत्वापरत्वप्रत्ययेन परत्वापरत्वदर्शनात् निमित्तं विना च तदनुपपत्तेः, इनपरिवृत्तीनाञ्च सम्बन्धाभावेन तन्निमित्तत्वासम्भवात्, अविभोश्च पिण्डाभ्यामिनपरिवृत्तिभिश्च सह सम्बन्धासम्भवात्, इनपरिवृत्तिसम्बद्धं पिण्डद्रव्यसंयुक्तं विभुद्रव्यमेव निमित्तमङ्गीकरणीयम्। न च तदात्माकाशयोरन्यतरत्; आत्माकाशाविनपरिवृत्तीनां पिण्डेन सह सम्बन्धोत्पादकत्वेन परत्वापरत्वनिमित्ते न भवतः विशेषगुणयोगित्वाद् घटवादिति बाधकसम्भवात्। न च दिशो निमित्तत्वं; तन्निबन्धनपरत्वापरत्ववैपरीत्यात्। अतः पारिशेष्यात् कालसिद्धिः इति। उच्यते—

> असिद्धेः परिशेषस्य युक्तं कालस्य खण्डनम्।
> न परत्वापरत्वाभ्यां यौगपद्यादिभिर्न च॥

स्यादेतदेवं यदि परत्वापरत्वाभ्यां कालविशेषः सिध्येत्, नत्वासौ सिध्यति; पिण्डाश्रितयोः परत्वापरत्वयोरिनपरिवृत्तीरेव निमित्तीकृत्योत्पत्त्युपपत्तेः। असम्बद्धस्य निमित्तत्वेऽतिप्रसङ्गात् सम्बन्धाय कालापेक्षेति चेत्, न; सम्बद्धस्य निमित्तत्वेऽपि कालस्य विश्वसम्बन्धित्वेनातिप्रसङ्गस्य तादवस्थ्यात्। अथ सम्बद्धस्यापि शक्तस्य निमित्तत्वान्नातिप्रसङ्गः, तर्ह्यसम्बद्धस्यापि शक्तस्य निमित्तत्वमिति कुतोऽति-

---

१. व्यतीत क. व्यतिकर. ख ट  २. स्वन्यस्य च  ३. से इतीनपरि ख. ग. घ ट.  ४ स्वन्धक पिण्ड घ स्वन्ध पिण्ड ट  ५. ण्डसंयुक्तं ग.  ६. रम्. ग  ७ म्बन्ध ख ग. घ ट  ८. म्बन्ध ख. ग. घ. ट.  ९. म्बन्ध ग घ. ट  १० म्बन्ध ग घ. ट

प्रसक्तिः ? अथान्यत्र सम्बंद्धस्यैव निमित्तत्वदर्शनात् इहाऽपि व्याप्तिबलेन सम्बन्धाय द्रव्यान्तरकल्पनम्, तर्हि यस्मै सम्बन्धाय द्रव्यान्तरं कल्प्यं तस्य सम्बन्धस्यैवान्तरङ्गत्वात् कल्पनमस्तु किं सम्बन्धिद्रव्यकल्पनया ? सम्बन्धस्य सतस्संयोगसमवायादिष्वेवान्तर्भावात्, अनन्तर्भावे वा तत्त्वानुपपत्तेः पिण्डेन सहेनपरिवृत्तीनां तेष्वन्यतमस्याप्यसम्भवात् सम्बन्धकल्पनं प्रमाणबाधितमिति चेत्; तर्हि द्रव्यस्य सतः पृथिव्यादिष्वेवान्तर्भावात्, अनन्तर्भावे वा द्रव्यत्वानुपपत्तेर्द्रव्यकल्पनमपि प्रमाणबाधितमेव। भवतु वा द्रव्यकल्पनम्, तथापि कथमात्माकाशातिरिक्तसिद्धिः ? तयोर्विशेषगुणयोगित्वेन निमित्तत्वबाधादिति चेत् न, कार्यान्तरेऽप्यनिमित्तत्वप्रसङ्गात्। इनपरिवृत्तीनां पिण्डेन सह सम्बन्धोत्पादकत्वलक्षणकार्यविशेषे घटादेरिव विशेषगुणयोगिनो निमित्तत्वं बाधितमिति चेत्, तर्हि द्रव्यमात्रस्यापि घटादिवन्निमित्तत्वं बाधितमिति कथं द्रव्यान्तरसिद्धिः ?

यत्पुनर्युगपदादिप्रत्ययाः काले लिङ्गमिति। तत्र प्रष्टव्यम्—किममी कालविषयाः अन्यविषया वेति। कालविषया अपि किमैक्षजन्या लिङ्गजन्या वेति। न तावदैक्षजन्याः कालविषयाश्च; कालस्य प्रत्यक्षत्वप्रसङ्गात्। नापि कालविषया लिङ्गजन्याः; लिङ्गस्य युगपदादिप्रत्ययरूपत्वेनात्माश्रयप्रसङ्गात् अथान्यविषयाः कथन्तर्हि कालसिद्धिः ? चक्षुरादिवन्निमित्तत्वेनेति चेत् न; परत्वापरत्वाभ्यामिवोक्तेन क्रमेण

---

१. म्बन्ध. ग, घ. ङ. २. स्यादित्यस्ति. ख. ङ. ३. न्योपपादकत्व. ग, ४. या वा कालविषया अपि. ख. ग, ५. अक्षि. ख. ङ. ६. दक्षि. ख. ङ. ७. यतोऽपि. ग.

युगपदादिप्रत्ययैरपि कालपरिशेषस्य दुष्करत्वात् । अनेनैव क्रमेण दिशोऽपि पूर्वापरादिप्रत्ययानुमेयत्वं निरसनीयम् ।

यत्तु स्पर्शवत्त्वे सति महत्त्वं बाह्यप्रत्यक्षत्वस्य व्यापकमिति तन्निवृत्तौ बाह्यप्रत्यक्षत्वस्यापि निवृत्तिः, तथा दिक्कालावप्रत्यक्षौ विशेषगुणशून्यद्रव्यत्वात् मनोवत् इत्यादि; तदुक्तेन क्रमेण दिक्कालयोः अप्रत्यक्षत्वे स्वरूपस्यैवासिद्धेः तत्स्वरूपसिद्ध्यन्यथानुपपत्तिप्रसूतार्थापत्ति-बाधितविषयत्वादसाधनमेव ।

स्यादेतत्—अस्तु कालः प्रत्यक्षः, तथापि तस्यैकत्वान्नाधिकविषयत्वम्। तन्न; कालभेदस्य ग्रहणात्। न चोपाध्यग्रहे कथं तद्ग्रह इति वाच्यम्; उपाधेः प्रकाशस्य प्रत्यक्षेण ग्रहणात्। अस्ति हि भवतामस्माकञ्च ज्ञानरूपः प्राकट्यरूपो वा प्रत्यक्षः प्रकाशः।

स्यादेतत्—स्फटिके लौहित्यस्येव कालभेदस्याप्यतात्त्विकत्वात् तद्ग्राहिणां भ्रान्तित्वप्रसङ्ग इति। तदयुक्तम्; उपाधिद्वारेण भेदस्य कालसम्बन्धितामात्रेण प्रतिभासात्, तावन्मात्रेण च सत्यत्वात्। स्फटिके तु लौहित्यस्य तादात्म्यप्रसङ्गेनेति तदवभासो भ्रान्तिः। तत्राप्युपाधिद्वारा लौहित्यस्य सम्बन्धमात्रमभ्रान्तमेवेति।

---

१. अविशे. ग. ङ. २. यत्तु स्पर्श. [illegible] ३. व्याप. ग. ४. व्यत्वात्. ङ. ५. तन्निवृत्त्य. ग ङ ६. सिद्धप्रसूतार्थापत्ति. घ. ७. त्वम्। न; औपाधिकभेदस्य ग्रहणात् ग. ङ त्वम्। तन्न, औपाधिकभेदस्य ग्रहणात्. ग. त्वम्। तन्न, औपाधिकभेदस्य ग्रहणात्। अस्ति हि भवतामस्माकञ्च. घ. ८. कलौहित्य. ग. ९. न्मात्रस्य ख. ग. न्मात्रे च घ. १०. भ्रान्तः. क. ग. ख. ११. न्तमभ्रान्तमेव। यत्तु ग. ङ. न्तमभ्रान्तमेवेति. घ.

यत्तु यत्र नित्यानां प्रथममेव कालत्रयसम्बन्धित्वमवगतं तत्र कथं पुनरुत्तरेषां प्रामाण्यमवगतमिति। तन्मन्दम्; उक्तेन क्रमेण तत्रापि, तत्तदुपाधिसम्बन्धभेदेन कालभेदानुप्रवेशात्।

यत्पुनरगृहीतग्राहिणः प्रामाण्ये अगृहीते कालभेद एव प्रामाण्यं, न गृहीते वस्तुरूप इति। तदयुक्तम्; न ह्यनाधिगतपदेनाधिगतस्पर्शो व्यावर्त्यः किन्तु, अनधिगतास्पर्शः। स च प्रकृतेऽपि नास्तीति कथमप्रामाण्यम्?

इति कालप्रत्यक्षतावादो नाम चतुर्थो वादः परिसमाप्तः।

---

[अन्यथाख्यातिवादः।]

स्यादेतत्—अस्तु स्मृत्यनुवादयोर्व्युदसनायानधिगतपदं सार्थं, तत्त्वपदन्तु व्यर्थमेव; अतत्त्वविषयज्ञानस्याभावात्। शुक्तौ रजतार्थि-प्रवृत्त्यन्यथानुपपत्त्या हि तत् कल्प्यं, सा च प्रवृत्तिर्भेदाग्रहादेवोपपन्ना। भेदाग्रहश्च यद्रूपं ज्ञातं सत् रजतार्थिनः शुक्तौ प्रवृत्तिं वारयति तस्य विशेषरूपस्याग्रहे सति साधारणाकारग्रहः, स च सत्यरजतज्ञान-सारूप्यात् पुरोवर्तिनि रजतार्थिनं प्रवर्तयति। न च भेदाग्रहात् प्रवर्तक-

---

१. तदुपाधि॰ ख. २. यज्ञानाभवात्. घ. ३. तार्थम्, ख. ४. नि प्रव॰ ङ.

ज्ञानसारूप्यान्निवृत्तिरपि स्यात्, इति वाच्यम्; यतो न प्रवर्तकज्ञान-सारूप्यं प्रवृत्तिहेतुः किन्तु प्रवृत्तिहेतुसारूप्यम्। प्रवृत्तिहेतुश्च भेदाग्रहः, स चोभयत्रापि सरूप एव। नचैवमभेदाग्रहो निवृत्तिहेतुः, येन तत्सारूप्यान्निवृत्तिरपि[1] स्यात्,[2] किन्तु भेदग्रहः,[3] स च प्रकृते नास्तीति न युगपत् प्रवृत्तिनिवृत्तिचोद्यप्रसङ्ग इति। तदयुक्तम् —

> ग्रहणादग्रहाद्वाऽपि न भेदाभेदयोर्यतः।
> निवृत्तिस्सत्यरजते युज्यते रजतार्थिनः॥

यदि भेदाग्रहात् प्रवृत्तिः कुतस्तर्हि निवृत्तिरित्युच्यताम्? यदि भेदग्रहात्, न तर्हि सत्यरजते नेदं रजतमिति भ्रान्तो निवर्तेत। नहि तत्र रजताद् भेदो गृह्यते, तथा सत्यन्यथाख्यातिप्रसङ्गात्।

अथ[4] भेदग्रहाभावेऽपि भेदावगममात्रान्निवृत्तिः, अस्ति च तत्र भेदावगमः स्मृतिरूप इति। तर्हीदं रजतमिति प्रवर्तमानोऽन्तरा शुक्तिशकलं स्मरन् पश्यन् वा न प्रवर्तेत, शुक्तिकात्वस्य भेदस्यावगमात्। अथ निवृत्तिविषयाधिकरणत्वेन भेदकधर्मावगमो निवृत्तिहेतुः, तर्हि निवृत्तिभ्रमान्न निवर्तेत, तत्र निवृत्तिविषयाधिकरणत्वेन भेदक-धर्मस्यानवभासात्, अवभासे[5] वा विपरीतख्यातिप्रसङ्गात्।

यत्पुनर्निवृत्तिविषयेण भेदकधर्मस्य निरन्तरभानं निवृत्तिहेतु रिति, तदग्रेऽपरिष्टान्निराकरिष्यामः। तत्सिद्धं[6] न भेदग्रहान्निवृत्ति-रिति।

---

१ त्तिचोद्यस्यावकाश इति क  २ द्यस्यावकाश इति ख ग  ३. हेतु. ग.
४ अभेदग्रहाभावेऽपि घ  ५ तदवभासे वा ग  ६ द भेदग्रहो न निवृत्तिहेतुरिति. क

स्यादेतत् — माभूद् भेदग्रहान्निवृत्तिरिति, भेदाग्रहादेव तु भविष्यति। न[1] च प्रवृत्तिनिवृत्तिसाङ्कर्यम्; इष्टभेदाग्रहस्य प्रवर्तकत्व-मनिष्टभेदाग्रहस्य तु निवर्तकत्वमिति विवेकादिति। तदयुक्तम्; शुक्ता-विष्टाद्रजताद्भेदाग्रहतः प्रवर्तमानस्यानिष्टादरजतादपि भेदाग्रहतो निवृत्ते-रपि प्रसङ्गात्। न हि तत्रारजताद् भेदो गृह्यते; तथा सत्यन्यथाख्याति-प्रसङ्गात्। अनिष्टमवगम्य तेन भेदाग्रहो निवृत्तिहेतुः। प्रकृते चानिष्टस्या-[2]रजतस्यानवगमाच्च तेन भेदाग्रहो निवृत्तिहेतुरिति चेत् न; शुक्तिं पश्यतः स्मरतो वा शुक्त्यन्तरे रजतमिति भ्रान्तस्य निवृत्तिप्रसङ्गात्। निवृत्ति-विषयाधिकरणत्वेनानिष्टमवगम्य तेन भेदाग्रहो निवृत्तिहेतुरिति चेत्, न; निवृत्तिभ्रमे तदसम्भवात्। सम्भवे वा विपरीतख्यातिप्रसङ्गात्[3]। निवृत्ति-विषयेण निरन्तरत्वेनानिष्टमवगम्य तेन भेदाग्रहस्य निवर्तयितृत्वमग्रे निराकरिष्यामः। तत्सिद्धं भेदाग्रहो न निवृत्तिहेतुरिति।

यत्तु पुनरभेदग्रहस्य निवृत्तिहेतुत्वं, तदिष्टेनाभेदग्रहस्य निवृत्ति-विरोधित्वादनिष्टेनाभेदग्रहस्य[4] निवृत्तिभ्रमेऽप्यसम्भवादनाशङ्कनीयमेव[5]।

ननु मा भूद् भेदग्रहस्य भेदाग्रहस्य वा निवृत्तिहेतुत्वं, मा च भूदभेदग्रहस्य; तथाप्यभेदाग्रहान्निवृत्तिरस्तु। मैवम्; शुक्तौ रजताद् भेदाग्रहतः प्रवर्तमानस्यान्यथाख्यातिभयाद्भेदोऽपि न भासत इति युगपत् प्रवृत्तिनिवृत्तिचोद्यप्रसङ्गात्[6]। अतस्सत्यरजते रजतार्थिनो निवृ-त्तिर्न[7] भेदग्रहात्, नापि भेदाग्रहात्, न तथाऽभेदग्रहात्, न तथाप्यभेदा-

---

1. न प्र. ह. 2. स्यात. क. 3. तु। विपरीतेन निरन्तरत्वेनानि. ख. ग. 4. स्य च नि. ह. 5. नाशङ्कनीयमेव. ग. 6. प्रिवग्रहात्. ख. ग. [illegible]. 7. तु न भेदाग्रहात्. क.

ग्रहादिति, तदर्थमन्यथाज्ञानं कल्प्यम्। एतेनासंसर्गाग्रहस्य प्रवर्तकत्वमपि तत्र तत्र पूर्वोक्तव्यभिचारैरेव निवृत्तिहेतुत्वेनान्यस्य निरूपयितुमशक्यत्वात्, संसर्गाग्रहस्य निवृत्तिहेतुत्वमापाद्य पूर्ववद्युगपत् प्रवृत्तिनिवृत्तिचोद्यप्रसक्तेरपास्तं वेदितव्यम्।

अथोच्येत रूपरूपिनिरन्तरभानं प्रवृत्तिनिवृत्त्योर्हेतुः, इष्टरूपनिरन्तरभानात् प्रवृत्तिः, अनिष्टरूपनिरन्तरभानान्निवृत्तिरिति। तदयुक्तम्; पुरोवर्तिनोः शुक्तिरजतयोर्युगपदक्षसन्निकर्षे सति शुक्तिरजते इत्युभयालम्बनत्वेनोदीयमानाज्ज्ञानात् शुक्तावपि प्रवृत्तिप्रसङ्गात्। अस्ति हि तत्र रजतजातेः स्वव्यक्त्येव शुक्तिव्यक्त्यापि निरन्तरभानं, तथापि शुक्तिव्यक्ते रजतजातेश्चान्तरा शुक्तिजातिरजतव्यक्त्योरपि भानान्निरन्तरभानाभाव इति चेत्, न; ज्ञानस्यैव भानत्वादेकत्र च ज्ञाने भानक्रमानुपपत्तेः। शुक्तिव्यक्तेः स्वजातिनिराकाङ्क्षत्वाद्रजतजातेश्च स्वव्यक्तिनिराकाङ्क्षत्वाच्च परस्परसाकाङ्क्षत्वम्। परस्परसाकाङ्क्षरूपरूपिनिरन्तरभानञ्च प्रवृत्तिहेतुरिति चेत्, किन्तर्हि शुक्तिकारजतज्ञाने परस्परसाकाङ्क्षत्वाभाव? किं रजतजातेश्शुक्तिव्यक्तेश्च शुक्तिव्यक्ति रजतजातिज्ञानवगम्य स्वावगमाभावः? किं वा व्यक्तिमात्रं जातिमात्रज्ञानवगम्य? यद्वा स्वसम्बन्धितया व्यक्तिं[2] स्वसम्बन्धितया जातिज्ञानवगम्येति। न प्रथमः; न हि रजतजातिः शुक्तिव्यक्तिं रजतजातिज्ञानवगम्य नावगम्यते; तथा सति सत्ययोरपि शुक्तिरजतयोः परस्परानवगमेना[3]वगममसद्भावात्। नापि द्वितीयः; शुक्तिरजते इत्युभया-

---

१. त् असंसर्गा. क. २ र्थि रजतस्य सम्ब. म. ३. गमप्रसङ्गात्. क

लम्बनज्ञानेऽपि रजतजातेश्शुक्तिव्यक्तेश्च व्यक्तिमात्रं जातिमात्रञ्चानवगम्या-वगमाभावेन परस्परसाकाङ्क्षत्वं निरन्तरभानञ्चाप्यस्तीति शुक्तावपि प्रवृत्तिप्रसङ्गात् । नापि तृतीयः । नहि शुक्तिरजतज्ञाने रजतजातिः शुक्तिव्यक्तिश्च स्वसम्बन्धितया व्यक्तिं स्वसम्बन्धितया जातिञ्चानवगम्य नावगम्येते[3] ; भवतां तथा सत्यन्यथाख्यातिप्रसङ्गात् ।

एतेन रजतजातेः शुक्तिव्यक्तेश्च स्वरूपेणापि परस्परसाकाङ्क्षत्वं निरस्तं वेदितव्यम् ।

स्यादेतत् —निरन्तरभानमेव प्रवृत्तिहेतुः । न च पूर्ववदुभया-लम्बनज्ञाने शुक्तावपि प्रसङ्गः ; तत्र भेदस्याऽपि गृहीतत्वात्, भेदाग्रह-सहितश्च निरन्तरभानं प्रवृत्तिहेतुरिति । यद्येवमुभयालम्बनज्ञाना-द्रजतेऽपि न प्रवर्तेत ; शुक्तित्वस्य भेदस्यापि ग्रहणात् । अथ व्यक्त्यन्तर-गोचरतया भेदग्रहेऽपि न व्यवहारविषयव्यक्तिगोचरतया तद्ग्रहः, तत्रैव च भेदग्रहो निवृत्तिहेतुरिति । यद्येवं किमिदं तद्गोचरत्वम्? तत्रैव चेत्, किं तत्सम्बन्धित्वं तत्तादात्म्यं वा? न चोभयमपि व्यवहारविषयेण भेदस्य शक्यग्रहम् ; समवायस्य भवतामप्रत्यक्षत्वात् तादात्म्यस्य चाभावात् । अस्तु वा तादात्म्यसमवाययोरन्यतरग्रहः तथापि यदि व्यवहारविषयेण भेदकधर्मस्य तादात्म्यसमवाययोरन्यतरग्रहणा[6]न्निवृत्तिः, तर्हि सत्यरजते नेदं रजतमिति न निवर्तेत । न हि तत्रारजतत्वस्य भेदस्य

---

१. न्धित्वव्यक्ति॰ ख॰ ग   २. न्धिजातिश्चा॰ ख॰ ग॰   ३. म्येते॰ ख॰ म्येत॰ घ॰   ४. अथ व्यक्त्यन्तरगोचरतया तद्ग्रहः तत्रैव च भेदग्रहो निवृत्तिरिति । यद्येवं॰ ग॰   ५. ये भेदक॰ ख॰ ङ॰ यभेदक॰ ग॰   ६. ग्रहणाभि॰ ख॰ ग॰ घ॰ ङ॰
७ तत्र रजतत्वस्य॰ ख॰

रजतव्यक्तौ तादात्म्यसमवाययोरन्यतरग्रहस्सम्भवति; भवतामन्यथा-ख्यातिप्रसङ्गात्। अथ तत्रानिष्टरूपस्य भेदकधर्मस्य व्यवहारविपर्येण निरन्तरभानमात्रन्निवर्तकं, तर्हि शुक्तिरजते इत्युभयालम्बनवेदने शुक्ति-जातेरपि व्यवहारविपर्येण निरन्तरभानमात्राद्य रजतेऽपि प्रवृत्तिः स्यात्। अथ व्यवहारविपर्येण निरन्तरत्वेनानिष्टमवगम्य तेन तस्य भेदाग्रहो निवृत्तिहेतुः। प्रकृते च रजतत्वभेदोऽपि गृह्यत इति न निवृत्तिः। तर्ह्यु-भयालम्बनज्ञानाच्छुक्तेरपि न निवर्तेत; रजतत्वस्य[3] भेदस्यापि ग्रहणात्। अतो निरन्तरभानं प्रवृत्तिहेतुरिति रिक्तं वचः[4]। किञ्च यदि ग्रहणस्मरणरूपं ज्ञानद्वयमिदं, तर्हि स्मरणं स्वविषय एवेच्छाञ्जनयेत्, सा च स्वविषय एव प्रयत्नं, स च स्वविषय एव स्पन्दमिति कुतः पुरोवर्तिनि प्रवृत्तिः? न चेदमिति ग्रहणात्; अन्यत्रापीदमिति ग्रहणमात्रेण सर्वादावपि प्रवृत्ति-प्रसङ्गात्।

अथेदमिति ग्रहणेन निरन्तरभानमगृहीतभेदं वा रजतस्मरणमेव पुरोवर्तिनीच्छाप्रयत्नावुपजनय्य[8] प्रवर्तयतीति मतम्। तन्न; न हि निरन्तर-भानात् भेदाग्रहाद्वा वस्तुसामर्थ्यस्यान्यथाभावः। न हि माषबीजं मुद्गबीजेन निरन्तरभानं[11] अगृहीतभेदं[12] वा मुद्गाङ्कुराय[13] प्रभवति। तस्माद्य-द्विषयिणी प्रवृत्तिः तद्विषयिण्येवेच्छा, यद्विषयिणी चेच्छा तद्विषयमेव तद्धेतुभूतज्ञानमिति बलाद्रजतज्ञानस्य शुक्तिविषयत्वं सिद्धम्। किञ्च यदि शुक्तिरजतादौ भेदाग्रहान्निरन्तरभानाद्वा विशिष्टज्ञानमन्तरेणापि

---

१. व्यक्ते. ग. २. रेडपि. ग. ३. तस्य. स. ग. ङ. ४ चः। किञ्च ग्रह. क. च। यदि ग्रह. ग. ५. द भाति. ग. ६. ण सर्वादावपि. घ. ७. इम्मति. क. ८. य्य निवर्तयतीति ग. ९. ति। तन्न. घ. १० दग्र.. घ. ११. तं. क. १२. दं यथामुद्गाङ्कुराय. ख. १३ द्रान्तराय. क

विशिष्टव्यवहारसिद्धिः, तर्हि पदस्मारितानां पदार्थानां परस्परं भेदाग्रहान्निरन्तरभानाद्वा वाक्यार्थेषु विशिष्टव्यवहारः सिध्यति, सिध्यति च व्याप्तलिङ्गदर्शनस्मारितानां धर्माणां धर्मिभिर्भेदाग्रहान्निरन्तरभानाद्वानुमेये विशिष्टव्यवहार इति कृतं शब्दानुमानकल्पनव्यसनेन ।

यत्तु व्यवहारमात्रं प्रति भेदाग्रहस्य निरन्तरभानस्य वा हेतुत्वेऽप्यसाधारणं विसंवादिरूपव्यवहारविशेषं प्रत्यसाधारणं विशिष्टज्ञानमेव हेतुः, विसंवादिनं प्रति तु भेदाग्रहो निरन्तरभानं वा हेतुरिति । तदयुक्तम् ; व्यवहारमात्रं प्रति भेदाग्रहस्य निरन्तरभानस्य वा हेतुत्वे व्यवहारविशेषं प्रत्यपि तद्विशेषस्यैव हेतुत्वानतिवर्तनात् । न ह्यङ्कुरमात्रं प्रति बीजमात्रस्यैव हेतुत्वेऽङ्कुरविशेषं प्रत्यपि तद्विशेषं विहायान्यस्य हेतुत्वं सम्भवति । अतो यत्रासत एव भेदस्याग्रहणं निरन्तरयोर्वा अनिरन्तरभानं तत्राविसंवादिव्यवहारः । यत्र तु दोषवशात् सत एव भेदस्याग्रहणं अनिरन्तरयोर्वा निरन्तरभानं तत्र विसंवादिव्यवहार इति नाविसंवादिव्यवहाराय विशिष्टज्ञानं कल्प्यम् । अथान्यत्राविसंवादिव्यवहारस्य विशिष्टज्ञानपूर्वकत्वव्याप्तिदर्शनात् तद्बलेन तदनुमानं, तर्हि व्यवहारमात्रस्याप्यन्यत्र विशिष्टज्ञानपूर्वकत्वव्याप्तिदर्शनात् तद्बलेन शुक्तिकारजतादावपि विशिष्टज्ञानानुमानात् सिद्धमन्यथाज्ञानम् । प्रयोगश्च भवति, विवादाध्यासिता प्रवृत्तिः स्वविषयरजतज्ञानपूर्विका रजतसाधनज्ञानानधीनत्वे सति रजतार्थिप्रवृत्तित्वात् या उक्तसाधना सा उक्तसाध्या यथा सत्यरजतज्ञानपूर्विका प्रवृत्तिरिति ।

---

१. इमे. क. २. त्वेऽसाधारणविसं. क. ३. नास्य हेतुत्वे. ख. ग. घ. ४ प्रति बीजविशेषं विहायान्यस्य. ख. ग. घ. ५. ज्ञानस्य विशिष्ट. घ. ६. ल्प्यम् । तथान्य. क. ७. न्यत्रापि विशि. ख.

यत्तन्यथाख्यातिपक्षे तदाशङ्कया नाश्वास इति। तन्मन्दम्; भेदाग्रहपक्षेऽपि भेदाग्रहशङ्कयाऽनाश्वासस्य साम्यात्। न चासत्ख्यातिप्रसक्तिः; संसर्गमात्रस्यासतः ख्यातिरन्यथाख्यातिः संसर्गिणोरप्यसतोः ख्यातिरसत्ख्यातिरिति विवेकात्।

यत्तु विवादपदं यथार्थं ज्ञानत्वात् उभयसिद्धवत् इत्यादि, तदुक्तेन क्रमेण रजतार्थिप्रवृत्त्यन्यथानुपपत्तिप्रसूतार्थापत्तिबाधितविषयत्वादसाधनमेव।

यत्पुनर्विषयत्वाऽन्यथाकरणेन रजतज्ञानस्य शुक्तिकाविषयत्वञ्चान रजतप्रतिबद्धव्यवहारानुगुणस्य शुक्तिकाप्रतिबद्धव्यवहारानुगुणत्वं, तच्च प्रतीतिविरुद्धमिति। तदस्मन्मते विषयत्वस्यान्यस्यैवार्थगतस्य समर्थनादपाकरणीयम्।

यत्पुनरिन्द्रियाणां यथार्थज्ञानहेतुत्वाद्दोषाणाञ्च कार्यविहतिमात्रपरत्वादन्यथाज्ञानसामग्र्यभाव इति। तन्मन्दम्; भवन्मतेऽपि भेदाग्रहस्याऽन्यग्रावाघ्यव्यवहारं प्रत्येव हेतुत्वमिति बाध्यव्यवहारं प्रत्यहेतुत्वप्रसङ्गात्। अथान्यत्र तथादर्शनेऽपि व्यवहारान्यथानुपपत्त्या दोषसहायत्वविशेषमुपधाय भेदाग्रहस्यैव हेतुत्वं कल्प्यम्, तदस्मन्मतेऽपि प्रमाणसिद्धविपरीतज्ञानान्यथानुपपत्त्यान्यत्रेन्द्रियाणां यथार्थज्ञानजननस्वभावत्वेऽपि दोषोपहितानामयथार्थज्ञानजननसामर्थ्यं कल्प्यम्। किञ्च दग्धादेरवीजात् कदलीकाण्डोत्पत्तेः दोषस्य कार्यजनकत्वमपि दृष्टम्।

---

१. अन्य. ङ. ग. २. अन्य. क ग.

यस्त्वत्र दाहस्य वेत्राङ्कुरं प्रति दोषत्वेऽपि कदलीकाण्डं प्रति गुणत्वमेवेति परिहृतं, तद्दोषाणां यथार्थज्ञानं प्रति दोषत्वेऽप्यन्यथाज्ञानं प्रति गुणत्वमेवेति तुल्यमिति द्रष्टव्यम्। एवमेव स्थाणुर्वा पुरुषो वेत्यनियतकोटिद्वयविषयविशिष्टव्यवहारस्यानियतकोटिद्वयविषयविशिष्टज्ञानमन्तरेणानुपपत्तेः संशयज्ञानमपि कल्प्यम् । अतस्संशयविपर्यययोर्व्युदासार्थं तत्त्वपदमपि सार्थम् । संशयविपर्ययसाधनादेवातिव्यापित्वेनानुभूतेः प्रमालक्षणत्वमप्यपास्तम् । अविसंवादित्वमपि प्रत्यक्षपरीक्षावसरे निराकरिष्यामः । तत्सिद्धमनधिगततत्त्वज्ञानं प्रमाणमिति ।

इत्यन्यथाख्यातिवादो नाम पञ्चमवादः
परिसमाप्तः ।

---

[साक्षात्प्रतीतिनिरासवादः ।]

किं पुनः प्रत्यक्षम्? केचिदाहुः साक्षात् प्रतीतिः प्रत्यक्षमिति । तदयुक्तम्; साक्षात्त्वस्यानिरूपणात् । स्वकालाकलितवस्त्ववभासित्वं साक्षात्त्वमिति चेत्, किं पुनस्तत्? यदि स्वकाल एव यत् सत् तदवभासित्वं, तर्हि घटज्ञानस्य स्वकालात् प्रागूर्ध्वञ्च घटस्थितेरसाक्षात्त्वप्रसङ्गः । अथ स्वकाले सदेव यत् तदवभासित्वं, तर्हि नित्यवस्तुविषयाणामनुमानादीनामपि साक्षात्त्वप्रसङ्गः ।

---

१ व्यथार्थज्ञानं प्रति॰ प २॰ यविशिष्ट ख प॰ ३॰ म् । अत संशय प ४ ज्ञात्॰ क ५ मादीनामपि क॰

स्यादेतत् — अनुमानादीनां स्वकाले सत एवार्थस्यावभासकत्वं न स्वाभाविकं, भूतभविष्यतोरप्यनुमानाद्यवभासकत्वात्। स्वभावाधीनञ्च तादृशार्थोऽवभासकत्वं साक्षात्त्वमिति चेत्, यद्येवं कुतोऽयं विवेकः [illegible] स्वभावाधीनमिह नेति? यत्रानुमानादौ विषयस्याहेतुत्वं तत्र न स्वभावाधीनं, यत्र तु हेतुत्वं तत्राऽसतो हेतुभावाभावात् सत एवार्थस्यावभासकत्वं स्वभावाधीनमिति चेत्, तर्हि स्वात्मन्यसाक्षात्त्वप्रसङ्गः; स्वं प्रति स्वस्य विषयत्वहेतुत्वयोरनभ्युपगमादयुक्तत्वाच्च।

स्वकालविशिष्टार्थावभासकत्वं साक्षात्त्वमिति चेत्, न; निर्विकल्पके स्वात्मात्मनोश्चासाक्षात्त्वप्रसङ्गात्। न हि तत्र स्वकालो विशेषणविशेष्यभावश्च प्रतीयते।

स्यादेतत्--इदमहं जानामीति व्यवहारानुगुणत्वं साक्षात्त्वमिति चेत्, तन्न; निर्विकल्पकस्य तादृशव्यवहारानुगुणत्वाभावेनासाक्षात्त्व प्रसङ्गात्। अथ सविकल्पके दर्शनादैन्द्रियकज्ञानत्वेन निर्विकल्पकेऽपि तत् कल्प्यम्; तर्हि ज्ञानत्वेनानुमानादिष्वपि कल्प्यताम्। ऐन्द्रियकज्ञानेष्वेव तद्दर्शनाद्विशेषप्रयुक्तव्याप्त्युपजीवित्वेन ज्ञानत्वेनाऽनुमानादिषु तत्कल्पनमशक्यमिति चेत्, तर्हि सविकल्पकत्वविशेषप्रयुक्तव्याप्त्युपजीवित्वेनाप्यैन्द्रियकत्वेन तत्कल्पनमशक्यमेवेति प्राप्तमसाक्षात्त्वम्।

साक्षाद्धीः स्वरूपधीरक्षादि स्वेन रूपेण भान, लिङ्गानुपपत्त्यादिभ्यस्तु व्यापकोपपादकत्वादिरूपेण भान, न स्वरूपेणेति न साक्षाद्धीरिति

---

१ तुल्याभावात् ग तुल्याभावात् घ २ स्वविशिष्टा०. ख ह ३. स्यस्वात्मा० ग ४ ति निर्विषयस्य ०प्य० ग ति निर्विषयव्यवहारानुगुणस्य घ ५. त्।न घ ६. त्वेनानुमानादिषु कल्पनमशक्यमिति चेत्, तर्हि क ७० [illegible] तत् कल्प्यताम्, घ ८ द्विकल्पनमश० च ९ न शक्य०. घ

चेत् तर्हि सविकल्पके नामादिरूपेण भानं न स्वरूपेणेति न साक्षात्त्वम्। यत्तु निर्विकल्पके स्वरूपधीदर्शनात् सविकल्पकेऽपि तत्कल्पनम्; तत् ज्ञानत्वेनानुमानादिष्वपि पूर्वोक्तेन नयेन स्वरूपधीप्रसङ्गेन पराकरणीयम्।

यत्तु स्वरूपधियो व्याख्यानान्तरं स्वविषयानन्तर्गतार्थान्तरज्ञानाव्यवहितत्वमिति, तन्मन्दम्; अनुमानज्ञानस्य स्वविषयानन्तर्गतार्थान्तरज्ञानोपायस्य[1] स्वात्मात्मानौ प्रत्यपि[2] ताद्रूप्येनासाक्षात्त्वप्रसक्तेः। प्रकारान्तराणि तु स्वैयूथ्यैरेव[3] निरस्तानि नास्माभिर्निरस्यन्ते। किञ्च किमिदं साक्षात्त्वं दीर्घह्रस्वत्वादिवत्[4] सप्रतियोगिकम्, उत घटादिधर्मिवदप्रतियोगिकम्? पूर्वत्र स्वस्य स्वस्मादनन्यत्वेन स्वप्रतियोगित्वाभावेन स्वस्मिन्नसाक्षात्त्वं स्यात्, ततश्च सर्वत्र प्रतीतिरात्मस्वात्मनोरसाक्षात्कारवतीति रिक्तं वचः प्रसजेत्। उत्तरस्मिंस्तु निष्प्रतियोगित्वादनुमानज्ञानस्य ज्ञेयं प्रत्यपि साक्षात्त्वं स्यात्, आत्मस्वात्मानौ प्रत्यपि न वा स्यात्। तस्मात् साक्षात्प्रतीतिः प्रत्यक्षम्।

इति साक्षात्प्रतीतिनिरूपणवादो नाम

षष्ठवादः परिसमाप्तः।

---

१. ०यान्तर्गत० घ. २. ०पि ताद्रूप्य० ग. ३. स्वयूथ्यैरेव० क. घ.
४. ०त्वादिव० क. ग. ङ.

[ कल्पनापोढनिरासवादः ।]

नापि कल्पनापोढमभ्रान्तं प्रत्यक्षम्; सविकल्पकस्याप्रत्यक्षत्व-प्रसङ्गात्। नन्वप्रत्यक्षमेव सविकल्पकम्; अप्रमाणत्वात्। अप्रमाणत्वञ्चाविसंवादित्वाभावात्। तदयुक्तम्। तथाहि—किमिदमविसंवादित्वं, यस्य प्रमाणलक्षणत्वं; किं वस्तुविषयत्वं, किं वार्थक्रियासमर्थवस्तुप्रदर्शकत्वम्, उतार्थजत्वम्, उत बाधरहितत्वम्? इति। न प्रथमः; सामान्यादेर्वस्तुत्वे सविकल्पकस्यापि प्रामाण्यापत्तेः। अवस्तुत्वेऽनुमानस्याप्यप्रामाण्यप्रसङ्गात्। न द्वितीयः; भूतभविष्यतोरनुमानस्याप्रामाण्य-प्रसङ्गात्। नापि तृतीयः। तथाहि—किं खल्वर्थजत्वमभिमतम्, किं साक्षात् उत परम्परयापि? पूर्वस्मिन्ननुमानस्याप्रामाण्यप्रसङ्गः, यतस्तत्र वह्निस्वलक्षणाद्धूमस्वलक्षणं, ततो धूमानुभवः, ततो धूमविकल्पः, तदनन्तरं वह्निविकल्पः। उत्तरस्मिन् सविकल्पकस्मृत्योः प्रामाण्यप्रसङ्गः; तयोरपि परम्परयार्थजत्वात्। न चतुर्थः; तत एव प्रसङ्गात्। किञ्च सविकल्पकस्याविसंवादित्वमवश्याङ्गीकरणीयम्; अविकल्पकस्यापि तद्द्वारेणैवाविसंवादात्; अन्यथा क्षणमात्रग्राहिणो निर्विकल्पकस्य स्वविषयप्राप्त्यादिरूपाविसंवादानुपपत्तेः। अतस्[illegible]नगोचरत्वेनाऽध्य-वसायद्वारा निर्विकल्पकस्य प्राप्त्याऽभ्युपगमादनुमानविकल्पवत् सवि-कल्पकस्याविसंवादिप्रामाण्ये दुरपह्नवे एव। तथापि कथं प्रत्यक्षत्वमिति चेत्, प्रमाणत्वे सत्यपरोक्षत्वादिति ब्रूमः। ननु विकल्पा नापरोक्ष्यभाजः विकल्पत्वात्, सम्प्रतिपन्नविकल्पवत्।

---

१ वस्तुविषयत्वम् ग. २. न भू- भ. ग. न तृतीय तथाहि. ह ३. र्थमिति चेत्- अ ग क ४. प्रसङ्- प ह

यस्तु सविकल्पकेष्वापरोक्ष्यव्यवहारः नासौ विकल्पस्वभावकृतः किन्तु निर्विकल्पकसंसर्गकृतः; अन्यथानुमानादिविकल्पेष्वप्यपरोक्षव्यवहारप्रसङ्गात् । तदयुक्तम् ; परोक्षत्वापरोक्षत्वयोरक्षजन्यत्वानक्षजन्यत्वप्रयुक्तत्वात् । इतरथा मनोराज्यविकल्पवत् सविकल्पकानामपि परोक्षत्वेनैव व्यवहारप्रसङ्गात् । निर्विकल्पकसंसर्गकृतस्तत्रापरोक्षव्यवहार इति चेत् न; प्रमाणाभावात् । किञ्चाविसंवादित्वे सत्यक्षजत्वेनापि सविकल्पकानां प्रत्यक्षत्वं सिद्धम् । न चाक्षजत्वमसिद्धम् ; तदन्वयव्यतिरेकानुविधानस्य निर्विकल्पकवदेव सिद्धत्वात् । न च शब्दादिस्मरणव्यवहितत्वान्नाक्षजत्वम् ; तेषामक्षसहकारित्वात् सहकारिणाञ्च व्यवधायकत्वाभावात् । अतः सविकल्पकानामपि प्रमाणत्वप्रत्यक्षत्वयोरन्वयात्तदव्यापित्वेन सौगतोक्तमप्यलक्षणमेव ।

इति कल्पनापोढनिरासवादो नाम सप्तमवादः
परिसमाप्तः ।

---

[योगरूढिवादः ।]

किन्तर्हि प्रत्यक्षं[4], कश्च तद्विषयः ? उच्यते—

> मानमिन्द्रिययोगोत्थमिह प्रत्यक्षमुच्यते ।
> [5]द्रव्यं जातिर्गुणः कर्म विषयश्च चतुर्विधः ॥

इन्द्रियसन्निकर्षजं[6] प्रमाणं प्रत्यक्षम् । तच्च द्विविधम्, निर्विकल्पकं सविकल्पकञ्चेति । तत्रापातजं विशुद्धवस्तुविषयं[7] निर्विकल्पकम् । तदनन्तरजं विशिष्टवस्तुविषयं सविकल्पकम् ।

---

१. कथविकल्पस्वकृतः. म. २. ष्वपरोक्ष्य- क. ३. दन्वयव्या- ख. ह. ४. क्षम् ? उच्यते. ख. ह. ५. पयोऽस्य. घ. ६. कर्ष । तत्राद्य- ख. ह. ७. जं शुद्धवस्तु. ख. घ. ङ.

ननु कथन्तर्हि सविकल्पकस्य प्रत्यक्षशब्दवाच्यत्वम्? तस्य निर्विकल्पकव्यवधानेन साक्षादक्षजत्वाभावात्। परम्परयाऽक्षजस्यापि तद्वाच्यत्वेऽनुमानादीनामपि तद्वाच्यत्वप्रसङ्गात्। तदयुक्तम्; सविकल्पकानामपि निर्विकल्पकवदेव साक्षादक्षजत्वात्[1]। भवतु वा परम्परयाऽक्षजत्वं तथापि नानुमानादिषु प्रसङ्गः; पङ्कजादिष्विव रूढिशक्तेरप्याश्रयणात्। ननु न पङ्कजादिषु रूढिरस्ति; अवयवशक्त्यैवं प्रवृत्त्युपपत्तेः[2]। न चान्यत्र सौगन्धिकादिष्वप्रयोगाय तदाश्रयणम्; अन्यत्राप्रयोगस्याप्रयोगादेवोपपत्तेः। न च यौगिकानामवयवार्थान्वयद्वारा वर्त्तमानानामवयवयोः स्वार्थे प्रयोगादितरस्य[3] प्रयोगस्याभावात् पङ्कजनिशब्दयोश्च पङ्कजन्मनोः प्रयुक्तत्वादप्रयोगोऽसिद्ध इति वाच्यम्; अवयवयोः स्वार्थे पृथक् पृथक् प्रयोगेऽपि सौगन्धिकादिष्वपृथक्प्रयोगस्यासिद्धत्वात्। किञ्च योगरूढिस्वीकारेऽपि सौगन्धिकादिषु पृथक् प्रयोगवशेन[4] पङ्कजशब्दस्य प्रयोगो दुर्वार एव। तत्र प्रयोगप्रतिबन्धकल्पनादप्रयोग इति चेत्तर्हि प्रतिबन्धादेवान्यत्राप्रयोगोपपत्तेः कृतं रूढिस्वीकारेणेति। अत्रोच्यते —

> वृत्तिः पङ्कजशब्दस्य पद्मे रूढिश्च युज्यतः।
> अप्रयोगो न चोत्पायः[5] प्रतिबन्धो न चाहतः॥

पुष्पभेदे हि तामरसत्वजातौ पङ्कजशब्दस्य प्रवृत्तिरन्तरेण[6] रूढिमवयवशक्तिमात्रान्नोपपद्यते; तन्मात्रस्य व्यभिचारित्वेनासामग्रीत्वात्। यस्यां सत्यां हि यज्जायत एव सैव तस्य सामग्री। न चावयवशक्तौ सत्याञ्जायत

1. पि निर्विकल्पवदेव तद्वा०. घ. 2. व वृत्त्युपपत्ते. ख. क. 3. स्य च प्रयोगस्याभावात्. घ. 4. योजनवशेन. घ. 5. बन्धि. ख. ग. क. 6. स्य वृत्तिमन्तरेण. ग.

एव पङ्कजशब्दस्य प्रवृत्तिः, सौगन्धिकादिष्वदर्शनात्। अतो न तन्मात्रं सामग्रीति तदतिरिक्तं शक्त्यन्तरं कल्प्यम्। सैव च रूढिरित्युच्यते। न च प्राचीनप्रयोगस्यापि प्रयोगहेतुत्वात् सौगन्धिकादिषु तदभावादेवाप्रयोग इति वाच्यम्; तथा सति सर्वत्र प्राचीनप्रयोगस्यैव प्रयोगहेतुत्वमित्यश्वकर्णादावपि रूढेरभावप्रसङ्गात्। अथ प्राचीनप्रयोगस्य न प्रयोगहेतुत्वमपि तु शक्त्यवगमकत्वम्, अवगता तु शक्तिः प्रयोगमूलमित्यश्वकर्णादिषु रूढिराश्रयणीया तर्हि पङ्कजशब्देऽपि प्राचीनप्रयोगः शक्त्यवगममात्रहेतुः, अवगता तु शक्तिः प्रयोगमूलमिति प्राप्तैव रूढिः। न च रूढेरेव प्रवृत्त्युपपत्तेरकारणं योगः; तस्यान्यत्र वृत्तिहेतुत्वस्थितेरिहापि तदबाधनात्। न हि सामग्रीत्वमिव कारणत्वमपि कार्यव्यभिचारो रुणद्धि। अतोऽन्ययौगिकेषु योगमात्रस्यैव प्रवृत्तिं प्रति कारणत्वसामग्रीत्वयोर्दर्शनेऽपि पङ्कजशब्दस्य वृत्तौ योगमात्रस्य सामग्रीत्वं सौगन्धिकादिषु व्यभिचारो बाधते, न कारणत्वमात्रमपीति कारणमेव योगोऽपि। तदिदमुच्यते–प्रतीतन्तु योगं न हातुं क्षमामहे इति। रूढ्यनङ्गीकारे कथं सौगन्धिकादिष्वप्रयोग इति प्रश्नस्याप्ययमेवार्थः यद्युत यदि योगमात्रं वृत्तिसामग्री स्यात् तर्हि सौगन्धिकादिष्वपि प्रयुज्येत, न च प्रयुज्यते, अतः कथं योगमात्रं सामग्रीति। तथा च प्रश्नार्थे व्यवस्थिते यदुक्तमप्रयोगादेवाप्रयोग इति, तद्दूषोत्तरमेव; अप्रयोगहेतोरपृष्टत्वात् प्रयोगप्रागभावरूपत्वेन हेतुशून्यत्वाच्च।

---

१. इय वृत्तिः. म. ङ. २. प्री तद ग ङ. ३ न हेतुत्व. घ. ४. अतः प्रा., . ङ. ५. न वृत्ति प्रति. ख. ग. घ. ङ. ६. स्यायमर्थः तदुत. घ. ७. तद्दूषोत्तर. ग.

यत्पुनर्योगरूढिस्वीकारेऽपि सौगन्धिकादिष्वप्रयोगाय प्रतिबन्धशक्तिरादरणीयेति। तदयुक्तम्; योगरूढेः सामग्रीत्वस्थितौ सौगन्धिकादिषु सामग्र्येकदेशाभावादेवाप्रयोगोपपत्तेः।[1] अतस्तामरसत्वजातेः पङ्कजशब्दवाच्यत्वं[2] न केवलयोगो, नापि केवलरूढिः, किन्तु योगरूढिरिति सिद्धं, सिद्धश्च तद्वदेव सविकल्पज्ञानामपि प्रत्यक्षशब्दवाच्यत्वं न[3] विरुद्धमिति।

इति योगरूढिवादो नामाष्टमो वादः
परिसमाप्तः।

[ इन्द्रियवादः । ]

कानि पुनरिन्द्रियाणि? चक्षूरसनघ्राणस्पर्शश्रोत्राणि मनश्च। तत्र रूपप्रतीतिहेतुत्वेन सिध्यतश्चक्षुषस्तेजोऽन्तरसाधारण्यात्तैजसत्वं, रसोपलम्भहेतुत्वेन सिध्यतो रसनस्य जिह्वोदकसाम्यादाम्भसत्वं,[4] गन्धोपलम्भहेतोश्च[5] घ्राणस्य चन्दनगतनिम्बरागानुलेपनसाम्यात् पार्थिवत्वं, स्पर्शोपलम्भहेतोः स्पर्शनस्य व्यजनानिलसाम्याद्वायवीयत्वं,[6] शब्दोपलब्धिहेतोः श्रोत्रस्य बहिरिन्द्रियत्वेन चक्षुरादावनन्येन्द्रियोपादानजातीयभूतात्मैकत्वनियमादाकाशात्मकत्वं, त्वगिन्द्रियसाम्याद्बहिरिन्द्रियत्वेन सर्वेषां[7] प्राप्यकारित्वं, तद्बलादेव च पर्वतादिपृथुद्रव्यदृष्ट्या[8] समकालदृष्ट्या च चक्षुषस्तन्ततत्वं पृथ्वग्रत्वमदृष्टोपगृहीतेन बाह्यतेजसैकीभूय ग्राहकत्वमित्यादि सिद्धम्।

इतीन्द्रियवादो नाम नवमो वाद.
परिसमाप्तः।

---

१. शमःवादेव. ग. शमावादेवाप्र योगापत्तेः. घ.　२ च्यत्वे. घ.　३. न विरुद्धमिति. क. नाविरुद्धमिति. ख. ग. नाविरुद्धमिति ङ.　४. दम्भसत्वं. ङ. ५. तोश्च. घ.　६. वीस्य. व्यजना ख. ग. र्शव्यजनानि. ङ. ७. रसत्वानि. क. ङ. रसनि. ग. ८. पृथग्दृष्ट्या. ग.

[ मनोवैभववादः । ]

कथं पुनरप्यस्य मनसस्सिद्धिः कथञ्च तद्वैभवम्? उच्यते—सुखाद्यपरोक्ष्यसाधनेन्द्रियत्वेन तावन्मनस्सिद्धिः। वैभवन्तु मनो विभु स्पर्शानर्हद्रव्यत्वादनारभ्यारम्भकद्रव्यत्वाद्वा, ज्ञानासमवायिकारणसंयोगाधारत्वाद्वा, आत्मवत्। न चासिद्ध्यादिदोषसम्भवः।

यत्तु विभुत्वं विभ्वन्तरासंयोगित्वेन व्याप्तमिति मनसो विभ्वन्तरसंयोगित्वाद्विभुत्वं विशेषविरुद्धमिति, तद्विभूनामपि परस्परसंयोगित्वस्यैव वक्ष्यमाणत्वाद्व्याप्त्यसिद्धेरदूषणम्।

ननु धर्मिग्राहकप्रमाणबाधितान्यनुमानानि। तथा हि–ग्रेषा हि मनोधर्मिणो ग्रहणं सम्भवति; युगपज्ज्ञानानुत्पत्तेर्नित्यद्रव्यगतवैशेषिकगुणासमवायिकारणभूतद्रव्यान्तरसंयोगाश्रयत्वेन, सुखाद्यपरोक्ष्यसाधनेन्द्रियत्वेन वा इति। तत्र युगपदिन्द्रियैर्भूयसामर्थानां सम्बन्धे सति युगपज्ज्ञानानुत्पत्तिर्यदा मनसि लिङ्गं तदा विभुनो मनसस्सर्वार्थान् प्रत्यविशेषाद्व्यवस्थापकत्वाभावाददृष्टस्य च व्यवस्थापकत्वे मनःकल्पनावैयर्थ्यादणुत्वे चागन्तुकासाधारणसंयोगवशेन व्यवस्थोपपत्तेर्मनोग्राहकमेव प्रमाणमणुत्वमपि गृह्णातीति। यदा च ज्ञानं द्रव्यान्तरसंयोगासमवायिकारणकं अनित्यत्वे सति नित्यद्रव्यगतविशेषगुणत्वात् पार्थिवपरमाणुरूपवदिति संयोगिद्रव्यत्वेन मनोनुमानम्; तदापि कारणाभावेन विभुनोस्संयोगाभावान्मध्यमपरिमाणस्य च कार्यत्वव्याप्तेः कार्यत्वस्य च बहुदोषत्वात् संयोगिद्रव्यत्वेन मनःसिध्यदणुपरिमाणमेव सिध्येदिति। यैरपि सुखा-

---

१. नसः सिद्धिः. क. ख. घ. ङ. २. नामेव. क. ३. नुपपत्तिर्यदा. ग. ४. व्याप्ति. ग. घ.

थापरोक्ष्यस्येन्द्रियत्वव्याप्तत्वादिन्द्रियत्वेन मनस्साध्यते, तैरपि विभुनोऽनुपहितस्येन्द्रियत्वायोगाच्छरीरावयवानाञ्चोपाधित्वे तेषां[1] कादाचित्कत्वाच्चक्षुरादिवत्तन्निरोधे मनोनिरोधापत्तेः सकलशरीरोपाधित्वेऽपि विभुकार्यस्यासमवायिकारणनियमादेव देशनियमादात्ममनस्संयोगस्य चासमवायिकारणत्वात्तस्य च सकलशरीरव्याप्तेः[2] शिरसि सुखं पादे वेदनेति सुखवेदनयोरव्याप्यवृत्तित्वप्रतीतिविरोधादन्यस्य चोपाधेरसम्भवाद्विभुत्वं परित्यज्यारभ्यत्वे प्रमाणभावात्, बलादणुपरिमाणमेव मनः स्वीकरणीयमिति सिद्धो धर्मिग्राहकप्रमाणबाध इति।

अत्रोच्यते—न तावद्युगपज्ज्ञानानुत्पादो मनसो लिङ्गम्; सिद्धेऽपि मनसि सम्यगभ्यस्तसमस्तशास्त्रार्थविषयसंस्कारानिकुरुम्बस्यात्मसमवेतस्य संयुक्तसमवायसम्बन्धेन मनसा युगपदधिष्ठितत्वात् स्मृतियौगपद्यमनिवार्यमिति। न च संस्कारोऽनुद्बुद्धः; तस्य प्रणिधानेनोद्बोधनात्। न च प्रणिधानमेव युगपदनेकविषयं न सम्भवतीति; तद्धीन्द्रियाणि स्वविषयेभ्यो व्यावर्त्य स्मृत्यपेक्षया मनसोऽवस्थानम्, तच्च सकलशास्त्रार्थविषयमपि युगपत्सम्भवत्येव। न च संस्कारस्य प्रणिधानमात्रमनुद्बोधकम्; अन्यत्राप्यनुद्बोधकत्वप्रसङ्गात्। अथ प्रणिधानस्य क्रमेण संस्कारोद्बोधकत्वं उद्बुद्धस्य संस्कारस्य वा क्रमेण स्मृतिजनकत्वं स्वभाव इत्यास्थेयम्, तर्हि लाघवाय सर्वत्र कर्तुरेव क्रमज्ञानजनकत्वं स्वभाव इति किमन्तर्गडुना तदर्थं मनःपरिकल्पनेन? नन्वेवं मनस्यक्लृप्ते ज्ञानक्रिया कारणशून्या स्यात् चक्षुरादीनां व्यभिचारित्वेनाकारणत्वात्। एवन्तर्हि क्रियाकारणत्वेन मनस्सिद्धिः, न युगपज्ज्ञानानुत्पादोपपादनाय। किञ्च क्रियाकारणत्वेनापि न शरीरातिरिक्तस्य सिद्धिः; तस्य प्रमाणान्तरप्रतिपन्नस्याव्यभि-

---

१ षां कादाचित्कत्वात्. घ. २. रव्याप्तेश्शिरसि. क.

चारित्वेन कारणत्वोपपत्तेः नार्थान्तरत्वस्य कारणभाव इति । एवञ्च क्रमज्ञानजननस्वभावस्य कर्तृगोचरस्य कारणगोचरस्य वाऽवश्याश्रयणीयत्वात् तेनैव युगपज्ज्ञानानुत्पत्तेरुपपत्तेर्न मनःसिद्धिः, न तरां धर्मिग्राहकप्रमाणबाध इति ।

यत्त्वनित्यत्वे सति नित्यद्रव्यगतविशेषगुणत्वात् संयोगिद्रव्यत्वेन मनोऽनुमानं, तत् सर्वत्र सपक्षे तेजोरूपसंयोगिद्रव्यस्य दर्शनान्मनसस्तेजोव्यतिरिक्तस्यानुमानं विशेषविरुद्धम् । किञ्च द्रव्यान्तरं शरीरमेवास्तु, किम्मनोऽपरिकल्पनेन ? न च कादाचित्कसंयोगव्याप्तेर्नित्यक्षशरीरस्य ज्ञानानुदयप्रसङ्गः; जीवच्छरीरस्य सर्वदैवोच्छ्वासादिभिरीषच्चलनस्यावश्यकत्वात् । अन्यथा शरीरत्वमेव हीयेत; चेष्टेन्द्रियाश्रयस्य तत्त्वेन स्वीकारात् । अतो नैवं धर्मिग्राहकप्रमाणबाध इति ।

यत्पुनः सुखाद्यपरोक्षस्येन्द्रियजत्वव्याप्तत्वादिन्द्रियत्वेन मनोऽनुमानं तदनुमन्यामह एव । यच्च विभुनोऽनुपहितस्य नेन्द्रियत्वमिति तदभ्युपगतमेव, शरीरस्योपाधित्वात् । न च तदुपाधित्वे मनस्संयोगासमवायिकारणयोर्शिरःपादवेदनयोरव्याप्यवृत्तित्वविरोध इति वचनीयम्; अणुत्वेऽपि विभुकार्याणामसमवायिकारणनियमेन देशनियमात् । सकलशरीरसम्बन्धिदहनचन्दनजनितयोस्सुखदुःखयोः व्याप्यवृत्तित्वं युगपच्छिरःपादयोः कण्टकविद्धस्य वेदनाया युगपदुभयवृत्तित्वञ्च विरुध्यत इत्यतोऽणुत्वमहत्त्वयोर्गुणदोषतुल्यतया नाणुत्वमेवानेनाप्यनुमानेन स्वीकरणीयम् । तस्मात्सुखाद्यपरोक्ष्यमिन्द्रियमात्रसाधनं, विभुत्वाणुत्वे पुनस्तस्य प्रमाणान्तराधीने एव । तत्र विभुत्वे प्रमाणं प्रागेवोपन्यस्तम् ।

---

१. नः कल्पनेन- ग. २. न हेतोः कादाचित्क०. घ, ३. दृष्टी. ख. ङ, ४. तिविरोध ख. ङ, ५ नाव. ख. ङ.

यत्तु मनः परमाणुपरिमाणं नित्यत्वे सति विभुसंयोगित्वात् पर-विशेषगुणासमवायित्वे सति नित्यत्वाद्वा तैजसपरमाणुवदित्यादि ; तदारम्भकत्वस्यानिन्द्रियत्वस्य भूतत्वस्य स्पर्शवत्त्वस्य[२] चाणुत्वेन व्याप्ते-रनेवंविधे मनस्यणुत्वं गृह्यद्विशेषविरुद्धमेव । अतः स्थितं मनसो वैभवमिति[३]।

ननु यद्यपि सुखाद्यापरोक्ष्यसाधनत्वेनेन्द्रियमनुमितं तथान्त-र्मुखत्वाच्चक्षुरादिविलक्षणम्, इन्द्रियान्तरत्वाच्च भूतारब्धं, करणत्वात् कर्तृविलक्षणञ्च तथापि दिक्कालयोरन्यतरदेव भवेत् कथं द्रव्यान्तरम् ? इत्थं यदा हि मनः प्रमाणवशाद्विभुत्वेनेन्द्रियत्वेन ज्ञानमात्रकरणत्वेन च स्थितं[४] तदेन्द्रियं, यत्र प्रत्यक्षज्ञाने करणं तत्र प्रायेण साक्षात्परम्परया वा सम्बद्धमेव करणीभवतीति प्रत्यक्षज्ञानोत्पत्तावश्यमर्थेन मनस्सन्निकर्षोऽपि वाच्यः। एवञ्च यस्य प्रत्यक्षत्वं तस्य मनस्सम्बन्धित्वमेव, यस्य मनस्स-म्बन्धित्वन्तस्यैव प्रत्यक्षत्वमिति मनस्सम्बन्धिन एव ते, न मनः। तस्मान्मनो द्रव्यान्तरमिति सिद्धम्।

इति मनोवैभववादो नाम दशमो वाद
परिसमाप्तः।

[आत्मसंयोगवाद ।]

ननु विभुत्वे[६] मनसः कथमात्मना संयोगः[७] ? कथं न संयोगः ? विभुद्रव्यस्य विभुद्रव्येण संयोगादर्शनादिति चेत्, तर्हि किं विभुद्रव्यस्या-

१. विकारणाधारत्वे सति. क. घ. २. स्य चाणुत्वेन ख. ङ. ३ मेवाव-स्थितं मनोवैभवमिति. घ ४. तं तदेन्द्रिय. घ ५ क्षमिति. ग ६. त्वेन मनस ख. ङ. ७ न विभुद्रव्यस्य. घ. ८. भुद्रव्येण संयोगो दृष्टः घ.

विभुद्रव्येण संयोगो[1] दृष्टः येनाविभुत्वे मनस्संयोगो युज्येत। न च घटादेराकाशादिसंयोगो दृष्ट इति वाच्यम् ; प्रत्यक्षाप्रत्यक्षसंयोगस्याप्रत्यक्षत्वात् । आत्मनो मानसत्वपक्षेऽपि द्रव्यान्तरस्य मानसत्वाभावान्मानसामानससंयोगस्यामानसत्वं असमानेन्द्रियग्राह्यतरुमरुत्संयोगवत् । अतः कथमविभुद्रव्यसंयोगादिसिध्येत् ? न च विभुद्रव्यस्याविभुद्रव्यसंयोगेन विना[2] किञ्चिदनुपपन्नं ; येनार्थापत्त्या स कल्प्येत । अनुमानं तु संयोगस्य स्पर्शवद्द्रव्यैकाश्रितत्वनियमाद्विशेषविरुद्धमेव । अतः स्पर्शविधुरत्वादनारम्भा[3]रम्भकद्रव्यत्वाच्च सामान्यादिवद्घटसंयोगं प्रत्याकाशादेरनर्हत्वमेवेति सकलमूर्[4]त्तिमद्द्रव्यसंयोगित्वलक्षणं विभुत्वमेव हीयेत । तस्मात् क्लृप्तक्रियेण घटादिना विभुद्र[5]व्यस्य संयोगाभाव इति दूरे स्पर्शविधुरत्वादनारम्भारम्भक[6]त्वाच्च विरुद्धक्रियेण[7] क्रियाकल्पनापुरस्सरं मनसा संयोगसम्भव इति ।

नन्वेवमस्मत्पक्षे विभुद्रव्यस्य विभ्वन्तरसंयोगवदविभुद्रव्येणापि माभूत् संयोगः । भवत्पक्षे वा कथं द्वयमुपपादनीयम् ? इत्थं—प्रागाकाशमुदगाकाशं प्राचीनो घटः प्रतीचीनो घट इति च तुल्यतया दिगाकाशसंयोगस्य दिग्घटसंयोगस्य च प्रत्यक्षत्वाद्विभुद्रव्यस्य विभ्वन्तरसंयोगित्वमविभुद्रव्यसंयोगित्वञ्च दृष्टमित[8]रत्रान्यत्रापि शक्यमनुमातुम् । तथा च विभुनी द्रव्ये परस्परसंयोगिनी अनारभ्यारम्भकद्रव्यत्वे सति[9]

---

१. ष्टः यदविभुत्वे. क. ख. ङ.   २. ना यत्किञ्चिदनुपपन्नं. घ.   ३. नारम्भकद्रव्यत्वा. ग.   ४. मूर्त्तद्रव्य. ख. ङ.   ५. द्रव्यसंयोगा. क. द्रव्येण. संयोगा. ग.   ६. कद्रव्यत्वाच्च. ग.   ७. ण घटक्रियाकल्प. ग.   ८. त्रत्रापि. घ   ९. कत्वे सति. ग.

निरन्तरत्वात्, घटपटवत्। तथाकाशं कालसंयोगि कालव्यतिरिक्तत्वे सति द्रव्यत्वाद् घटवदित्यादि द्रष्टव्यम्। न च संयोगस्यान्यतरकर्मजत्वमुभयकर्मजत्वं संयोगजत्वं वेति नियमाद्विशेषविरुद्धत्वं; प्रागुक्तेन न्यायेन नियमासिद्धेः, स्पर्शत्वद्रव्यसंयोगत्वप्रयुक्तव्याप्त्युपजीवित्वाच्च। वाऽसिद्धमात्ममनस्संयोगस्य कारणाभावादजत्वं विभ्वन्तरसंयोगिनोऽपि मनसो वैभवञ्चेत्यलमतिविस्तरेण। प्रकृतमनुसरामः। सिद्धानि तानि मनःषष्ठानीन्द्रियाणि सिद्धश्च तत्सन्निकर्षजं प्रमाणं प्रत्यक्षमिति ॥

इत्यक्षसंयोगवादो नामैकादशवादः
परिसमाप्तः।

---

[ पवनाकाशप्रत्यक्षतावादः । ]

कः पुनरस्य विषयः?

द्रव्यञ्जातिर्गुणः कर्म विषयोऽस्य चतुर्विधः।

तत्र पृथिव्यप्तेजश्शब्दात्मनां प्रत्यक्षत्वमविवादम्। दिक्कालयोस्तु प्रमाणपरीक्षावसरे समर्थनम्। पवनाकाशयोस्तु समर्थ्यते—वायुः प्रत्यक्षः महत्त्वानिन्द्रियत्वे सति स्पर्शवत्त्वाद् भूतत्वाद्वा घटादिवदिति। किञ्च शीतोष्णानुष्णाशीतस्पर्शेषु स्पर्शनेनैकं वायुद्रव्यं

१. द इत्यादि द्रष्टव्यम्. घ. २. त्वं संयोग. क. ३. त्वम्. ग. घ. ४. सिद्धस्तावन्मनःषष्ठा.. क. ग. सिद्धानि तावन्मनः.. घ. ङ. ५. जं प्रत्यक्षं प्रमाणमिति. घ. ङ. ६. त्मनां. घ. त्मनामविवादम्। कालदिशोस्तु. क. ७. कालदिशोस्तु क [illegible] घ. ङ. ८. प[.] किञ्च. क. ख घ ङ.

प्रत्यभिज्ञायते। न च तत्र स्पर्शमात्रं प्रत्यभिज्ञाविषयः; परस्परविलक्षणतया स्पर्शानुसन्धानसमय एव वायुद्रव्यस्यैकस्य प्रत्यभिज्ञानात्।

यत्पुनरप्रत्यक्षो वायुः आत्मव्यतिरिक्तत्वे सति नीरूपद्रव्यत्वान्मनोवदित्यादि, तद्दिक्कालादीनां प्रत्यक्षत्वसमर्थनेनानैकान्तिकीकरणीयम्। आकाशप्रत्यक्षत्वं पुनराकाशमित्यन्यथानुपपत्तिप्रसूतार्थापत्तिप्रमाणकम्। न च शब्दस्य विशेषगुणत्वात् तदाश्रयत्वेन शब्दाल्लिङ्गानुमानादेव तत्सिद्धिः; शब्दस्य गुणत्वासिद्धेः। सिध्यतु वा तथापि कथं दिक्कालातिरिक्तसिद्धिः? भवत्यतिरिक्तसिद्धिः, तयोर्विशेषगुणशून्यत्वेनाश्रयत्वायोगादिति चेत्, तदयुक्तम्; शब्दाश्रयत्वेनाकाशस्यान्यतोऽसिद्धेः, असिद्धद्रव्यकल्पनापूर्वकाश्रयत्वकल्पनात् सिद्धद्रव्यगोचराश्रयत्वमात्रकल्पनस्यैव लाघवाद्दिक्कालयोरेव शब्दाश्रयत्वप्राप्तौ विशेषगुणशून्यत्वासिद्धेः। न च बाह्येन्द्रियग्राह्यविशेषगुणस्य भूताश्रयत्वनियमात् भूतत्वेनाकाशसिद्धिः; भूतत्वस्यापि पूर्वोक्तक्रमेण दिक्कालादिष्वपि सुप्रवेशत्वशक्तेः। किञ्चाकाशं प्रत्यक्षं अमनस्त्वे[6] सति विभुत्वादात्मवत्। न चेदमाकाशमप्रत्यक्षं अनात्मत्वे सत्यनवयवद्रव्यत्वात् मनोवदित्यादिना समप्रतिसाधनं; प्रागुक्तेन न्यायेनाकाशमित्यन्यथानुपपत्तिप्रसूतार्थापत्तिबाधितविषयत्वात्। तदित्थं द्रव्याणीन्द्रियव्यतिरिक्तानि महान्ति प्रत्यक्षाणीति। जातिगुणयोस्तु प्रत्यक्षत्वे न विवादः। तदवान्तरविशेषप्रत्यक्षत्वविवादं तु विस्तरभयादप्रयोजनत्वाच्च नाद्रियामहे।

इति पवनाकाशप्रत्यक्षतावादो नाम द्वादशवादः

समाप्तः।

---

१. ताकाशादीना. ग. घ. २. आत्माकाशप्रत्यक्षत्वं. ग. घ. ३. प्रमाणकम्. ङ. ४. तु तथा वा तथापि. ग. ५. पि दिक्कालातिरिक्तासिद्धिः. ङ. ६. स्त्वे विभु. ङ.

[ कर्मप्रत्यक्षतावादः । ]

एवं कर्मणोऽपि प्रत्यक्षत्वमनन्यथासिद्धेन्द्रियान्वयव्यतिरेकानुविधानात् समर्थनीयम् । न च कर्मानुमानलिङ्गभूतयोस्संयोगविभागयोरेवान्यथासिद्धत्वादनन्यथासिद्धत्वमसिद्धमिति वाच्यम् ; तयोरसमवायिमात्रापेक्षयोः कर्मासमवायिन एवोपपत्तेः कर्मविलोपप्रसङ्गात् । नन्वसमवायित्वेन कर्मण्यभिमतस्संयोगस्तावन्नोदनाभिघातादिरूपोऽन्यत्र निश्चितस्वभावो यत् स्वाश्रये स्वाश्रयसमवेते वा करोति नान्यत्रेति, यथावयवसंयोगस्तावत्स्वाश्रयेऽवयविनं, प्रचयाख्यावयवसंयोगः स्वाश्रयसमवेतेऽवयविनि महत्त्वं, तन्तुतुरीसंयोगो युगपत् स्वाश्रयतत्समवेतयोः पटतुरीसंयोगमिति । अतो दर्शनबलात् संयोगस्यासमवायित्वमेतन्नियमाक्रमेणेति प्रयत्नवदेतनसंयोगस्य संयोगविभागौ प्रत्यतद्विषयासमवायित्वानुपपत्तेः तत्त्वेन कर्म कल्पनीयम् । कर्मणि तु पूर्वं नियमो नावधृतः । तस्य तदसमवायित्वं न प्रमाणविरुद्धम् । न चासमवायिकारणमात्रस्यायं नियमः ; वेणुदलविभागजे स्वदलविभागे द्वित्वाद्युत्पत्तौ च व्यभिचारात् । तदुक्तम्—

अनैकान्त्यात्तृतीयस्य प्रकारस्यापि सम्भवात् ।
विशेषतो विरुद्धत्वान् स्थाणौ कर्मप्रसङ्गतः ॥

असमवायिकारणभूतो हि संयोगः स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभत इत्यनैकान्तिकम् ; अणुद्वयसंयोगस्यानेवंविधे तृतीयाणा-

---

१. योरसम. घ. २. कर्मसमवायिन. घ. ३. स्यादसंयोगिनस्स्यासमवायित्वभेदनियमातिक्रमेणेति. ख. ङ. ४. मानातिक्रमेणेति. क.

यपि कर्मोत्पादकत्वदर्शनात् । न चाणुद्वयसंयोगः स्वाश्रयाश्रित-कार्यैकदेशद्वारा तद्धेतुरिति वाच्यम् ; कार्यस्यैकदेशान्तराभावात् । अवयवा एव हि कार्यस्यैकदेशाः, न च ते स्वयमेव स्वस्मिन् समवयन्ति । नापि स्वसंयोगारभ्याः ; अवयवव्यतिरिक्तांशान्तरस्वीकारे तु तत्संयोगानामपि तथैवारम्भकत्वेनानवस्थापत्तात् । अथैकस्मिन्नेव निरंशे प्रत्यभिज्ञाने ग्रहणस्मरणरूपांशयोरिन्द्रियसंस्कारावारम्भकाविति यथा तथेहापि कथन्न भवेत्? इत्थं न भवेत्—तत्र हि प्रत्यभिज्ञाने तदिदंरूपविसदृशा-प्राकव्यलक्षणकार्यद्वयदर्शनात्तदनुगुणं शक्तिद्वयं प्रत्यभिज्ञानगतं कल्प्यम् । ते च शक्ती नेन्द्रियमात्रात् नापि संस्कारमात्रात्, अन्यत्रेन्द्रियमात्रजे संस्कारमात्रजे चादर्शनात् । अतः फलभेदाच्छक्तिद्वयं विभिद्यास्यां संस्कारः कारणमस्यामिन्द्रियमिति व्यपदिश्यते । ज्ञानस्वरूपे तु निरंशे न कोऽपि कार्यविभागः, नापि कारणविभागः । प्रकृते तु त्रसरेणौ नैवं किञ्चिदिति स्थितमेव तत्रानैकान्तिकत्वम् । ननु स्वाश्रय इत्यत्र स्वशब्दस्य समानजातीयत्वमर्थः न स्वरूपमात्रम्, अतस्तृतीयाणुसंयोगस्याप्येककार्य-हेतुत्वेनासमवायित्वेनाणुद्वयसंयोगसमानजातीयत्वात्तदाश्रयोऽपि स्वाश्रय एवेति । यद्येवन्तर्हि चेतनदेहसंयोगस्यैव चेतनदेशसंयोगस्यापि संयोगविभागौ प्रत्यसमवायित्वाद्यङ्गीकारेण समानजातीयत्वाच्चेतनदेह-संयोगस्य चेतनदेशसंयोगाश्रयोऽपि स्वाश्रय एवेति प्राप्तमेव तत्रारम्भ-कत्वम् । एतेन ह्यसमवायिविषयत्वाद्याभेश्चेतनदेहसंयोगस्य संयोगविभागौ प्रत्यजनकत्वमित्यपास्तम् ; प्रकृतेऽप्यसमवायिद्वयस्योक्तत्वात् । यत्पुनरस-मवायिकारणभूतः संयोगः संयोगमारभमाणो युगपत्स्वाश्रयतत्समवेतयो-

---

१. कार्योत्पा. घ. २. श्रा॰. घ. ३. ग्रजे॰. ग. ४. ग्रजैवो. ग.
५. तुत्वात् सम. ख. ग. ङ. ६. तत्संयोगस्यापि. ख. ङ. ७. त्वयवम. ङ.

रेवारभत इति व्याप्तेश्चेतनदेहसंयोगस्यानारम्भकत्वमिति; तदवयविसंयोगारम्भकावयवसंयोगत्वप्रयुक्तव्याप्त्युपजीवित्वेन व्याप्त्याभासतया नियमासिद्धेः पराकरणीयम्। यत्तु चेतनदेहसंयोगस्य चेतनदेहयोरन्यत्रैवारम्भकत्वं चेतनदेहसंयोगत्वाद्दान्तरत्वाद्वा इच्छावदा[3]त्मदेहसंयोगवदिति; तत् प्रयत्नस्य बहिरारम्भसहकारित्वात् प्रयत्नविधुरत्वप्रयुक्तं, न चेतनदेहसंयोगत्वप्रयुक्तं, नाप्यान्तरत्वप्रयुक्तम्। अपि च चेतनदेहसंयोगत्वादान्तरत्वाद्वा देहदेशसंयोगासमवायिव्यतिरिक्तारम्भकत्वनियमोऽपि तेनैव दृष्टान्तेन सुसाध इति यत्किञ्चिदेतत्। अतोऽर्वाचीनमार्गाणां क्षुद्रत्वादसमवायिकारण[6]भूतः संयोगः स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभते नान्यत्रेति महामार्गस्यैव विमर्दसहिष्णुत्वात्तत्रैव दोषानुदीरयामः। तत्र व्यभिचारः प्रागेवोक्तः। किञ्च तृतीयप्रकारो[7]ऽपि सम्भवत्येव। तथा[8] हि—अवयवसंयोगस्य स्वाश्रय एवारम्भकत्वं प्रचयाख्यस्य त्ववयवसंयोगस्य स्वाश्रयसमवेत इति यथा तथा चेतनदेहसंयोगस्य देहदेशसंयोगारम्भकत्वमपि भवेत्, नैवं वा तदप्युभयं परस्परव्यभिचारात्। न चावयवसंयोगस्य प्रचयाख्यस्य वा चावयविनि महत्वे चान्वयव्यतिरेकयोस्तुल्यत्वादुभयत्रापि हेतुः, आत्मदेहसंयोगस्य[11] तु व्यतिरेकादर्शनात्[12] देहदेशसंयोगहेतुत्वमन्वयव्यतिरेकगम्य[13]मिति वाच्यम्; आत्मदेहसंयोगस्य व्यतिरेकादर्शनेऽपि हस्तदण्डसंयोगस्य दण्डदेशसंयोगं प्रत्यन्वयव्यतिरेकयोर्दृष्टत्वात् तत्रैव च संयोगस्य स्वाश्रय

---

१. प्रवृत्त ग.  २ न्यतरत्रैव. क  ३ दात्मसंयोगवदिति घ दात्मव-देहसंयोगवदिति ग  ४ द्वा चेतनदेश घ  ५ कत्वे नि ख ङ  ६. णः संयोगः ग.  ७ पि न ग  ८. थाप्यव ख ङ  ९. वा चेतन ग  १० ▯ तावदुभय ख ङ  ११ स्य व्यतिरेकादर्शनेऽपि हस्तदण्डसंयोगस्य घ.  १२. नाद्वा दे ख ङ  १३ गम्यादि ग. ङ

तत्समवेतव्यतिरिक्त[1]देशेऽपि जनकत्वास्थितेः । न च हस्तदण्डसंयोगस्य निमित्तत्वे[2]न कारणकारणत्वेन वाप्युपपत्तेरसमवायित्वमसिद्धमिति वाच्यम्; दण्डदेशसंयोगस्यासमवायिविशेषापेक्षत्वात्, [3]कर्मणि सिद्धपूर्वदण्डहस्तसंयोगस्य[4] तदसमवायित्वेनैव व्यवस्थानात् । अन्त्यावयवसंयोगस्य प्रचयाख्ययो[5]रवयविनि महत्त्वे च निमित्तकारणत्वेन[6] कारणकारणत्वेन वाप्युपपत्तेरसमवायित्वं न सिध्येत् । अतस्सिद्धमसमवायिसंयोगारम्भकत्वस्य तृतीयप्रकारोऽपि सम्भवतीति । किञ्च यदि संयोगस्य द्विप्रकारत्वमेव भवेत्, एवन्तर्हि नोदनसंयोगश्शरज्यासंयोगविशेषः, तत्र किं शरावयवेन ज्यासंयोगः, उतावयविना, अथवोभयेन? न तावत् प्रथमः; अन्त्यावयवानां ज्यासंयोगाभावेन तेषु कर्माभावात् संयोगविभागौ न स्याताम् । अथैव[7]मुच्येत—यद्यप्यन्त्यावयवानां ज्यासंयोगो न सम्भवति तथाप्याद्यावयवानां तावद्भवत्येव, अतस्तेषु[8] तदनन्तरञ्च कर्मवदाद्यावयवसंयोगोऽन्त्यावयवानां भवति, तत एवान्त्यावयवेष्वपि कर्मोत्पद्यते, तेनान्त्यावयवानां संयोगविभागौ नानुपपन्नाविति । एवन्तर्ह्यन्त्यावयवान् पूर्वमेवाद्यावयवानां देशप्राप्तिर्भवेत्; क्रियायाः क्षणिकत्वात् । फलञ्च कृत्वैव क्रिया नश्यति, फलविनाश्यं कर्मेति हि पठन्ति । न चैवं दृश्यते । न च द्वितीयः । यद्यपि शरावयवज्यासंयोगेऽवयविनः स्वाश्रयसमवेतत्वात्तस्मिन् कर्म भवेत् तदनन्तरञ्च संयोगविभागौ, अवयविज्यासंयोगे तु

1. देदेऽपि. ख. ङ. 2. त्वेन व्याप्युप. ख. ङ. त्वेनाप्युप. ग. घ. 3. कर्मसिद्ध. ख. ङ. 4. स्य निमित्तत्वेन कारणकारणत्वेन तदसम. ग. 5. रप्यव. ख. ङ. 6. न कारणत्वेन वाप्युप. ङ. न कारणत्वेनाप्युप. ग. घ. 7. योच्येत. घ. 8. षु कर्मोत्पद्यते. घ. 9. च न संयो. ग.

स्वाश्रयतत्समवेतव्यतिरिक्तत्वादवयवानां कर्माभावात् संयोगविभागौ न स्याताम्। न तृतीयः; अवयवावयविनोरुभयोरपि संयोगेऽन्त्यावयवानां ज्यासंयोगाभावात् कर्म न भवेत्, ततश्च संयोगविभागौ न स्याताम्[1]। अथ कर्मवदाद्यावयवसंयुक्तत्वादन्त्यावयवानां तत एव संयोगविभागात् कर्म भवतीत्युच्यते[2], तत्रोक्त एव दोषः। किञ्च संयोगजसंयोगे जन्यसंयोगस्यानेकाश्रितैकासमवायिहेतुत्वं संयोगहेतुत्वं वेति व्याप्तिदर्शनादनेवंविधस्य कर्मणः संयोगहेतुत्वेनानुमानं विशेषविरुद्धम्। ननु वेगस्य संस्कारत्वेन स्मृतिहेतुसंस्कारवत् स्वहेतुसमानजातीयफलजनकत्वव्याप्तेर्नोदनस्य तदजन्यत्वाच्चोदनातिरिक्तमेव जन्यं जनकश्चेति[3] कर्मानुमातुं शक्यम्[4]। मैवम्; प्रोक्षणादिजन्यसंस्कारे व्यभिचारात्। न हि तत्र प्रोक्षणादिजन्यस्संस्कारः प्रोक्षणान्तरमपि जनयति। अथ तत्र न वास्तवं सामान्यं, किन्तु समानशब्दवाच्यत्वमेव, तर्हि वेगस्यापि न वास्तवं सामान्यं, अपि तु समानशब्दवाच्यत्वमेवेति[5] न ततः कर्मानुमातुं शक्यम्। यत्पुनः प्रत्यक्षेऽपि कर्मणि कर्मफलयोः संयोगविभागयोः कर्मकारणजन्यत्वं कथं वारणीयमिति[6]; तत् कर्मणः प्रत्यक्षत्वेन कर्महेतोः कर्मण्येवोपक्षीणत्वात् तदन्यत्रानुपक्षीणस्य[7] कर्मण एव संयोगविभागजनकत्वकल्पनात्। यत्तु यः संयोगविभागयोः क्रियान्वयव्यतिरेकौ न स्त इति वदति स कथं बोधनीय इति चोद्यं, तत् यः करतलकलितमामलकं नास्तीति वदति स येनोत्तरेण बोधनीयः सोऽपि तेनैव बोधनीय इति परिहर्तव्यम्।

---

१. ताम्। अथ कर्मवदाद्यावयव. ङ. २. तुक्त्. ग. ३. जन्यजनकत्वं चेति. ख. ङ. ४. तुमशः क. ५. मेवेति घ. ६. तिरस्कृतेन प्रत्यक्षत्वेन. ख. ङ. ७. त् अन्यत्र. क ख. घ. ङ.

किञ्च यदि संयोगविभागाभ्यां कर्मानुमेयं, तर्ह्युत्पत्य निपतिते श्येन इव स्थाणावपि चलतीति प्रत्ययप्रसङ्गः । न च श्येनगतकर्मणैव स्थाणावपि संयोगविभागोत्पत्तेरुपपत्तेर्न स्थाणौ कर्मकल्पनमिति वाच्यम् ; स्थाणुश्येन-संयोगस्य प्रयत्नवच्छ्येनदेहसंयोगेनाप्युपपत्तेः श्येनेऽपि कर्माभावप्रसङ्गात् । अथ स्थाणुश्येनसंयोगस्य प्रयत्नवच्छ्येनदेहसंयोगेनाप्युपपत्तौ सत्यामपि संयोगस्य स्वाश्रयस्वाश्रयसमवेतयोरन्यत्रैव जनकत्वमिति प्रमाणान्तरा-विरोधाच्छ्येने कर्मकल्पनम्, तर्हि संयोगजसंयोगे जन्यसंयोगस्योभया-श्रितासमवायिकारणजन्यत्वव्याप्तिदर्शनाद्विरोधेन स्थाणावपि[3] कर्म कल्पनीयम् । अथार्थान्तरविभागपूर्वार्थान्तरसंयोगाभावान्न[4] तत्र[5] कर्म कल्प्यं, तर्ह्येकश्येनवियुक्ते श्येनान्तरसंयुक्ते स्थाणौ कर्म कल्प्यं स्यात् । यत्पुनः कर्मणि लिङ्गाभावे सूर्यगत्यनुमानं निर्बीजं स्यादिति ; तन्मन्दम् । कर्मणि प्रत्यक्षे प्रत्यक्षत एव जन्यसंयोगस्यान्यतरकर्मजत्वमुभयकर्मजत्वं संयोगजत्वं चेति नियमावधारणादाकाशसूर्यसंयोगस्य जन्यसंयोगत्वेन त्रयाणामन्यतरहेतुत्वस्थितावाकाशसूर्ययोः परस्परं अवयवसंयोगजावय-विसंयोगादन्यत्वेन संयोगजसंयोगासम्भवादाकाशनिष्क्रियत्वेनोभय-कर्मजस्याप्यसम्भवादन्यतरकर्मज एव तयोः संयोग इति प्राप्ते परिशेषात् सूर्य एव कर्मकल्पनम् । भवन्मते तु कर्मणो नित्यपरोक्षत्वा[6]न्नैवं[7] धं

---

१. ति प्रसङ्गः. ख. ग. ङ.    २. ण्यतत्रैव. क.    ३. पि कल्पनीयम् । ख. ग. ङ.    ४. पूर्वकार्थान्तरसंयोगाभावात्. घ.    ५. त्र कल्प्यं त. ख. ङ.
६. नित्यत्वपरोक्षत्वात्. ख. ङ.    ७. वं व्याप्तिपूर्वं परिशेष०. ख. ग. ङ.

व्याप्तिमूलम् । अतः परिशेषसिद्धं कर्मप्रमित्यन्यथानुपपत्त्या कर्मणः प्रत्यक्षत्वम् ।

इति कर्मप्रत्यक्षतावादो नाम त्रयोदशवादः
परिसमाप्तः ।

---

[ विशेषनिराकरणवादः । ]

ननु द्रव्यादिचतुष्टयस्यैव प्रत्यक्षत्वे विशेषसमवाययोः कथं सिद्धिः? न कथञ्चित्; तत्र प्रमाणाभावात् । नन्वस्त्येव विशेषसिद्धावनुमानं, समानजातीयाः समानगुणकार्याः परमाणवो मुक्तात्मानश्च परस्परव्यावर्तकसमवायिनः द्रव्यत्वाद् घटवदित्यादि । न च पृथक्त्वेन सिद्धसाध्यत्वम्; यस्य व्यावर्तकसमवायित्वं तस्यैव पृथक्त्वमिति पृथक्त्वव्यतिरिक्तव्यावर्तकस्यैवानुमानादिति । तदयुक्तम्; भावत्वे सति भावान्तरव्यावर्तकत्वस्य सामान्यवत्त्वव्याप्तेरसामान्यव्यावर्तकानुमानस्य विशेषविरुद्धत्वात् । तत्रापि सामान्याश्रयणे तन्निबन्धनसन्देहनिवारणाय विशेषान्तराश्रयणेनानवस्थाप्रसङ्ग इति चेद्, असदर्थेनिर्बन्धिनमात्मानमुपालभस्व । किञ्च तानेव धर्मिहेतुदृष्टान्तानाश्रित्य विशेषसाधनानुमानानां विरुद्धव्यभिचारित्वमपि प्रदर्शनीयम् । यथा चैवं परमेसिद्धसाधनेऽपि नामसिद्धविशेषणत्वापातः तथेश्वरानुमाने वक्ष्यामः ।

इति विशेषनिराकरणवादो नाम चतुर्दशवाद
परिसमाप्तः ।

---

१. न तथापि तत्र ग. २. न चास्त्येव. ग. ३ कथमेस. घ. ४. कत्व तस्य. ख ङ. ५. येष. ङ. ६. लम्भ. ग. ७ धर्म ग ८. नाना वि. ख. ङ. ९ रुद्धाव्य. ख ङ १० रसपरत्वसिद्धि. ग.

[ समवायनिरासवादः । ]

एवं समवायोऽपि न सेद्धुमर्हति। तथा हि—तत्र प्रत्यक्षमनुमानं वा प्रमाणम्। न तावत् प्रत्यक्षम्; अप्रतिभासनात्। इह पटे शौक्ल्यं पटाश्रयं शौक्ल्यमित्यादिप्रत्ययस्येन्द्रियान्वयव्यतिरेकानुविधानात् प्रत्यक्षत्वमिति चेत्, न; तस्य समवायविषयत्वासिद्धेः। सिद्धे हि तद्विषयत्वे इन्द्रियान्वयव्यतिरेकानुविधानात् प्रत्यक्षत्वं समवायस्य। न च तदेवाद्यापि सिद्धम्; स्वरूपस्यैव विमतिपन्नत्वात्। कथ समवायेनेन्द्रियस्य सम्बन्धः? विशेषणविशेष्यभाव इति चेन्न; तस्येन्द्रियसम्बन्धत्वासिद्धेः, भावयोर्विशेषणविशेष्यभावस्य सम्बन्धान्तरपूर्वकत्वाच्च।

न चानुमानं प्रमाणं, तत् खल्विह गवि गोत्वमिति प्रत्ययोऽधिकरणाधिकर्तव्यसम्बन्धनिबन्धनः इहेति प्रत्ययत्वाद् इह कुण्डे बदरमिति प्रत्ययवदिति, विवादपदं विशेषणविशेष्यसम्बन्धनिबन्धनं विशिष्टज्ञानत्वाद् दण्डीति ज्ञानवदिति वा स्यात्। तत्र च यथासंख्यमिह भूतले घटो नास्तीति प्रत्ययेन विनष्टो घट इति प्रत्ययेन च हेतुद्वयस्यापि व्यभिचारः। ननु शुक्लः पट इति विशेषणविशेष्यभावस्तयोः सम्बन्धनियतः सामान्यवन्मात्रविशेषणविशेष्यभावत्वात् सघटं भूतलमिति विशेषणविशेष्यभाववत्। कालादिविप्रकृष्टे तु देवदत्तादौ तत्पुत्र इत्यादिरुपलक्ष्योपलक्षणभावः, न विशेषणविशेष्यभावः। तदयुक्तम्; सम्बन्धस्य पृथक्सिद्धगोचरत्वव्याप्तेरपृथक्सिद्धगोचरत्वेन सम्बन्धानुमानस्य विशेषविरुद्धत्वात्।

---

१. शक्तत्वात्. ग. २. उपलक्ष्योपलक्षणभाव. क.

किञ्च पृथक्सिद्धविशेषणविशेष्यभावत्वमेव सम्बन्धपूर्वकत्वे प्रयोजकं, न तु विशेषणविशेष्यभावत्वमात्रम्; तस्य विशेषप्रयुक्तव्याप्त्युपजीवित्वात्। ननु पूर्वं भावयोर्विशेषणविशेष्यभावः सम्बन्धपूर्वक इत्युक्तम्, इदानीं पृथक्सिद्धयोरेव विशेषणविशेष्यभावः सम्बन्धपूर्वक इति कथमुच्यते? इत्थं पूर्वव्याप्तेः प्रसङ्गरूपत्वात् अस्यार्थे स्वदर्शनसिद्धत्वादिति।

यत्पुनरागमसन्निधिहीनस्याप्युत्पन्नवस्तुपरतन्त्रतया भानादेव संयोगविलक्षणः समवायः कल्पित इति। तत्र किमागमसन्निधिहीनस्योत्पन्नवस्तुपरतन्त्रतया भानं समवायेन व्याप्तम्, उत तेन विनानुपपन्नम्? न व्याप्तम्; अन्यत्र सहादर्शनेन विशेषव्याप्त्यसम्भवात्, सामान्यव्याप्तेश्च पूर्ववद्विशेषविरुद्धत्वादप्रयोजकत्वाच्च। न चानुपपन्नम्; अभेदस्य समर्थयिष्यमाणत्वात्तेन तदुपपत्तेः।

एतेनाविसंवादिपरस्परसाकांक्षरूपरूपिणोर्नियमेन सहोपलम्भः समवायगमक इत्यपास्तम्।

किञ्च समवायः समवायिभ्यामत्यन्तभिद्यमानः सम्बद्धो वा स्याद-[10]सम्बद्धो वा? नाद्यः, अनवस्थापातात्। न द्वितीयः; असम्बद्धत्वा[11]विशेषेण कयोश्चिदेवेति नियमानुपपत्तेः[12]। अथ न कस्यचित्समवायः; तस्य

1. त्वमेव. ग. 2. पूर्वं व्याप्ते - क. ग. ङ. 3. इत्वरूपत्वात्. ग. 4. स्व दर्शं. ङ. 5. म सान्नि. ख. 6. नस्य व्युत्पन्नरूपवस्तु. ख. नस्य व्युत्पन्नरूपस्तु ङ. 7. वायत्वेन. ग. 8. नासहादर्श. ख क 9. म्बन्धो. ख ग ङ. 10. म्बन्धो. ख. ग. ङ. 11. म्बन्धत्वा. ख. ग. ङ. 12. प कस्यचित्. ग.

स्वतन्त्रत्वात् । कथं तर्हि माहिषमहिषत्वयोरिव नाश्वमहिषत्वयोरपि स्याद्विशेषात्? अथ महिषमहिषत्वयोरभिव्यञ्जकत्वात् स तयोरेव । यद्येवं किमश्वोऽनभिव्यञ्जक एव? ओमिति ब्रूते चेन्न; अश्वत्वजातिसमवायं प्रत्यनभिव्यञ्जकत्वप्रसङ्गात् । अथाश्वोऽप्यभिव्यञ्जकः[1], सोऽपि महिषः स्यात् । अथाश्वोऽश्वत्वजातिसमवायस्यैव व्यञ्जकः, न महिषत्वजातिसमवायस्य । यद्येवं किमन्योऽश्वत्वजातिसमवायात् महिषत्वजातिसमवायः? ओमिति ब्रुवतः[2] प्राभाकरस्य किमुत्तरमिति चेत्, स एवातिप्रसङ्गः । न ह्यत्यन्ताभिन्नत्वा[3]विशेषे कौचिदेव सामान्यविशेषौ कस्यचिदेव समवायस्या[4]भिव्यञ्जकाविति नियमोऽवकल्पते । स्वभावादवकल्पत इति चेत्, हन्त तर्हि पिण्डस्वभावादेव कस्यचिदेव सामान्यस्य तन्निरूप्यत्वं विशेषणविशेष्यभावानुभवितृत्वं चेति किं समवायाभ्युपगमेन?

यत्पुनः समवायस्यं न प्रयोजनवशादङ्गीकरणमपि प्रमाणबलादिति, तन्मन्दम्; प्रमाणबलस्य प्रागेवापास्तत्वात् ।

इति समवायनिरासो नाम पञ्चदशवादः समाप्तः ।

---

[ तादात्म्यवादः । ]

नन्वसंयुक्तयोर्जातिजातिमतोः समवायानभ्युपगमे कथं विशेषणविशेष्यभावः? तादात्म्यादिति ब्रूमः । नन्वन्यन्तभेदमेव जातिजातिमतोः प्रतीमो, न तादात्म्यम् । न,

---

१. श्वोऽभिव्यञ्जकः, ख. श्वोऽपि व्यञ्जकः. घ. ङ.　　२. तः प्रभाकर०. क.
३. स्यन्ताभिन्नत्वा०. क. घ.　　४. स्यानभि. ग.　　५. न सामान्यस्य. घ. ङ.
६. इव प्र. ख. ङ.

सर्वत्र वस्तुसन्देहे निर्णेत्री केवलं मतिः।
सात्यन्तभेदवैधर्म्यादभेदमपि कर्षति ॥

यस्य हि वस्तुनो यद्रूपत्वे विवादः तस्य तद्रूपत्वं तद्रूपनिर्भासा मतिरेव व्यवस्थापयति। न च जातिजातिमतोरत्यन्तभेदनिर्भासा मतिः; अन्यत्रात्यन्तभेदनिर्भासस्यानेवंविधत्वात्। स हि पुनरिदं गोत्वे इति भवेन्न पुनरयं गौरिति। अतोऽत्यन्तभेदवैधर्म्यादयं गौरिति मतिरभेदमपि गोचरयति। न च समवायाद्वैधर्म्यं; तस्य निराकृतत्वात्। किञ्च—

इदंगवोरपर्यायसामानाधिकरण्यतः।
मियस्तदर्थयोर्वाच्यो भेदाभेदसमुच्चयः॥

इदंगोपदयोः सामानाधिकरण्यमेव हि तदर्थयोरभेदे प्रमाणम्। न चाग्निर्माणवक इत्यत्राग्निमाणवकपदार्थयोरभेदाभावाद्व्यभिचारः; तदर्थयोरप्यभेदात्। न हि तत्राग्निपदस्याग्निरर्थः, अपि तु पैङ्गल्यम्। अस्ति च तेन माणवकस्याभेदः। तस्मान्न सामानाधिकरण्यमभेदव्यभिचारि।

किं पुनः सामानाधिकरण्यम्? भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिरिति चेत्, न; हस्तः कर इत्यादावसामानाधिकरण्यप्रसङ्गात्। न च नास्त्येव तत्र सामानाधिकरण्यम्; अक्रियाकारकात्मनोरशेषपदोर्विणोरसामानाधिकरण्ये परस्परमनन्वयादेकवाक्यानुप्रवेशानुपपत्तेः। न च पर्याययोरेकेनैव कृत इतरस्य कृतकरत्वेन सह प्रयोगाभावादेकवाक्यानुप्रवेश एव नास्ति; व्युत्पन्नहस्तपदमव्युत्पन्नकरपदं कः कर इति पृष्टवन्तं

१. ठं मतिः। क. ख. ग. ह २. स पुनरिद- घ. ३ असमा. ख. ह.

मति पदद्वयार्थतादात्म्यप्रतिपादनपरे हस्तः कर इति वाक्ये पर्याययो-रप्येकवाक्यतानुप्रवेशसहप्रयोगयोः दर्शनात्। न चैकार्थ्यं सामानाधि-करण्यम्; शुक्लो गौरित्यादावसामानाधिकरण्यप्रसङ्गात्। अतो दुर्निरूपं सामानाधिकरण्यमिति। उच्यते—अपृथक्सिद्धार्थयोरेकत्र तात्पर्यं सामा-नाधिकरण्यम्। न च पृथक्सिद्धेरनिरूपितत्वात्तद्वैधुर्यलक्षणाया अपृथक्-सिद्धेरशक्यं निरूपणमिति वाच्यम्; तयोर्युतसिद्ध्ययुतसिद्धिपर्यायत्वात्। न च ते अपि दुर्निरूपे; समवायाश्रयनिरूपणाय भवद्भिरेव तयोस्सुनि-रूपितत्वात्। अतः पर्यायेष्विव सामानाधिकरण्यं इदंगोपदयो-रभिन्नार्थत्वं गमयति। न च शुक्लो गौरित्यत्र शुक्लगोपदयोः सामानाधि-करण्येऽपि परस्परमभिन्नार्थत्वाभावेन व्यभिचारः; सर्वत्र समानाधि-करणशब्दानां स्वतात्पर्यविषयेणाभिन्नार्थत्वमिति नियमात् तस्य च क्वचि-दव्यभिचाराभावात्। ननु सामानाधिकरण्यस्याभेदव्याप्तिवदपर्यायत्वस्य भेदव्याप्तिरप्यस्ति। सत्यमस्ति। अत एव भेदाभेदसमुच्चयमाद्रियन्ते वृद्धाः। ननु कथं परस्परविरुद्धौ पयःपावकाविव भेदाभेदावेकत्र सम्भवेताम्? उच्यते—

स्वभावतः प्रतीतेर्वा विरोधो वस्तुनो भवेत्।
न च स्वतो विरोधोऽस्ति नापि कश्चित् प्रतीतितः।

अत्रेदं परः पृष्टो व्याचष्टां—ययोर्भेदाभेदयोरेकत्रासम्भवः तौ किं स्वतो विरुद्धौ किं वा प्रतीतिमुखेनेति। न प्रथमः; प्रमाणाभावात्। अथान्यत्र सहादर्शनमेव प्रमाणम्; तर्हि द्रव्यान्तरोपादानत्वोपादेयत्वयोः परमाणुष्वन्त्यावयविषु च सहादर्शनाद् द्व्यणुकादिषु मध्यवर्तिषु तयोस्समुच्चयो न स्यात्। अथ द्व्यणुकादौ यद्-

---

१. योरर्थयोरेकत्र. ख. २. न चैते अपि. घ. ३. याश्रयणाय. क. ४. प्रतीतो वा. क. ५. वन्तौ. ख. ङ.

पेक्ष्य द्रव्यान्तरोपादानत्वमवगतं न तदपेक्ष्योपादेयत्वमित्यपेक्षाभेदाद् विरोधः। तन्न; सापेक्षत्वेनापि तयोः परमाणुष्वन्त्यावयविषु सहादर्शने विरोधस्य तादवस्थ्यात्। किञ्चाङ्कुरस्य बीजजन्यस्य बीजव्यतिरिक्त[1]शिलाशकलजन्यत्वादर्शनेन तज्जन्यत्वातज्जन्यत्वयोर्विरोधाद् बीजव्यतिरिक्तक्षित्यादिजन्यता न स्यात्। न हि तत्रापेक्षाभेदोऽपि; तस्यैवाङ्कुरस्य तदेव बीजं प्रति तज्जन्यत्वेनातज्जन्यत्वेन च व्यवस्थानेन। अथ यथैव प्रमाणेन बीजजन्यत्वं दृष्टं तथैव तदितरजन्यत्वमपीति तज्जन्यत्वातज्जन्यत्वयोरविरोधः। तर्हि यथैव[2] प्रमाणेन भेदो दृष्टः तथैव तदभावोऽपीति द्वयोरपि न विरोधः स्यात्। तस्मात् सुव्यवस्थितमिदमन्यत्र विरुद्धावपि भेदाभेदौ प्रतीतिबलात्तज्जन्यत्वातज्जन्यत्वतज्जनकत्वातज्जनकत्ववदयुतसिद्धेषु न स्वतो विरुद्धाविति।

अत एव प्रतीतिमुखेनापि विरोधो नास्त्येव। एवं हि स उद्भाव्यते—विलक्षणाकारवस्तुद्वयप्रतिभासो भेदप्रतिभासः। अभिन्नाकारैकवस्तुमात्रप्रतिभासश्चाभेदप्रतिभासः। तत्र विलक्षणाकारवस्तुद्वयप्रतिभासः कथमभिन्नाकारैकवस्तुमात्रप्रतिभासः स्यात्? विलक्षणाकारवस्तुद्वयप्रतिभासताभङ्गप्रसङ्गात्।

किञ्च भेदावभाससमये यज्जातिरूपं व्यक्तिरूपञ्च प्रतिपन्नं[4] अभेदप्रतिभासवेलायां तयोरेवान्यतरपरिहारेणैकतरत् प्रत्येतव्यम्। तत्रैकस्य[3] द्विरवभासोऽयं न पुनरभेदावभास इति। तच्चेदमयुक्तम्। न हि वस्तुद्वयप्रतिभासो[5] भेदप्रतिभासः; सुसदृशवस्तुद्वयस्य[6] भिन्नदेशकालत्वेन[7] प्रतिपन्नस्य

---

१. अजन्यव्यतिरिक्त. ख. ङ.　२. नान् उभयथैव प्रमाणेन. घ.　३. हिं सर्वत्र. क.　४. प्रपन्नं. ङ.　५. सः, सदृश. ङ.　६. [illegible] अभिन्नदेश. घ.　७. न प्रतिपन्नत्वेन प्रति. ख. ङ.

किं तदेवेदं उतान्यदिति सन्देहगोचरत्वानुपपत्तेः । एवमेकस्मिन्नेव वस्तुनि देशकालादिभेदेन सन्देहदर्शनान्नैकमात्रप्रतिभासस्याभेदप्रतिभा-सत्वम् । अतो भेदाभेदयोर्वस्तुधर्मत्वाद्यथैकत्र शौक्ल्यप्रतिभासस्य गोत्वप्रतिभासप्रत्ययत्वमविरुद्धं तथैकत्र भेदप्रतिभासप्रत्ययस्याभेदप्रतिभास-प्रत्ययत्वमविरुद्धम्; उभयोः समुच्चित्य प्रत्ययात् ।

यत्पुनर्विलक्षणाकारवस्तुद्वयनिर्भासः कथमभिन्नैकवस्तुनिर्भास इति, तत् किं विलक्षणद्वयप्रतीतावभिन्नैकवस्तुप्रतीतिरेव नास्ति? यद्येवमने-केष्ववयवेष्वनेकासु व्यक्तिषु चैकमभिन्नमवयवितत्त्वं सामान्यञ्च नानु-भूयेत ।

अथ ययोर्भेदस्तयोरेवाभेदो न प्रतीयत इत्युच्यते; तदयुक्तम् । तथा हि—किमिदं स्वाभिलपितमात्रं, उत व्याप्तिः? न प्रथमः; तस्या-नुरोध्यत्वात् । न च व्याप्तिः; भिन्नयोरभेदप्रतिभासाभावस्य पृथक्-सिद्धविशेषणविशेष्यभावप्रयुक्तत्वात् । एतेन भेदाभेदावेकत्र न सम्भवतः एकविधिप्रतिषेधत्वात् परस्परविरुद्धत्वाद्वा घटतदभाववदित्यपास्तम्; उक्तेन क्रमेण हेतुद्वयस्याप्यसिद्धत्वात् ।

यत्तु विवादाध्यासिते परस्परमभिन्ने न भवतः, अत्यन्तभिन्ने वा भवतः, वस्तुत्वाद्भिन्नत्वाद्वा घटवदित्यादि तादात्म्यप्रमाणस्यात्यन्तभेदस्य वानुमानं; तत् सर्वत्र तयोः परस्परपृथक्सिद्धविशेषणविशेष्यत्ववैधुर्यात्रै-रूप्यादृष्टेषु विशेषविरुद्धत्वादप्रयोजकत्वाच्चाभासीकरणीयम् ।

---

१ कालभेदेन. ग. घ. २. कत्व ङ. ३. भासत्वमविरुद्ध. क. घ. ४. धातु. ङ. ५ भासस्य. क. ६. विप्रतिषे. ख. ङ.

11

यत्पुनर्जातिव्यक्त्योरभेदे जातेरनित्यत्वं व्यक्तेश्च नित्यत्वं प्रसज्यत इति । तन्मन्दम्; उभयोरुभयरूपत्वेन तत्तद्धर्मयोगस्यापि तत्तद्रूपेणाङ्गीकरणात् ।

एतेनैतन्निरस्तम् । यथाहुः—किमनुवृत्ताकारं यत् सामान्यं तदेव व्यावृत्ताकारेण प्रतीयते, व्यावृत्ताकारेण या व्यक्तिः सानुवृत्ताकारेणापि ? नाद्यः; तथा सति सामान्यमेव न प्रतीतं स्यात्, व्यावृत्तरूपप्रतीतेः । प्रतीतौ वान्यस्यान्याकारग्रहणं[1] भ्रान्तिः स्यात् ।[2] तथा च भेदाभेदवादो भ्रान्तः स्यादिति उभयोरुभयरूपत्वादन्याकारत्वासिद्धेः । ननु किमनुवृत्तिरपि व्यक्तेर्धर्मः व्यावृत्तिरपि जातेः ? सत्यम्; अन्योन्यात्मकत्वादुभयोरपि तत्तद्रूपेण तत्तद्धर्मयोगित्वमित्युक्तमसकृत् ।

यत्पुनः पताकायां बलाकाभ्रमस्य पताकाबुद्धिबाध्यत्वमिव जातिव्यक्त्योरभेदप्रत्ययस्य भेदप्रत्ययबाध्यत्वमाशङ्कितं, तन्मन्दम् । तत्र[3] प्रतीतबलाकोपमर्दनेन पताकाप्रत्ययस्योदयाद् बाधकत्वं, इह तु रूपरसवद्भेदयोस्समुच्चित्य प्रत्ययान्न कश्चिद् बाधकः न कश्चिद्बाध्यश्चेति विवेकात् ।

यत्तु फलरसयोस्तादात्म्ये फलपरिच्छेदे रसस्यापि परिच्छेदप्रसङ्ग इति । तन्मन्दम्; फलरसयोः समवायेऽपि फलपरिच्छेदे रसस्यापि परिच्छेदप्रसङ्गात् । समवायसाम्येऽपि परस्परभेदादवगमसामग्रीभेद इति चेत्, न; तुल्यत्वात् तदात्मनोरवगमसामग्रीभेदो विरुध्यत इति चेन्न; समवायिनोरपि विरुद्धत्वात् । तत्र दृष्टत्वादविरोध इति चेत् तदात्मनोरप्यवगमसामग्रीभेदस्य दृष्टत्वादविरोध इति सर्वं समानम् ।

---

१. स्याकारग्रहणं. घ. २. कार ग्रहण ङ ३ स्वाकारात्. ख. घ. ङ.
४. तथा. घ.

ननु सामानाधिकरण्योपपादनाय समवाय एव कल्प्यताम्। मैवं; प्रागुक्तन्यायेन तत्कल्पनस्य प्रमाणविरुद्धत्वात्, अविरोधेऽपि समवायस्य सामानाधिकरण्योपपादकत्वादर्शनात् तादात्म्यस्य च इदं फल इत्यादौ तदुपपादकत्वदर्शनात्।

यत्तु फलस्य रस इत्यादौ व्यभिचारादभेदस्य सामानाधिकरण्योपपादकत्वाभाव इति। तन्मन्दम्; व्यापकस्य व्याप्यनियमाभावात्। अभेदो हि सामानाधिकरण्यव्यापको, न पुनरभेदव्यापकं सामानाधिकरण्यम्। न च क्षित्यादिगोचरकर्तृसद्भावस्य कार्यलिङ्गकानुमानं व्यापकमिति तदुदयादेव योग्यानुपलम्भसम्भव इति वाच्यम्। अतो द्रव्यजातिगुणकर्मणां स्वाश्रयैस्तादात्म्यमेव, न समवाय इति सिद्धम्।

इति तादात्म्यवादो नाम षोडशवादः
समाप्तः।

---

[अवयविवादः।]

ननु द्रव्यादिपञ्चकस्यापरमार्थत्वात् परमार्थसतः स्वलक्षणस्य कथं तादात्म्यम्? न हि रूपादिसङ्घातातिरिक्तं द्रव्यं नाम किञ्चित्। अत एव तदाश्रितानां जातिगुणकर्मणामप्यभावः। नाद्यः पुनः क्षित्यादिवस्त्वन्तरात्मना भानात्सत्यत्वमिति। तदयुक्तम्; अवयविद्रव्यस्य यदानेको

---

१. कः पुनरभेद० क. २. क्षित्यानुमानं० ग. ३. नः क्षित्यादिसद्भावकर्तृ- श्चा आ. ङ. ४. ०स्त्वन्तरात्मना. ख. ग. ५. यदाः. ग. ख. घ. ङ.

घट इति प्रत्यक्षेण प्रतिभासनात्। नैतत् प्रत्यक्षं, तदाभासत्वादिति चेन्न; बाधकाभावात्। तथा हि—बाधकं भवत् प्रत्यक्षमनुमानं वा भवेत्, प्रमाणस्य सतस्तयोरेवान्तर्भावात्। न तावत् प्रत्यक्षम्; अस्तीति प्रतिभासनात्। नाप्यनुमानम्। यतः—

विलम्बितसमुच्छित्वादुत्थाने तदपेक्षणात्।
अन्योन्याश्रयणाच्चात्र नानुमा लभते पदम्॥

यथा हि तावदेकं सत्कारफलमभिलषतोः द्वयोरेकेन नेदीयसा सादिते तस्मिन्नितरस्य कुण्ठमनोरथस्यानुद्योग एव, तथैकमवयवितत्त्वमस्तित्वेन नास्तित्वेन च विषयीकर्तुं प्रवृत्तयोः प्रत्यक्षानुमानयोः आश्रयोपलम्भव्याप्त्याद्यनपेक्षत्वेन नेदीयसः प्रत्यक्षादनुमानस्य तदपेक्षत्वेन दवीयस्त्वात् न तदपहृते विषये प्रवृत्तिः।

किञ्च यद्यदपेक्षोत्थानं न तत् तद्बाधितुमर्हति, अपेक्षते चात्रानुमानं स्वोत्थानाय प्रत्यक्षम्; आश्रयोपलम्भाभावे तन्मूलकस्यानुमानस्यैवानुत्थानात्। अपि च अनुमानस्य प्रामाण्ये तद्बलात् प्रत्यक्षमाभासीभवति तदाभासत्वे चाबाधितविषयत्वादनुमानं[10] प्रमाणमिति[11] दुरुत्तरमितरेतराश्रयम्। अतो वह्निशैत्यानुमानस्यौष्ण्यप्रत्यक्षेणेव परामि[12]हितानां[13] प्रसङ्ग-

---

१. या बाधकं. ख, ङ. २. त्। प्रत्यक्षम्. ङ. ३. नास्त्याप्यनु. ख, ङ.
४. दम्। तथा ङ. ५. रमभि. ङ. ६. तस्मिरस्य. ख. तावितरस्य. ङ.
७. न विषयीकर्तुं. ङ. ८. स्यैव वानुत्थानात्. ग. ९. तद्बाधात्. क. तद्बाधनात्. ध.
१०. त्वानुमानं. ङ. ११. ति तदुत्तरोत्तरमितरेतराश्रयम्. ग.
१२. मिमतानां. क. १३. प्रमाधनानामेकम्मद्. ङ.

साधनानामे[1]कम्महत्प्रत्यक्षेण बाधितविषयत्वादनुत्थानमेव। प्रसङ्गस्वरूपोपदर्शनन्तु विस्तरभयान्न कृतमिति द्रष्टव्यम्।

नन्वौल्प्यप्रत्यक्षमन्यथानुपपन्नत्वाद् बाधकम्। एकम्महत्प्रत्यक्षं पुनरन्यथाप्युपपन्नं इति न बाधकम्। तन्न। न हि प्रत्यक्षं स्वो[2]पपादनाय विषयं[3] कल्पयति, येनान्यथोपपत्त्या परिह्रियेत। किन्तूपजायमानमेव तद्विषयमुपजायते। कथञ्च महत्त्वसमानाधिकरणैकप्रत्यक्षस्यान्यथोपपत्तिरपि? परमाणुभ्य इति चेन्न; तेषामनेकत्वात्, अमहत्त्वाच्च। न चानेकेषाममहतामेव पुञ्जीभूतानामेकम्महत्प्रत्ययविषयत्वम्; तथा सत्येकम्महत्प्रत्ययस्य[5] सर्वत्र पुञ्जीभूतानेकविषयत्वेन कि[6]ममी पुञ्जीभूता अनेके, किं वैको महानिति सन्देहस्य निवृत्तिप्रसङ्गात्। न हि वस्तुतस्तत्त्वं जानानस्यानुन्मिषितकोऽप्यन्तरस्य सन्देहो जायते; तथा सत्यतिप्रसङ्गात्। अनेकनिरन्तरात्मकमहद्ग्रह एवान्यादृशैकमहत्त्वविकल्पोऽयं शुक्तिग्रहे रजतविकल्पवदिति चेन्न; विकल्पस्य निश्चयरूपत्वात् ग्रहणनिश्चययोरन्यादृशत्वे[7]न परस्परमनुगमाभावेन विसंवादादप्रामाण्यप्रसक्तेः। अप्रमाणमेवात्र ग्रहणमपीति चेन्न; बाधकाभावात्। अबाधितत्वञ्च प्रागेव समर्थितम्। न च बाधकान्तराभावेऽप्याशङ्कितदोषत्वेनाप्रामाण्यं, निर्बीजशङ्काया अभावात्। भावे वा सर्वे[8]षामाशङ्कितदोषत्वेनाप्रामाण्या-

---

१. म्महत्प्र०. प  २. स्वोत्पादनाय. प.  ३. यथ. क० ङ.  ४. स्थूलप्र०, ग. कमस्थूलप्रत्यय. प.  ५. स्व पुञ्जी०. प.  ६. किमपुञ्जीभूता अनेके. ग. ङ.  ७ त्वे परस्परम० रा ङ.  ८. स च गम०. ग.

पत्तेः। कथन्तर्हि ज्वालैकप्रत्यक्षप्रमाणमित्यवगन्तव्यमिति चेन्न; तदप्रामाण्यावगमोपायस्तु शब्दनित्यत्वसमर्थनावसरे वक्ष्यते।

इत्यवयविवादो नाम सप्तदशवादः

समाप्तः।

[परमाणुवादः।]

एवञ्च प्रत्यक्षसिद्धेऽवयविन्याद्यावयवी सावयवेनानवयवेन वा स्वन्यूनपरिमाणेनारभ्यत इति साधारणप्रमाणं गमयद्वक्ष्यमाणक्रमेण सावयवस्यारम्भकत्वनिषेधकप्रमाणेन प्रतिहन्यते। तदनयोर्विरोधाद्‌-विरोधायानवयवस्यैवारम्भकत्वकल्पनात् परमाणवोऽपि सिद्धाः। न चा-रम्भकत्वस्य सावयवत्वव्याप्तेरनवयवस्यारम्भकत्वं प्रमाणविरुद्धम्, तथा सति मातङ्गमशरुयोरनन्तावयवपरिप्रापितत्वाविशेषेणावयवसंख्याभूयस्त्वा-ल्पत्वनिबन्धनस्य महदणुभेदस्य गुरुलघुभेदस्य चानुपपत्तिः। अन्तराळो परिमाणतरतमभावस्य विश्रान्तिव्याप्तिसंविरोधश्चेत्यादिबहुबाधादेकबाधस्य लघुत्वात् तत्पक्षपातिन्यायोपरस्यैवान्यत्र सावयवस्यैवारम्भकत्वदर्शनेऽपि तद्बाधेनानवयवस्यैवारम्भकत्वकल्पनात्।

एताभिरेव युक्तिभिरन्तर्भावितावयविनां परमाणूनां सिद्धेः कल्पकाभावोऽपि परिहर्तव्यः।

किन्तु वातायनविवरविनिर्गतदिनकरकरनिकरमध्याध्यवसीयमान-पदार्थातिरेकिणो न परमाणूनाद्रियामहे। तेषां महत्त्वादवयवबहुत्व-

---

१. चेत् तद०. ङ. २. यवारम्भकत्व०. ग. ३. त्वप्राप्तेर० ङ. ४. मन्तरावयव०. ङ ५. हभेदस्य चानु०. ङ ६. स्य चानुपपत्ति०. ग. ७. धात्तद्बाधस्य० ग. ८ यस्यारम्भ०. घ.

मन्तरेण तदनुपपत्तेः तदतिरिक्तपरमाणुकल्पनमिति चेन्न; तेषां महत्त्वस्यासिद्धेः। द्रव्यत्वे सति प्रत्यक्षत्वात् महत्त्वं साध्यमिति चेन्न; कार्यद्रव्यमहत्त्वस्य प्रत्यक्षावयवत्वप्रयुक्तत्वात्। अन्यथा साधर्म्यमात्रेण प्रत्ययस्थाने यत् महदारभ्यं तत् महदारब्धमेवेति दर्शनाद् त्र्यणुकस्यापि महत्त्वप्रसङ्गात्। अथ कथञ्चित् साधर्म्येण त्र्यणुकस्यापि महत्त्वासिद्धौ तदवयवानामपि तथैव महत्त्वासिद्धेरणुपरिमाणतरतमभावस्य न क्वचिदपि विश्रमः, तथैरमदभिमतानां परमाणूनामप्यवयवानामपि कथञ्चित् साधर्म्यमात्रेण सावयवत्वमहत्त्वयोरसिद्धौ तदवयवानामपि साधर्म्यान्तरेण तयोः सिद्धिः, एवं तदवयवानामपीति न क्वचिदणुपरिमाणतरतमभावस्य विश्रम इति समानम्।

एतेन त्र्यणुकादिक्रमेण स्थूलारम्भोऽपि प्रमाणाभावान्निरस्तो वेदितव्यः। यद्वा प्रमाणबलमाश्रित्य परमाणूनामतीन्द्रियत्वं त्र्यणुकादिक्रमेणारम्भकत्वमित्यादिसिद्धावपि नास्माकं किञ्चिदनिष्टमिति किं तन्निरासप्रयासेन। सिद्धास्तावत् परमाणवः, सिद्धश्च तदारब्धश्चतुर्विधमवयविद्रव्यम्।

इति परमाणुवादो नामावयववाद
समाप्तः।

—

[तमोवादः।]

एवं प्रत्यक्षबलात् पृथिव्यादिवत् पञ्चममपि तमोऽवयविद्रव्यं सेद्धुमर्हति। ननु रूपवतः तमसः चाक्षुषत्वे तेनानेकद्रव्यारब्धेन भवितव्यम्।

---

१. त्र्यणुकपर्यं. ट. २. तरतमभावस्य. घ. ३. तथैवं चतुर्विधद्रव्यमवयविद्रव्यम्। ख. तथैवं अवयविद्रव्यम्। च. ४. तदारब्धम्। ग. क. ५, तदारब्धं. ख, ग. ट.

न चास्यारम्भकद्रव्याणि सन्ति, सन्ति चेत् तेजोदेशेऽप्यारभेरन्। मैवम्; स्पष्टदृष्टकार्यबलेन तदारम्भकाणां परमाणूनामपि सिद्धेः। न च तामस-परमाणूनामन्यत्रादर्शनेनानारम्भकत्वम्; पृथिव्यादिपरमाणूनामप्यनारम्भ-कत्वप्रसङ्गात्, स्पष्टदृष्टकार्यानुपपत्तिकल्प्यतायाश्चोभयत्रापि समानत्वात्। न च सत्वे तेजोदेशे[4]ऽप्यारम्भः; तस्य विरुद्धत्वात्।

यत्पुनस्तेजोविरुद्धं जलं दृष्टं सालोके देशे कार्यारम्भकमिति। तन्मन्दम्; जलस्य स्वाधिष्ठानतेजोविरोधेऽप्यालोकविरोधित्वाभावात्, तमसश्चोभयविरोधित्वात्। न च मन्दालोके मन्दस्य तमसोऽप्यनारम्भः; तस्य निबिडावयवतमोमात्रविरोधित्वात्। न चैवमादिकल्पनाभयात्तम एवापकपनीयम्; द्व्यणुकादिक्रमेणारम्भस्य भूयसः कल्पनाभयेन पृथि-व्यादेरप्यपलापप्रसङ्गात्। न च नीलन्तम इति बुद्धिर्भ्रमः; बाधकाभावात्। न च भ्रमोऽपि निर्बीजः सम्भवति। न चालोकादर्शनमेव बीजम्; सुप्तस्या-वपि प्रसङ्गात्। न चोन्मीलिताक्षस्यालोकादर्शने नीलद्रव्यं सामान्यतः स्मरतः स्मृतित्वमगृह्णतो नीलं तम इति[11] व्यवहारः; निरधिष्ठानभ्रमा-नुपपत्तेः। न ह्यनवगतशुक्तिशकलं स्मरन्नपि रजतत्वं भ्राम्यति। न च वेत्तृतया प्रकाशमानमात्मस्वरूपमन्यद्वा किञ्चिदधिष्ठानम्; तस्यैव तमस्त्वेन प्रतीतिप्रसङ्गात्। एतेन विशिष्टालोकाविषयचाक्षुषप्रतीति-

---

१. म्भकाणि सन्ति. क. २. च कारणपर.. ग घ ३ म्, तामस-पर. घ. ४. शेऽपि कार्या.. घ. ५ स्य स्वाधि.. क ग. स्य स्वाधिष्ठाने तेजोवयवविरो.. ■ ङ. ६. देरपलाप. ग. ७. त्। नचोन्मीलिताक्षस्य, ङ. ८. लोकदर्शन. घ. ९. स्मृतिमगृ. क. १०. न निर्भ्रमा. घ. ११. कल-स्मरणेऽपि. घ.

प्रतियोगिकात्मस्वरूपोपलम्भात्तमोव्यवहार इत्यपास्तम्; आत्मोपलम्भस्य नैल्यस्मृत्या भेदाग्रहेऽहं नीलमिति व्यवहारप्रसङ्गात्। अत एव नालोकाभावोऽपि तमः; नैल्यस्य भावरूपस्याभावे समारोपानुपपत्तेः प्रतियोगिस्मृत्यनपेक्षावगमस्याभावरूपत्वायोगाच्च। यत्पुनस्तमसि भावरूपे ग्राहकानुपपत्तिरित्युक्तं, तदयुक्तम्; चक्षुष एव ग्राहकत्वात्। न चान्यत्रालोकसहकृतस्यैव चक्षुषः प्रवृत्तेरतत्सहकृतस्य न प्रवृत्तिरिति वाच्यम्; आलोकविषयज्ञानेऽस्याचाक्षुषत्वप्रसङ्गात्। न च तत्र विषयत्वेनापेक्षत एवेति वाच्यम्; विषयत्वेनापेक्षणेऽपि तदितरसहकारित्वेनानपेक्षणाद्चाक्षुषत्वस्य तादवस्थ्यात्।

अथान्यत्र चक्षुष आलोकसहकृतस्यैव कारणत्वेऽप्यालोकविषयसाक्षात्कारे इन्द्रियान्तरकल्पनं गौरवायेति रूपरूपिणोर्दृष्टशक्तित्वेनालोकसहकारानपेक्षस्य चक्षुष एव कारणत्वं कल्प्यम्, तर्हि तमस्यप्यन्यत्र दृष्टशक्त्यनुसारेण लाघवसाम्यादालोकसहकारानपेक्षं चक्षुरेव ग्राहकं कल्प्यम्। तथा च चक्षुष आलोकापेक्षत्वमालोकतमसोरन्यत्रैवेति व्याप्तेः सङ्कोचमात्रं, न पुनैरतिविघटनं स्यात्। एवञ्च पटलपिहितलोचनस्य पिहितलोचनस्य च तत्तदावरणद्रव्यच्छायाप्रसर्पणेऽवतीति न नीलबुद्धेरनवक्लृप्तिः। तस्य चात्यन्तासन्नस्य ग्रहणान्महत्त्वभ्रमोऽप्युपपन्नः। चक्षुषः

१. रसाप. ग. २. च प्रवृत्ते॰. घ. ३. तेरेतत्स॰. ख. ङ. ४. नस्य चाक्षु॰. ख. ग. ङ. ५. रेन्द्रियान्तर॰. ख. रे क्रियान्तर॰. ग. ६. कापेक्षित्व॰. ङ. ७ नरत्रैव॰. क. घ. ८. स्य न तत्त॰ ख. स्य तत्त॰ ङ. ९. ल्पत इति न नीलबुद्धेरवनं कल्प॰ ख. ल्पतीति नील॰ घ. ल्पते न नीलबुद्धेरनवक्लृप्तिः ङ.

प्रसरद्रश्मित्वेनैव ग्राहकत्वापत्तिः नियमस्तु गोलकबहिष्ठवस्तुग्रहे एवेति तदभावे तन्नियमोऽपि नास्ति। पक्ष्मणोरग्रहणन्तु पिधानवेलायामालोकाभावादन्यदा जवस्थित्यभावात्। अन्धानां पुनर्नीलबुद्धिरेवासिद्धा। 'तमसीव प्रविष्टोऽह'मित्यादिवाक्यमन्धानामपि यथा वाक्यान्तरश्रवणपूर्वक'ममृतमिव पायः पीत'मित्यादि तथेति मन्तव्यम्।

एवञ्चान्यत्र रूपवत्तामेवारम्भकस्पन्दकत्वनियमेऽपि यथा स्पष्टदृष्टकार्यानुरोधाद्वायोररूपस्यैव तदुभययोगित्वम्, तथैव स्पष्टदृष्टकार्यानुरोधादस्पर्शस्यापि तमसो रूपवत्त्वेन तदुभययोगित्वम्। तथा च रूपस्पर्शयोरन्यतरदुभयं वा यस्य तस्यैवारम्भकत्वस्पन्दौ नान्यस्येति व्याप्तिरपि शिथिला भवेत्। तदित्थं रूपसंख्यादिगुणानामुत्क्षेपणादिकर्मणां चाश्रयस्तमो द्रव्यान्तरमिति।

यद्वा पृथिव्या एव तत्र तत्र सूक्ष्मरूपेणावस्थिताया विशिष्टालोकावगमोद्भूतकृष्णरूपं तमः। न च पृथिवीगुणस्य गन्धसहकृतत्वात्तदभावे तद्गुणत्वहानिः; पृथिवीगन्धस्य रूपेणापि सहकृतत्वात् तदभावे केतकीगन्धस्यापि पृथिवीगुणत्वहानिः स्यात्। गुणपक्षेऽपि ग्राहकानुपपत्तिर्द्रव्यपक्षोक्तयुक्तिभिरेव परिहर्तव्या। तदयं तात्पर्यार्थः—तमो द्रव्यगुणयोरेव नान्यतरविधामनुभवति, न पुनर्विधान्तरमिति।

इति तमोवादो नाम दशमविंशो वाद
समाप्त।

---

१. प्रसृत एव. क. ख. घ.　　२. दन्याजवस्थितभाव न् ङ.　　३. णममृतमिव. घ.　　४. वंमपुनमित्र. ख घ ङ　　५. क वरान्दन. घ.　　६. न्दौ नान्यस्येति. ङ.　　७. प्र सूक्ष्म॰. ख ग. घ ङ.

[ जातिनिर्णयवादः। ]

प्रकृतमनुसरामः सिद्धान्तावद्रव्यकल्पनायाः परमार्थत्वम्। जातिकल्पनापि[1] परमार्थैव। ननु कथं परमार्था जातिः? सा हि भवन्ती व्यक्तेरभिन्ना भिन्ना वा भवेत्। न प्रथमः; जातेरपलापप्रसङ्गात्, न द्वितीयः; यद्यतो भिन्नं न तत् तत्सामान्यम्, यथा गोरश्वः, भिन्नश्च पराभिमतं सामान्यं स्वलक्षणेभ्य इति। तदयुक्तम्; जातिव्यक्त्यो-र्भेदाभेदसमुच्चयाश्रयणेनासमुच्चितैकैकनिबन्धनदोषस्यानवकाशात्। न च विरुद्धत्वादेवासमुच्चयः[2]; तद्विरोधस्य प्रागेव निरस्तत्वात्। अत एव भेदाभेदाभ्यामनभिधेयत्वादवस्तुत्वमित्यपास्तम्; समुच्चिता[3]भ्यामु[4]भाभ्या-मप्यभिधेयत्वात्।

स्यादेतत्, सामान्यं सर्वगतं व्यक्तिगतं वा? न सर्वगतम्; सर्वत्रो-पलब्धिप्रसङ्गात्। न व्यक्तिगतम्; व्यक्तेः पूर्वं तत्रासतः सामान्यस्य तत्कालोत्पन्नया व्यक्त्या नित्यत्वेन तत्रानुत्पन्नस्य[5] सम्बन्धानुपपत्तेः। व्यक्त्यन्तरादागत्य सम्बन्ध इति चेत् न; निष्क्रियत्वाद्व्यक्त्यन्तरेऽनुप-लब्धिप्रसङ्गाच्च। न चांशेनागत्य सम्बन्धः; निरंशत्वात्। एवं व्यक्तिनाशे न तत्रैव तिष्ठति; अनुपलम्भात्[6]। न नश्यति, नित्यत्वात्। न गच्छति, अमूर्तत्वात्[7]। यथाहुः[8]—

न याति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥

---

१. नापि द्वि. घ. २. त्वादस. ख. ङ. ३. चिताभ्या. ङ. ४. मुभयाभ्या. घ. ५. नुपपन्नस्य. ख. ग. ङ. ६. लम्भ. ख. ग. ङ. ७. त्वादेव ख. ग. ग. ङ. ८. तु। तथा चाहुः. क. ख. ङ.

इति। तदयुक्तम्; पक्षद्वयेऽपि विरोधाभावात्। न च सर्वगतत्वे सर्वत्रोपलब्धिप्रसङ्गः; व्यक्तेरभिव्यञ्जकत्वात्तद्देशेनोपलम्भनियमोपपत्तेः। एवं व्यक्तिगतत्वेऽपि व्यक्त्युत्पादापायहेतुभिरेव जात्यन्वयोत्पादापाययोरुपपत्तिर्द्रष्टव्या। अन्यत्र स्थितस्यान्यत्रान्वयो गतिपूर्वक एवेति नियमाद् गतिनिवृत्तावन्यत्रान्वयस्यापि निवृत्तिः। एवमनष्टस्योपलम्भसामग्र्यां सत्यामनुपलभ्यमानत्वमन्यत्र गतिव्याप्तमिति तन्निवृत्तावनष्टस्यानुपलभ्यमानत्वमपि[1] निवर्तेत इति जातेर्नाशप्रसङ्ग इति चेत्, न; तयोर्व्याप्त्योः पृथक्सिद्धवस्तुविषयत्वात्। अन्यथैकत्र व्याप्तिदर्शने सति तदितरत्रापि कथञ्चित् साधर्म्येण तदुपपत्तौ विश्वस्य सङ्करप्रसङ्गात्। अत एवात्यन्तभिन्नेषु कार्त्स्न्यव्यासङ्गयोर्वृत्तिं प्रति व्यापकत्वेऽपि[2] व्यक्तितदात्मसु जातिषु तयोरभावेऽपि[3] वृत्तेरनिवृत्तिः; तादात्म्यस्यैव[4] तत्र वृत्तित्वात्, तदात्मसु च कार्त्स्न्यव्यासङ्गयोरनुपपत्तेः[5]। यथोक्तम्—

न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम्।

इति। कथञ्च महिषादिभ्यो व्यावृत्तस्य शाबलेयादिष्वनुस्यूतस्य गौरित्येकाकारस्यावभासो देशकालनरावस्थान्तरेष्वपि[6] पर्यस्तः सामान्यं नाङ्गीकारयेत्? न च विचित्रस्वभावाः स्वलक्षणा एवानुवृत्तैकावभासं जनयन्ति; तेषां व्यावृत्त्यैकरसत्वात्[7]। न च व्यावृत्त्यैकरसा[8] अपि स्वभावादेव तादृशावभासं जनयन्ति; तथा सति परस्परव्यावृत्तानेकाकाराव-

१. पि न वर्तेते इति. घ. पि निवर्तेक इति. क. २ त्वे व्यक्ति. ड.
३. पि प्रवृत्तेर. क. घ. पि वृत्तेरपि निवृत्तिः. ख. ङ. ४. व वृत्तित्वात्. क.
५. योऽप. ग. ६. रान्तरेष्वपि. घ. ७. वृत्तैक. क. ख. ङ. ८. वृत्तैक. क.

भासजनकत्वस्वभावानुपपत्तेः। उपपत्तौ विरुद्धधर्माध्यासेन स्वलक्षणेभ्यो भेदप्रसङ्गात्। न चैकार्थक्रियाकारित्वोपाधिकोऽयमनुवृत्तैकावभासः; विश्वं व्यावृत्तैकरसं ब्रुवाणस्यार्थक्रियास्वप्येकाकाराभावात्। भावे वा सामान्याश्रयणापत्तेः। एतेनैकदर्शनहेतुत्वादेकत्वमप्यपास्तम्; दर्शनानामपि प्रतिस्वलक्षणं भेदात्। न चैकप्रत्यवमर्शहेतुत्वेन दर्शनानामैक्यम्; प्रत्यवमर्शस्यापि प्रतिदर्शनं भेदात्। न चैकविषयत्वात् प्रत्यवमर्शानामैक्यम्; प्रत्यवमर्शा हि विकल्पाः ते च स्वाकारमात्रमध्यवस्यन्ति। स्वाकाराश्च प्रत्येकविलक्षणा इति।

न चानादिवासनावशात् बाह्यत्वेन स्वाकारैमध्यवस्यन्तस्तन्मात्रनिष्ठत्वात् तद्भेदमनध्यवस्यन्तो विकल्पा एव तत्रैकत्वमारोप्यैकविषयं भजन्त इति वाच्यम्; विकल्पानां स्वाकारमात्रनिष्ठत्वेन भेदानध्यवसायादेकत्वारोपे गोविकल्पस्य गोविकल्पान्तरेणेव तुरगविकल्पेनापि भेदानध्यवसायसाम्यादेकत्वारोपेण तुरगस्य गोत्वप्रसङ्गात्। कथं भेदानध्यवसायादेकत्वमारोपयेत्? न तावद्विकल्पा एव; तेषां स्वाकारमात्रनिष्ठत्वात्। अतः प्रतीतिगोचरतया प्रत्येतव्यगोचरतया वा सामान्यानङ्गीकारे न कथञ्चिदनुवृत्तैकाकारप्रतिभासोपपत्तिः।

किञ्च अनन्तासु व्यक्तिषु सङ्केतग्रहणाभावाद्वाचनिकव्यवहारानुपपत्तेः सौगतस्य मूकत्वमेव प्राप्तम्। एवञ्च सर्वथा सामान्याभावाद्व्यावृत्तैकरसेषु विशेषेषु व्याप्तिसंवेदनस्यैवानुपपत्तेः सामान्यापह्नवे

१. करत्वेन ख. ग. कत्वे ख ङ. २. वापत्तेः घ. ३. त्वमपास्तम्, ख. ग. ङ. ४. रमात्रमध्य. क. ५. मध्यव. घ. ङ. ६. भेदेनाध्य. ग. ७. रे वा कथं. ख. रे वा न कथं.. ङ. ८. वृत्त्येक, ङ. ९. वे तावमेवा. घ.

स्वासामेवापह्नवेन तदपह्नवायोग्यातुं न व्याप्तयः प्रभवन्तीति व्याप्ति मूलाना प्रसङ्गसाधनानामप्यनुमानमेव।

न चातद्व्यावृत्तेरेकत्वात् तद्रूपेण व्याप्त्युत्थान, अगोरगोनिवृत्ते श्चोभयोरपि परस्परनिषेधरूपत्वे परस्परप्रतियोगित्वेन परस्परावगम सव्यपेक्षयोरन्योन्याश्रयापत्तेरगोनिवृत्तिपदेनापि विधिरूपस्य गोत्ववस्तुन एवोपादानात्। यथोक्तम् —

> अगोनिवृत्तिस्सामान्यं वाच्यं यैः परिकल्पितम्।
> गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम्॥

इति। अयञ्च वादः प्राचीनैरेव प्रपञ्चित इति नास्माभिः प्रपञ्च्यते।

इति जाति नञर्थवादो नाम विशावादः परिसमाप्तः।

---

[महासामान्यवाद।]

तदेवं सिद्धेऽपि सामान्यस्य परमार्थत्वे तद्धीकारस्य पूर्वाकाराव मर्शनिबन्धनत्वात् तदभावेन सत्त्वद्रव्यत्वब्राह्मणत्वादीनामभाव इति केचिदाहुः। तदयुक्तम्, पूर्वाकारावमर्शस्यात्रापि भावात्। कः खलु पूर्वा कारावमर्शः, किं पूर्वानुभूतेष्वाकारेषु कतिपयानामवमर्शः, किं वा सर्वेषाम्?

---

१ नु व्याप्तय ख नु व्याप्तय मवर्त्तति ड २ अवयववाद ङ
३. पवेषां क- ग घ ङ

न सर्वेषाम्; गोत्वादेरप्यपलापप्रसङ्गात्। न हि तत्रापि शाबलेयमुप-
लभ्य बाहुलेयमुपलभमानस्य सैवैव पूर्वाकारैरवमर्शोऽस्ति; तथा
सति तयोरेकत्वप्रसङ्गात्। अथ कतिप(येषां? यानां) तर्हि सत्त्व-
शब्दत्वादेरप्यनपह्नव एव; तत्रापि सर्षपमहीधरयोर्नश्वरसपोश्च सत्
सदिति पूर्वाकारावमर्शस्य विद्यमानत्वात्। न च पापकादिवदेको-
पाधिनिबन्धनेयमेक[1]शब्दप्रवृत्तिः; उपाधेरनिरूपणात्। न च प्रमाण-
सम्बन्धयोग्यता उपाधिः; अनवगतोपाधेरुपहितप्रत्ययाभावेन प्रमाणस्य
स्वयमप्यगृहीतः स्वसम्बन्धयोग्यताया ग्रहणस्य दूरापास्तत्वात् प्रथमत
एव पदार्थे सत् सदिति विकल्पोत्पत्तेरनुपपत्तिप्रसङ्गात्।

किञ्चेयं प्रमाणसम्बन्धयोग्यता प्रतिस्वं भिन्ना अभिन्ना वा? न
भिन्ना; सच्छब्दस्यै[2]कनिमित्ताभावप्रसङ्गात्। नाभिन्ना; नामान्तरेण
सत्त्वाङ्गीकारप्रसङ्गात्। अपि च प्रमाणसम्बन्धयोग्यताया उपाधित्वेना-
स्त्यर्थस्याप्यस्तीत्येव व्यवहारप्रसङ्गे[3]न भावाभावविभाग[4]भङ्गप्रसङ्गः स्यात्।

[5]ननु मानसम्बन्धस्तद्योग्यता च न द्रव्यादिपदार्थस्वरूपातिरि[6]क्ते।
न च स्वरूपाणामानन्त्यात् सद्वृत्तिग्रहणाभावोऽपि; यद्विधे हि द्रव्यगुणादौ[7]
मित्युत्पत्तिस्ततःसत्त्वमित्युपलक्षणोपाधेरेकत्वात्। तदप्युक्तम्। यदि तदस्थया

---

१. ०द्वृत्ति० क. २. ०स्य० ग. ३. ०णो न माना० ख, ङ. ४. ०भङ्गप्रसङ्गात्. ङ ५. मा नाम सम्बन्धस्तद्योग्यता वा न द्रव्यादिपदार्थः स्वरूपातिरिक्ते न च. ग. मानसम्बन्धस्तद्योग्यता न च न द्रव्यादिस्वरूपातिरिक्तौ न च. घ. मा नाम सम्बन्धस्तद्योग्यता न न द्रव्यादिपदार्थस्वरूपातिरिक्ते न च. ख. ङ. ६. ०रिक्तौ. क. ७. दौ मित्युत्पत्ति. ङ.

मानसंबन्धयोरयतयोपलक्षितं स्वरूपमेव[3] सत्त्वं तर्हि[1] द्रव्यादिस्वरूपा-[2]वगतावस्तित्वनास्तित्वसन्देहो न जायेत। नहि घट इति जानानस्य कुम्भो न वेति सन्देहो जायते। तथा सच्छब्दस्य द्रव्यादिशब्दानाञ्च परस्परं घटकुम्भशब्दवत् पर्यायत्वापत्तिश्च। न[4] च वर्तमानकालसम्बन्धित्वमेव तत्रास्तित्वम्। अस्तित्वस्यैव[5] त्रैकाल्यान्वयदर्शनात्[6][7]। न च सदस्तिपदवाच्यस्य सामान्यरूपत्वे[8] तस्य नित्यत्वात् त्रैकाल्यान्वयाभावः; तत्संबन्धस्यानित्यत्वात्। तस्यैव च त्रैकाल्यान्वयदर्शनात्। अतो द्रव्यगुणकर्मसामान्येष्वबाधितायाः सत्सदिति शब्दप्रवृत्तेरेकस्योपलक्षणरूपस्य विशेषणरूपस्य चोपाधेरभावात् तन्निबन्धनत्वेन सत्वं सिद्धम्।

काश्यपीयाः पुनः सामान्ये सामान्याश्रयणेऽनवस्थापत्तेर्द्रव्यगुणकर्मस्वेव सत्त्वमित्याहुः। तदयुक्तम्; सत्त्वस्य सामान्यान्तरसमवायित्वेऽपि स्वसमवायिसामान्याभावपरिकल्पनेनैव प्रागुक्तदोषनिवृत्तेः।

यत्पुनरवान्तरसामान्यवतामेव सत्त्वान्वयदर्शनात्तद्रहितानामनन्वय इति। तदयुक्तम्[9]; द्रव्यत्वयोगिनामेव सत्त्वान्वयदर्शनादद्रव्ययोर्गुणकर्मणोस्तदनन्वयप्रसङ्गात्। अथ द्रव्यवद्गुणकर्मणोरपि सत् सदिति प्रतीतिप्रयोगयोर्दर्शनाद्द्रव्यत्वयोगिन एव सत्त्वसम्बन्ध इति व्याप्तेरप्यनुत्थानम्, तर्हि द्रव्यादिष्विव सामान्येष्वपि तादृशप्रतीतिप्रयोगयोर्दर्शनेनावान्तरसामान्ययोगिन एव सत्तासम्बन्ध इति व्याप्तेरप्यनुत्थानम्।

---

१. द्रव्यापगट. ङ  २. दिगतस्वरूपाव. ग.  ३. त। न घट. ङ.
४. न वर्तमान. ङ.  ५. न तत्रैका. ख ग.  ६. यमानात् . ङ.  ७. त्। अतो द्रव्य. ग.  ८. त्वे तत्र नि. ङ.  ९. दन्वय ख. ङ.

न चोपचारतस्तत्र सच्छब्दप्रवृत्तिः ; गुणकर्मणोरपि तथाभाव-प्रसङ्गात्। एतेन सामान्येषु सत्ताश्रयणे तद्व्यापकं सामान्यत्वमवान्तर-सामान्यमपि स्यात्, ततश्च तस्यापि तदन्यथाय सामान्यान्तराश्रयणादनव-स्थाप्रसङ्ग इत्यपास्तम्; उक्तेन न्यायेन तादृशव्याप्तेरनुत्थानात्, तन्मूलत्वा-दानवस्थाप्रसङ्गस्य। तत्सिद्धं द्रव्यादिचतुष्टयवर्ति सत्त्वं महासामान्यम्।

इति महासामान्यवादो नामैकविंशः

समाप्तः।

[ अवान्तरजातिवादः । ]

एवमपूर्वशब्दश्रवणे श्रोत्रमात्रव्यापारेणानुसन्धानस्यैव झटित्यपूर्वोऽयं शब्दः न श्रुतपूर्व इति प्रतीतिप्रयोगदर्शनेन शब्दप्रवृत्तावुपलक्षणत्वेन विशेषणत्वेन वा श्रोत्रग्राह्यत्वस्योपाधिभावानुपपत्तेः शब्दत्वमपि सिद्धम्। न च तदैव श्रोत्रग्राह्यत्वमवगम्य प्रतीतिप्रयोगयोरुपपत्तिः; अप्रतिबद्धेन्द्रियान्तरसन्निधौ श्रोत्रैकनिबन्धनत्वस्य दुरवगमत्वात्। एवं रूपरसगन्धस्पर्शेषु रूपादिशब्दानां प्रवृत्तौ नयनाद्येकैकग्राह्यत्वमुपाधिरित्यपास्तम्; परमाणुरूपादिषु नयना-द्येकैकग्राह्यत्वानुपपत्तेस्तेषामरूपादित्वप्रसङ्गात्। न च रूपादित्वात् तेषामपि प्रत्यक्षरूपादिवन्नयनाद्येकैकग्रहणयोग्यत्वमस्तीति वाच्यम्;

---

१. गेऽपि त. ग.    २. न्यवत्वम. प.    ३. न इति महासामान्यमिति. प.
४. मनुग. ट.    ५. गयोर्दर्शनेन शब्दप्रवृत्तावुपलक्षणत्वेन वा श्रोत्रग्राह्यस्योपाधि०. प.
६. ह्यस्यो०. ख. ट.    ७. बन्धेन्द्रिया. प. क.    ८. मात्रानु. प. प्रद्यु. क.
९. दिमत्वम. क. ग. ग. ख.

रूपादित्वान्नयनार्थैकैकग्रहणयोग्यतावगतौ तस्यैव तत्त्वेनात्माश्रयापत्तेः। कथञ्च नित्यपरोक्षस्य कथञ्चित् साम्येन नयनार्थर्हत्वमनुमेयम्? एवं सति वस्तुत्वेन सर्वस्य तदर्हत्वापत्तौ किञ्चित्तदर्हं किञ्चित् तदनर्हमिति विभागानुपपत्तेः। तथा ब्राह्मणशब्दानुवृत्तेर्ब्राह्मणत्वं सेद्धुमर्हति।

न च सन्ततिविशेषजस्त्रीपुंसव्यतिकरजन्म[1]क्रियोपलक्षणतस्तदनु[2]वृत्तिः; सन्ततिविशेषाणामानन्त्यात्तदुद्भवस्त्रीपुं[3]सव्यतिकरजन्मक्रियाणामप्यानन्त्येनैकशब्दप्रवृत्तावुपलक्षणत्वेनाप्युपाधित्वानुपपत्तेः। न च तेषां लोकप्रसिद्धितो गुणत्वेनैकवर्गीकरणादुपाधित्वम्; लोकप्रसिद्धितोऽप्येकं सामान्यमुपाधिं वानुपदिश्य भूयसामेकवर्गीकरणानुपपत्तेः। [4]न ह्येकदेश्यमैककाल्यमैककार्यमित्यादि किञ्चिदेकै[5]मननुबध्नता भूयसामेकीभावः सम्भवी। न च ब्राह्मणभूतमातापि[6]तृजातत्वं ब्राह्मणशब्दप्रवृत्तौ निमित्तं, उपलक्ष्यस्योपलक्षणत्वेनात्माश्र[7]यप्रसङ्गात्।

एतेन मातापितृगतो ब्राह्मण[8]पदप्रयोगः पुत्रगामी[9] तत्पदप्रवृत्तौ निमित्तमित्यपास्तम्; एकत्र प्रयोगस्यान्यत्र प्रयोगनिमित्तत्वानुपपत्तेः। एकशब्दस्य [10]सर्वानुगतैकनि[11]मित्तभावेन नानार्थत्वानुपपत्तेश्च। न चोन्मी-

---

१. जक्रियोप. ग. २. तत्तदनु. ग. तदनु. घ. ३. सजन्य. ख. ङ. ४. न ह्येकदेश्यमेककाल्यमेककार्यं. ख न ह्येकदेश्यमेककाल्यमेककार्यं. ङ. ५. कं पुनरनुबध्नतो ङ. ६. तृजन्तुत्वं वा. ख. तृजत्वन्तत्व वा. ग तृजन्तत्वं वा ङ. ७. यत्वप्र. ख. ग ङ. ८. णत्वपद. ख. ङ. ९. मि क. ख घ ङ. १०. सर्वगतानुगतैक. ग. ११. मित्ते भावेन. घ

लिताऽस्य झटिति नरान्तरव्यावृत्ततया[1] ब्राह्मण्यमप्रतिभासमानं कथमक्षि-गोचर इति वाच्यम्; अविप्लुतब्राह्मणमातापितृजत्वोपदेशसहकृतेन[2] चक्षुषा तदवगमात्। एवमेव सामान्यान्तराण्यपि शङ्कितततदुपाधिनिरासेन समर्थनीयानीत्यलमनेन। सिद्धान्तावज्जातेरपि परमार्थत्वं; जातिव-देव गुणकर्मणोरप्यबाधितप्रत्यक्षविषयत्वात्, तद्बलेन परमार्थत्वमेषि-तव्यम्।

यत्पुनर्नाम्नो डित्थादिवस्त्वन्तररूपेण भानादपरमार्थत्वमिति, तदयुक्तम्; वस्त्वन्तररूपेण भानासिद्धेः। न हि डित्थादिनामरूपं वस्तु चकास्ति, किन्तु डित्थादिवाचकस्मारितवाच्यरूपम्; तच्च वस्तुनः स्वरूप-मेवेति नातद्रूपारोपः। तस्मात् कल्पनाकाराणामपि परमार्थत्वात् स्वलक्षणस्य तयोर्ज्ञानमपि परमार्थरूपमेवेति सिद्धम्।

इत्यवान्तरजातिवादो नाम द्वाविंशो वादः
समाप्तः।

---

[भेदवादः।]

औपनिषदास्तु[3] प्रत्यक्षादेः प्रमाणजालस्य भेदप्रपञ्चविषयत्वनिरा-करणद्वारेण तदविरुद्धविषयतया वेदान्तवाक्यानां सदद्वैतनिष्ठत्वं प्रति-पादयन्तो भेदप्रपञ्चमेवापलपन्ति। तथा हि—न तावत् प्रत्यक्षं भेदविषयं

---

१. व्यावृत्तया ग. घ. ङ. २. अप्लुतमाता- ग. अप्लुतमातापितृजन्यत्वोप- ग. घ. ३. यदपदास्तु- ग. ङ.

तद्धि भेदं गोचरयद्भेदमात्रं गोचरयेद्वस्त्वपि वा ? न तावद्भेदमात्रम्; अनवधृतव्यवच्छेद्य[1]व्यवच्छेदावधेर्व्यवच्छेदबुद्ध्यनुत्पत्तेः। अथ वस्त्वपि[2]; तर्हि वस्तुपूर्वको भेदग्रहः, किं वा भेदपूर्वको वस्तुग्रहः, यद्वा पर्यायेणोभयग्रहः ? न तावद्भेदपूर्वको वस्तुग्रहः; व्यवच्छेद्यव्यवच्छेदावधिग्रहाधीनजन्मनो व्यवच्छेदग्रहस्य तदनुत्पत्तावनुत्पत्तेः। अत एव नापर्यायेणोभयग्रहोऽपि; समसमयवर्तिनोः[3] कार्यकारणभावानुपपत्तेः। न च वस्तुपूर्वको भेदग्रहः; बुद्धेर्विरम्यव्यापारानुपपत्तेः। न च विध्यन्तरेण व्यवच्छेद्यव्यवच्छेदावधिसिद्धौ तयोरेकस्मादेकस्य प्रत्यक्षेण व्यवच्छेदसिद्धिरिति वाच्यम्; परस्परत्वातानभिन्नत्वात् पूर्वोत्तरविध्योः। किञ्चेतरेतराभावो भेदः, न च तस्य प्रत्यक्षत्वं सम्भवति; अभावस्येन्द्रियसम्बन्धानुपपत्तेः। न च पदार्थानां स्वरूपं भेदः; तथा सत्यभेदैकार्थसमवाय्येकताया भेदविरोधेन[4] किञ्चनैकं स्यादिति तदभावे सर्वेकसमाहारात्मकस्यानेकस्याप्यभावे विश्वस्य शून्यत्वप्रसङ्गात्। न च नीलं स्वापेक्षया निरूप्यमाणमेकम्, इतरापेक्षया तद्भेद इति वाच्यम्; उत्पत्तौ प्रतिपत्तौ वा किञ्चित् सापेक्षं किञ्चिन्नेति सापेक्षत्वलक्षणविरुद्धधर्माध्यासेन स्वरूपभेदयोः परस्परात्मकत्वप्रसङ्गात्। किञ्च स्वरूपभेदयोरैक्ये नीलं भिन्नं नीलस्य भेद इति वा विशेषणत्वेन सम्बन्धित्वेन च भेदस्यावभासो नीलभेदपदयोरपर्यायत्वावभासश्च विरुध्येयाताम्।

ननु माभूत् स्वरूपं भेदः। भिन्नमेव त्वमुं भेदं भेदिनोऽभ्युपगच्छामः। न च भेदस्यापि भेदान्तरापत्तेरनवस्था; मूलक्षयाभावेन भेदानवस्थितेरदोषत्वात्। यथाहुः—

---

१. यनुग्यनुपपत्तेः, घ. २. पि किं वस्तुपूर्वको भेदग्रहः, घ. ३. रविरवोः, ग, ङ. ४. या नु भेद, ग.

'मूलक्षयकरीं[1] प्राहुरनवस्थां च दूषणीम्'।

इति। तदयुक्तम्; स्तम्भात् कुम्भो भिन्न इति वा कुम्भस्य भेद इति वा विशेषणभावेन विशेष्यभावेन[2] वा भेदस्य प्रतिपत्तेर्दण्डकुण्डलादिवत् भेदेनाप्रतिपन्नस्य[3] च विशेषणविशेष्यभावानुपपत्तेस्तत्प्रतिपत्तावन्यस्याभ्युपगमनीयायां[4] तद्भेदस्यापि तथैव प्रतिभासाभावे[5] प्रथमभेदस्यैवाप्रतिपत्तेर्भवत्येव यतोऽनवस्थितिर्मूलक्षयकरी।

किञ्च भेदेनाप्रतिपन्नस्य प्रतियोगित्वे स्वस्यापि स्वं प्रति प्रतियोगित्वापत्तेर्भेदेन प्रतिपन्नस्यैव प्रतियोगित्वम्। तथा च स्तम्भस्य भेदसिद्धौ तत्प्रतियोगित्वेन कुम्भस्य भेदसिद्धिः, कुम्भस्य भेदसिद्धौ च तत्प्रतियोगित्वेन स्तम्भस्य भेदसिद्धिरिति दुरुत्तरमितरेतराश्रयम्।

न च विशेषणभावेन विशेष्यभावेन वा सप्रतियोगिकस्यैव भेदस्य प्रतिभास इति नियमस्य सविकल्पकगोचरतयाङ्गीकरणात् निर्विकल्पिकायां संविदि स्तम्भकुम्भभेदानां विविक्तानामेव युगपदवभासे सति स्तम्भात् कुम्भो भिन्न इति सप्रतियोगिकत्वेन विशेषणत्वेन च सविकल्पकेन भेदस्य प्रतिभासोपपत्तेर्नानवस्था परस्पराश्रयोऽपीति वाच्यम्; निर्विकल्पिकापि संविन्न प्राथमिकप्रतियोग्याद्यवभासमन्तरेण भेदाध्यवसायिनी प्रत्यक्षत्वात् सविकल्पकवदिति निर्विकल्पकेऽपि तत्पूर्वकत्वनियमासिद्धेः। तदसिद्धं न प्रत्यक्षं भेदावलम्बनमिति। तथा च लिङ्गाभिधानानुपपद्यमानानां भेदेन प्रतिपन्नानामेव प्रथितिसाधनत्वा-

---

१. रीमाहु. रा. क. २. वेनाभे. क. ३. देन प्रति. ङ, ४. स्य वि. क. ५. भेदे प्रानप्रति. स. भेदेन प्रति ङ. ६. फल्प. ग.

दुष्टेन क्रमेण भेदेन प्रतिपत्तेरनुत्पत्तेस्तन्मूलानामनुमानागमार्था[1]पत्तीनां भेदविषयत्वं पराकरणीयम्। उपमानं तु सादृश्यमात्रविषयं भेदविषयतया नाशङ्कनीयमेव। अभावोऽपि व्यवच्छेद्यव्यवच्छेदकविभागावगमाधी-नतया पूर्ववदेव परस्पराश्रयापत्तेर्न भावभेदावभासीति सिद्धं भेदस्य न प्रमाणान्तरगोचरत्वमिति। तथा[2] च स्तम्भादिभेदप्रतिभासानां भेदप्रति-भासत्वादनिरूपितप्रमाणत्वाद्वा चन्द्रभेद[3]प्रतिभासवदेव भ्रान्तत्वमपि न प्रयाससाध्यम्। अतः प्रत्यक्षादिभिरविरुद्धविषयाद् "अद्वितीयं ब्रह्मात्मे"त्यादिवाक्याद् सिद्धमद्वितीयं ब्रह्मेति। अत्रोच्यते—

प्रतीतो वा न वा भेदो न चेत् कीदृग्विविच्यताम्।
प्रतीतश्चेदबाध्यस्य कुतस्तत्त्वमपोह्यताम्॥

अत्रेदमद्वैतवादी प्रष्टव्यः—"किं स्तम्भकुम्भौ[4] वादिप्रतिवादिनौ साध्यसाधने दूषणभूषणे चेत्यादीनां मिथो भेदः परमार्थरूपो विद्यते न वे"ति। यदि विद्यते, तर्हि जितमस्मन्मनोरथेन। अथ न विद्यते तर्हि तत्रापि प्रष्टव्यः[5]—"किमविद्यमानो भेदः क्वचित् कदाचित् कस्यचिद् भासते न वे"ति। यदि न प्रतिभासते न तर्हि न विद्यत इति वक्तुं शक्यम्; अप्रतिभासमानस्य निषेधप्रतियोगित्वानुपपत्तेः। अथ प्रति-भासते तर्हि प्रतिभासमानस्य बाधाभावे परमार्थतत्त्वमनपोदितमिति कथं सदद्वैतसिद्धिः? न च बाधाभावोऽसिद्ध इति वाच्यम्; बाधो हि भवन् प्रमाणेनाप्रमाणेन वा भवेत्। न तावदप्रमाणेन; तस्य बाधकत्वा-

---

१. °प्रतिपत्तीनां. ग. २. था न स्तम्भ. ख. ग. घ. ङ. ३. द इति भाग. ख ४. म्भौ प्रवादि. ख. ङ. ५ ष्टव्यं, घ.

नुपपत्तेः। उपपत्तौ वा द्वैतप्रतिभासेनाद्वैतश्रुतेरपि बाधप्रसङ्गात्, नापि प्रमाणेन; प्रमाणस्य सतः प्रत्यक्षादिष्वेवान्तर्भावात्, अनन्तर्भावे वा प्रमाणत्वानुपपत्तेः।

न च प्रत्यक्षं बाधकम्; तद्धि बाधकं भवद् भेदाभावं गृह्णद् भवेद् अभेदं वा गृह्णत्? न तावद्भेदाभावं गृह्णाति; प्रत्यक्षस्य विधिमात्र-[1]निष्ठत्वेन भेदनिषेधकत्वानुपपत्तेः। यथाहुः—

"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।"

इति। नापि विरुद्धमभेदं गृह्णद् बाधकम्; अप्रतिभासात्। न हि कश्चिदपि स्तम्भकुम्भादीनां परस्परभेदमध्यक्षेणाकलयामीत्याचक्षाणो दृश्यते।

न चानुमानं बाधकम्; [3]पक्षसपक्षादिभेदानवभासे[4] पक्षधर्मतया सपक्षे सत्त्वया विपक्षाद्व्यावृत्ततया चानुसन्धानविधुरस्य[5] साधनधर्मस्य साध्यधर्मविषयबुद्धिजनकत्वानुपपत्तेः। अथानुमोत्पत्तौ पक्षादीनां भेदोऽवभासते, तर्हि तद्विरुद्धत्वात् न भेदाभावमभेदं वा विषयीकरोत्यनुमानमेवोदेतुमुत्सहते। न च भेदप्रतिभासस्य भ्रान्तत्वात्तद्विरोधेऽप्यनुमानोत्थानमिति वाच्यम्; अनुमानोत्थाने सति तद्बाधाद्भेदप्रतिभासस्य भ्रान्तत्वं, तद्भ्रान्तत्वे सति तद्विरोधेऽप्यनुमानोत्थानमिति परस्पराश्रयचक्रकयोः प्रसङ्गात्।

---

१. त्वे भे ग. घ. २. द् बाधकम्, अप्रतिभासनात्. घ. ३. पक्षे. म ४. भेन. ग. ङ. ५. स्य साधनधर्मस्य. घ. ६. मानमिति. ग. घ.

एतेनार्थापत्तेरपि परस्परविभिन्नप्रमाणद्वयविरोधप्रतिभासमूलाया-स्तद्विरोधेन भेदाभावमभेदं वा विषयीकृत्योत्थानमपाकरणीयम्। उपमानं तु सादृश्यमात्रविषयैकत्वात्तद्विषयतया शङ्कितुमप्यशक्यम्।

[1]न च योग्यानुपलब्धिर्भेदाभावसाधनी; स्तम्भकुम्भादीनां परस्पर-भेदस्योपलम्भयोग्यत्वे सति कदाचिदप्यनुपलब्धेरभावात्।

न चाद्वैतश्रुतिः तत्साधनी; तस्या अपि परस्परविलक्षणत्वेन. क्रियाकारकादिपदार्थस्वरूपावगमतात्पर्यभेदनिर्धारणाद्यनेकभेदप्रतिभासस-व्यपेक्षाभिधायिन्यास्तद्विरोधे प्रवृत्त्यनुपपत्तेः।[3] तत्प्रतिभासभ्रान्त्या प्रवृत्तिस्तु पूर्ववदितरेतराश्रयापत्तेरयुक्ता। यत्पुनर्भेदप्रतिभासस्यानिरूपित-प्रमाणकत्वाद् भ्रान्तत्वमिति, तदतिमन्दम्; भेदप्रतिभासस्याबाध्यत्वे स्थिते तस्यानिरूपितस्य प्रमाणस्य सिद्धप्रमाणेष्वेवान्तर्भावः, अनन्तर्भावे वा सप्तमप्रमाणत्वमेवेति प्राप्तत्वात्। अन्यथा रूपविचेदर्शनेऽपि प्रथमतश्चक्षूरूपस्य प्रमाणस्यानिरूपणादितरस्य च निरूपितस्य प्रामाण्ये बाधसम्भवादनिरू-पितप्रमाणत्वेन तस्या[4] अबाधिताया अपि भ्रान्तित्वप्रसङ्गात्। किञ्च भेदप्रतिभासस्यानिरूपितप्रमाणत्वमप्यसिद्धम्; प्रत्यक्षादेः प्रमाणस्य तद्गोचरत्वाङ्गीकरणात्। यत्तु किं वस्तुपूर्वको भेदग्रह इत्यादि, तत्र युगपदु-भयग्रह इति ब्रूमः। कथन्तर्हि भेद्यभेदावधिज्ञानजन्यस्य भेदज्ञानस्य समसमयत्वमिति चेन्नैवम्; भेदविषयस्य निर्विकल्पकस्य भेद्यभेदावधिज्ञान-

---

१. त्थान पराकरणीयम्. घ. २. यतया तद्वि॰. ग ३. नर्भेदावभासस्यानि. क. ख. नर्भेदावभासस्य निरूपित- घ. ४. स्या बाधिताया अपि घ. ५ दृ। किं घ. ६ यभेदावधिग्रहाधीनजन्मनो भेदज्ञानस्य क

जन्यत्वनियमासिद्धेः । निर्विकल्पकमपि तन्नियमयोगि प्रत्यक्षत्वात् सविकल्पकवदिति चेन्न; तस्य सविकल्पकत्वप्रयुक्तत्वात् । अन्यथा कथञ्चित् साधर्म्येण निर्विकल्पकेऽपि तन्नियमोपपत्तौ सविकल्पकस्य निर्विकल्पकपूर्वकत्वदर्शनान्निर्विकल्पकस्यापि प्रत्यक्षत्वेन सविकल्पकवदेव निर्विकल्पान्तरपूर्वकत्वमनिवार्यं प्रसज्येत । न चैतदुक्तमिष्टं वा । अत एवानवस्थापरस्पराश्रययोरप्यभावः । विशेषणत्वेन विशेष्यत्वेन वा सप्रतियोगिकस्यैव भेदस्य प्रतिभास इति नियमस्य सविकल्पकत्वप्रयुक्तत्वेन तदेकगोचरत्वेन व्यवस्थानात् । अतो निर्विकल्पकेन विशकलितप्रतिभासितानां भेदभेदावधीनां सप्रतियोगितया विशेषणविशेष्यभावेन च सविकल्पकेन प्रतिभास इति न किञ्चिदनुपपन्नम् । ननूक्तेन क्रमेण घटत्वपटत्वादिव्यावर्तकधर्मरूपस्य भेदस्याध्यक्षगोचरत्वेऽपि नेतरेतराभावस्याध्यक्षगोचरत्वम्; नयनेन्द्रियसम्बन्धानुपपत्तेरित्युक्तम् । सत्यमुक्तम् । अत एव तस्याभावप्रमाणविषयत्वम् ।

यत्तु व्यवच्छेद्यव्यवच्छेदावधिविभागाधीनज्ञानजन्मनोऽभावप्रमाणस्य परस्पराश्रयापत्तेर्नेतरेतराभावविषयत्वमिति । तन्न; व्यवच्छेद्यव्यवच्छेदावधिभूतयोः स्तम्भकुम्भयोः स्तम्भकुम्भत्वलक्षणभेदयोगित्वेनाध्यक्षेणैव प्रतिभासस्योक्तत्वात् । तथा च स्तम्भतया कुम्भतया च प्रतिपन्नयोः

१. कल्पकस्य. क. ख. ङ. २. त्वात् व्याप्त्युपजीवित्वात् । अन्यथा. घ. ३. कत्वदर्शनात्. ख. ङ. कपूर्वत्वदर्शनात्. घ. ४. कस्य प्रयुक्तत्वेन तदेव. ख. कप्रयुक्तेन तदेव. घ. ५. नां भेदभेदावधीनां. घ. ६. यस्य सम्बन्ध. घ. ७. भागज्ञानाधीनजन्मनोऽभाव. क. ८. तद्विषयत्वमिति चेद् न. घ. ९. म्भत्वकुम्भत्वलक्षणयोऽगित्वेन. घ.

स्तम्भकुम्भयोस्तादात्म्य[1]स्योपलम्भयोग्यत्वे सत्यनुपलम्भादितरेतराभावो-ऽपि स्व[2]व्यवसाय एव।

यत्पुनरयस्यैकस्वभावं विश्वं तस्य कथं न स्तम्भकुम्भादीनां तादात्म्येनोपलम्भ इत्युक्तम्, तदतिसाहसम्; न ह्यद्वैतवादिनोऽपि स्तम्भकुम्भादीनां तादात्म्यमध्यक्षेणैवेक्षामह इत्याचक्षते, किन्त्वद्वैतश्रुतेरिति। तथा च प्रत्यक्षानुपलब्धिभ्यां सिद्धैव। तस्मात् प्रत्यक्षानुपलम्भाभ्यां प्रपञ्चगोचरतया भेदस्येतरेतराभावस्य च [3]प्रतीयमानत्वात् तन्मूलानामनुमानागमार्थापत्तीनामपि [4]तत्र तत्र भेदविषयत्वमनुपपन्नम्। एवञ्च प्रत्यक्षादिसव्यपेक्षोत्थानत्वेन पदपदार्थसम्बन्धस्मरणादिमुखेन विलम्बितप्रवृत्तित्वेन च [5]दुर्बलस्याद्वैतागमवाक्यस्य पूर्वानपेक्षत्वेन शीघ्र[6]प्रवृत्तत्वेन च प्रवृद्धबलैः प्रत्यक्षादिभिरपहृतविषयस्य "आदित्यो यूप" इत्यादिवाक्यस्येव न यथाश्रुतेऽर्थे प्रामाण्यमङ्गीकर्तुं शक्यम्।

यत्पुनः पराचीने[7]न नेदं रजतमिति ज्ञानेन प्रसक्तप्रतिषेधाय पूर्वापेक्षोत्थानेनापि प्राचीनस्येदं रजतमिति ज्ञानस्य बाधदर्शनादद्वैतवाक्यस्य स्वतः प्रमाणभूतस्य स्वरूपसिद्धौ प्रत्यक्षादिसापेक्षत्वेऽपि स्वविषयनिश्चायकत्वे तदनपेक्षत्वात् प्रत्यक्षादिबाधकत्वमेवेत्यभाणि, तदयुक्तम्; प्रत्यक्षानुपलम्भाभ्यां बाधिते पदानामन्विताभिधानस्यैवासामर्थ्यात्। अन्यथादित्यो यूप इत्यादीनामपि यथाश्रु[8]तेऽर्थे प्रामाण्यप्रसङ्गात्। अत

१ स्योपालम्भ ध. २ स्वान एव। क ध. ३ प्रतीयमाणत्वात्. ख. प्रदीयमानत्वात्. ग. ४. तत्र भेद. ग. ५. दुर्लभस्य ध. ६. प्रवृत्तित्वेन. क ध ङ. ७. नैनेद. ख. ग ङ ८. ते श्रा०. ग तेऽपि श्रा ख.

एव पराचीनत्वाद्बाधकत्वमप्यपास्तम्; पराचीनस्यापि वह्निशैत्यानुमानस्य प्राचीनेन बाधदर्शनात् ।

यत्पुनर्नेदं रजतमिति ज्ञानस्य पूर्वापेक्षत्वैव बाधकत्वमित्युक्तम् । तदयुक्तम्; नहि तत्र पराचीनेन स्वोत्पत्तये पूर्वमपेक्ष्यते, किन्तु स्वबाधकत्वाय बाध्यत्वेन । स्वरूपसिद्धिस्तु चक्षुरादिकया सामग्र्यैव । प्रकृते तु प्रत्यक्षादिभिरभिधेयाभिधानतत्सम्बन्धानां भेदसिद्धौ पदानामन्विताभिधानात् स्वरूपसिद्धावेव तदपेक्षत्वमिति विशेषात् ।

एतेन प्रत्यक्षादिविषयस्य तात्त्विकांशे बाधात् सांव्यवहारिकमेव तेषां प्रामाण्यम्, अद्वैतश्रुतेस्तु सर्वथा बाधवैधुर्यात् तात्त्विकमेव प्रामाण्यमिति विभागो निरस्तः; श्रौतज्ञानस्य प्रत्यक्षादिविरोधेऽनुत्थानमेवेत्युक्तत्वात् ।

इति भेदवादो नाम प्रथमोऽधिवादः
समाप्तः ।

---

[ अद्वैतवादः । ]

किञ्च अद्वितीये ब्रह्मणि प्रमाणमस्ति वा न वा? यद्यस्ति तर्हि द्वितीयं ब्रह्म तत्र प्रमाणञ्चास्तीति द्वैतापत्तिः । अथ नास्ति प्रमाणम्, तर्हि कथमद्वितीयस्य ब्रह्मणोऽपि सिद्धिः? प्रमाणाभावात् । अथ प्रमाणस्य माया मयत्वेऽपि सदद्वितीयविषयत्वात् प्रामाण्यम् । तन्न; प्रमाणगोचरतया सदद्वितीयविषयत्वस्याप्यपरमार्थरूपत्वात् । परमार्थत्वे वा द्वैतापत्तेः । एतेनैतन्निरस्तम् ।

---

१. रजमित्यपास्तम्; क. प. २. वेतदपेक्षत्वमिति. ख. क. ३ प्रमाण; सिद्धिः. घ. ४. यस्यापरमार्थ. ग.

यदाहुः—समारोपितदीर्घत्वादिधर्मभाजो वर्णात् पारमार्थिकार्थसिद्धेरलीकात् प्रतिबिम्बात् सत्यबिम्बानुमानसिद्धेश्च दर्शनाद्वैतविषयस्य प्रमाणस्य स्वरूपेण सद्रूपत्वाभावेऽपि प्रामाण्यमविहतमिति। यतस्तत्रापि तत्तदलीकार्थगोचरस्य सत्यरूपज्ञानस्यैव प्रामाण्यम्। न च ज्ञानमात्रस्य दर्शनादलीकरूपस्य विषयस्यापि तदवच्छेदकत्वेन प्रमाणशरीरान्तःप्रवेश[1] इति वाच्यम्; तस्योपलक्षणावच्छेदकत्वात्। न चोपलक्षणावच्छेदकस्याप्युपलक्ष्यशरीरान्तःपातित्वम्; न हि काकस्य गृहोपलक्षणस्य गृहशरीरनिवेशित्वम्।

इत्यद्वैतवादः चतुर्विंशः समाप्तः।

[अनिर्वचनीयवादः।]

अथोच्येत—न प्रमाणादेः प्रपञ्चस्यात्यन्तासत्त्वं ब्रूमः; येन न प्रामाण्यं स्यात्, किन्त्व[2]निर्वचनीयत्वम्।

न चानिर्वचनीयं नामाप्रामाणिकम्; असतो नृशृङ्गादेरिव ख्यानानुपपत्तेः सतः चिदात्मन इव बाधानुपपत्तेः ख्यातिबाधान्य[3]थानुपपत्त्या शुक्तिकारजतादेस्सदसद्रूपानिर्वाच्यत्वसिद्धेरिति। तदप्युक्तम्; सद्विलक्षणस्य नृशृङ्गादेरिव ख्यानुपपत्तेः असद्विलक्षणस्य चिदात्मन इव बाधानुपपत्तेः सदसद्विलक्षणत्वेऽपि शुक्तिकारजतादौ ख्याति[4]बाधयोरनुपपत्तेः।

---

१. शरीरान्तः प्रवेशित्व. क. २. किंत्वनि. ख. ग ३. विप्रबाधान्यान्यथानुपपत्त्या शुक्तिरजतादे. घ. ४. बाधानुपपत्ते. ग.

असतस्सदधीननिरूपणत्वात् तद्वैलक्षण्यस्य बाधाभावप्रयोजकत्वे [1]गौरवात् सत्त्वस्यैव तत्प्रयोजकत्वमिति चेन्मैवम्; असतः सदधीननिरूपणत्वेन ख्यानाभावप्रयोजकत्वेऽपि गौरवापत्तेः सत्त्वस्यैव तत्रापि प्रयोजकत्वप्रसङ्गात् ।

अथ लाघवे सत्यपि सत्त्वस्य ख्यानाभावप्रयोजकत्वे चिदात्मनोऽपि ख्यानाभावप्रसङ्गरूपात्[2] बाधकात्स सत एव ख्यानाभावप्रयोजकत्वं, तर्हि सत्यपि लाघवे सत्त्वासत्त्वयोः बाधाभावख्यानाभावौ [3]प्रति प्रयोजकत्वे शुक्तिकारजतादौ सत्त्वासत्त्वव्यापकभूतबाधाभावख्याना-भावविरुद्धयोर्बाधख्यानयोर्दर्शनेन सत्त्वासत्त्वयोर्निवृत्तिप्राप्तौ, यत्सद्विलक्षणं तदसदेव यथा नरविषाणम्, यच्चासद्विलक्षणं तत्सदेव यथा चिदात्मेति सत्त्वासत्त्वयोरन्योन्यविधिनिषेधरूपत्वमिति भङ्गप्रसङ्गरूपं बाधकमस्तीत्य-सद्वैलक्षण्यसद्वैलक्षण्ययोरेव बाधाभावख्यानाभावौ प्रति प्रयोजकत्वं प्राप्तम् । एवञ्च सदसद्वैलक्षण्ये ख्यातिबाधयोरनुपपत्तेः शुक्तिकारजतादेः सदसद्रूप-त्वमेव स्यात् । न चैवं यत्सत् तन्न बाध्यतेति व्याप्तिर्भज्येतेति वाच्यम्; इदमंशस्य रजतमित्यंशस्य च सद्रूपस्य बाधानभ्युपगमात् । कस्य तर्हि बाधः? शुक्तिरजततादात्म्यस्यासद्रूपस्येति ब्रूमः । कथमसतः ख्याना-भावादख्यानस्य बाध इति चेन्मैवम्; असतोऽपि ख्यानाभ्युपगमात् । यदसत् तन्न ख्यायते यथा नरविषाणमित्यसतः ख्यानं प्रमाणविरुद्ध-मिति चेन्न; साध्यविकलत्वाद् दृष्टान्तस्य । ख्यायत एव हि नरविषाण-शब्दान्नरविषाणमपि । न चापरोक्षज्ञानस्य ख्यानाभिमतत्वादसङ्कोचरत्व-

---

१. त्वे चिदात्मगौरवात्. ग. २. रूपत्वात्. क. ख. ३. यत्सत्त्व-विलक्षणं. घ. ४. प्राप्तमिति घ. ५. यत्सत् तत् तन्न बाध्यत इति. घ. ६. स्य च. ग.

मनुपपन्नमिति वाच्यम्; अपरोक्षज्ञानगोचरभावाभावयोः सामग्रीसदसद्भावप्रयुक्तत्वेन सत्त्वासत्त्वयोरप्रयोजकत्वात्। न हि सदपि सर्वमपरोक्षं, किन्तु सामग्रीसन्निधानात् किञ्चिदेव। यथा चैवमपि नासत्ख्यात्यभ्युपगमः तथान्यथाख्यातिसमर्थन एव समर्थितम्। एवञ्च ख्यातिबाधयोः सदसद्रूपत्वेनोपपत्तेरुपपादितत्वादर्थापत्तेरन्यथोपपत्तिर्दूषणमापन्नम्। किञ्च यदीदं रजतमित्यस्य सदसद्विलक्षणमलौकिकं रजतं विषयः तर्हि नेदं रजतमित्यस्य को विषय इति वाच्यम्। न तावत् प्रतिपन्नस्यासत्त्वं; सदसद्रूपविलक्षणस्यासद्रूपवेदनेन बाध्यबाधकभाववैपरीत्यप्रसङ्गात्। नापि तस्यैव सदसद्विलक्षणत्वम्; उभयोरेकगोचरत्वेन बाध्यबाधकभावानुपपत्तेः। न च लौकिकपरमार्थरजतस्यात्रासत्त्वं विषयः[1]; तथा सति सदसद्विलक्षणमलौकिकं रजतं पूर्वमत्ययेन प्रसञ्जितमुत्तरेण च लौकिकस्यान्यस्यैव रजतस्यासत्त्वमावेदितमिति घटवेदनस्य पटाभाववेदनेनेव[2] न परस्परं बाध्यबाधकभावः स्यात्। कथञ्चाप्रसक्तस्य लौकिकरजतस्यासत्त्वं बाधबोधो गोचरयेत्? अयमेव तस्य प्रसङ्गो यदलौकिकस्य रजतस्य प्रतिभास इति चेन्नैवम्; अन्यप्रसङ्गस्यान्यनिषेधबाध्यत्वानुपपत्तेः, उपपत्तौ वा घटप्रसङ्गस्यापि पटनिषेधबाध्यत्वापत्तेः। तस्माच्छुक्तिरजततादात्म्यस्य पूर्वज्ञानप्रसञ्जितस्यासत्त्वावेदनादुत्तरस्य बाधकत्वम्। न चैवं पूर्वज्ञानस्यैनालम्बनत्वम्; संसर्गमात्रस्यैवासत्यत्वेन सर्वथानालम्बनत्वाभावात्, तस्यैव चानिष्टत्वात्।

---

१. रन्यथोपपत्तिदूषण. ख. ग. रन्यथैवोप०, घ. २. ये प्रस०, घ. ३. नेनैव पर. ख. ग. नेन पर. घ. ४. न्यत्र प्र०, ख. क. ५. स्यालम्ब, घ. ६. स्यैव सत्यत्वेन. क. ७. त्वे सर्व०. ख. क.

एतेनैकगोचरयोर्[1]बाध्यबाधकत्वे धारावाहिकयोरपि स्यात्। भिन्नगोचरयोस्तु तत्त्वे घटपटवेदनयोरपि तत्त्वप्रसङ्ग इत्यपास्तम्; एकत्रैव सत्त्वासत्त्वगोचरयोर्बाध्यबाधकभाव इति विशेषस्योक्तत्वात्।

इत्यनिर्वचनीयवादो नाम पञ्चविंशवादः
समाप्तः।

[ मिथ्यावादः। ]

अपि च शुक्तिरजतादेः सदसद्विलक्षणत्वे कादाचित्कत्वं[2] अकादाचित्कत्वं वा स्यात्। अकादाचित्कत्वे नित्यत्वप्रसङ्गोऽपसिद्धान्तश्च। कादाचित्कत्वे उपादानकारणं वाच्यम्; प्राकट्यव्यतिरेकस्य भावस्योपादानमन्तरेणानुपपत्तेः। न चाविद्यैवोपादानम्। अविद्या हि विद्याभावो मिथ्याभूतं वा ज्ञानम्, न चोभयं कस्यचिदुपादानं अद्रव्यत्वात्। न[4] च भावरूपानादिरविद्योपादानम्; तत्र प्रमाणाभावात्। न च "इन्द्रो मायाभिः पुरुरूप ईयत" इति वैदिकं वचः प्रमाणम्; तस्य पूर्वापरपरामर्शे प्रपञ्चगोचरतया मायामयत्वप्रतिपादनपरत्वेनाप्रतिभासात्। प्रतिभासेऽपि[5] वा माया[6]पदस्य सदसद्विलक्ष[7]णपरत्वेनाव्युत्पत्तेः, अपदार्थस्य[8] च वाक्यार्थानुप्रवेशाभावात्।

---

१. योर्न बाध्य०. ख. ङ. २. त्वमकादाचित्कं वा. च. ३. चापि वि. ख. ङ.
४. न चाभाव. ख. ग. ङ. ५. से वा माया. च. ६. मायपदस्य. ख. ग. ङ.,
७. णत्वेनाव्यु०. घ. ८. एव वाक्यार्थो०. च.

स्यादेतत्—शुक्तिरजतादेः[1] कादाचित्कस्य[2] दर्शनात्तस्योपादान-
मन्तरेणासम्भवात् सदुपादानत्वे च कुम्भादिवत्सत्त्वप्रसङ्गादसतश्च
नरशृङ्गादेरिवोपादानत्वानुपपत्तेः परिशेषात् सदसद्विलक्षणस्यैवोपादान-
त्वम्, तस्य च सादित्वे तथाविधोपादानान्तरकल्पना गौरवायेत्यनादि-[3]
त्वमपि, सैव चानादिरित्युच्यत इति । तदयुक्तम्; शुक्तिरजतादेः
सत्योपादानत्वेनाप्युपपत्तेः । सत्योपादानस्य सत्यत्वदर्शनाच्छुक्तिकारज-
तादेरपि सत्यत्वप्रसङ्गात्[4] सत्योपादानत्वं प्रमाणविरुद्धमिति चेत्, यद्येवं
कुत[5] एतदवगम्यते सत्योपादानस्य सत्यत्वमेवेति[6]? कुम्भादौ तथा दर्श-
नादिति चेत्[7], किं कुम्भादयस्सदुपादानास्सत्याश्च भवताम्? ओमिति चेत्,
सदद्वैतहानिः[8] । अतश्शुक्तिरजतादेः सत्योपादानत्वे सत्यत्वप्राप्तिरिति
यद् बाधकमुक्तं तदसिद्धमेव । तथापि यत् सत् तदसत्योपादानं न भवति,
यथा ब्रह्मेति सत्योपादानत्वं प्रमाणविरुद्धमिति चेत्तर्हि यत् सद्विलक्षणं
सदुपादानमेव न भवति यथा नरविषाणमिति सदसद्विलक्षणस्यापि
सद्विलक्षणत्वादुपादानत्वं[9] प्रमाणविरुद्धं भवेत् । एवञ्चार्थापत्तिरन्यथाप्युप-
पन्ना । तथा पूर्वोक्तयुक्तिभिः शुक्तिकारजतादेः कादाचित्कस्य सदसद्वि-
लक्षणस्यासिद्धेः[10] कल्पकाभावो द्रष्टव्यः ।

---

१. क्तिकारज॰. क. २ स्य दर्शनात्तदुपादा॰. घ. ३ दिमत्त्वमपि. ख. ह ४ सत्त्वप्र॰. ह. ५ वगत. ख. ग. ६. त्वमिति. घ. ७. तामिति चेत्. ख. ग. ८. दद्वैत. ग. ह ९ सदसद्वि. घ. १०. णस्य सिद्धेः. क.

किञ्च यदि शुक्तिरजतादेः सदसद्विलक्षणा अनादिरविद्या उपादानं[1] तर्हि तन्निवृत्तिः किमसती सती वा सदसद्विलक्षणा वा? न तावद-मुष्या असत्त्वम्; अनिर्मोक्षप्रसङ्गात्। नापि सत्त्वं; सदद्वैतभङ्गप्रस-ङ्गात्।[2] नापि च सदसद्विलक्षणत्वम्; सदसद्वैलक्षण्यलक्षणत्वादविद्या-यास्तन्निवृत्तेरपि[3] तल्लक्षणत्वेनाविद्यात्वापत्तेः। अस्त्वप्यविद्येति चेन्मैवम्; अविद्यात्वव्यापकभूतयोर्बाध्यत्वनिवर्त्यत्वयोर्निवृत्तावविद्यात्वस्यैव निवृत्तेः। न चाविद्यानिवृत्तिर्निवर्त्या बाध्या चेति वाच्यम्; निवृत्तिनिवृत्तौ निवृत्ति-बाधे वा निवर्त्यस्याविद्याया अनिवृत्तिप्रसङ्गेनानिर्मोक्षत्वापत्तेः। एतेन निवृत्ति-रूपाविद्यायाऽप्यवस्थानेऽपि निवर्त्याविद्याया मूलोच्छेदान्नानिर्मोक्ष इत्यपास्तम्; बाध्यत्वनिवर्त्यत्वयोर्निवृत्तावविद्यात्वनिवृत्तेरेवोक्तत्वात्। न चाविद्या-निवृत्तिस्सदसद्विलक्षणविलक्षणापि भवति। सदसद्विलक्षणवैलक्षण्ये सदसद्रूपत्वापत्तेः। नहि यद्यद्व्यतिरिक्तं तत्तद्व्यतिरिक्तं न भवतीति सम्भवति; निषेधनिषेधस्य विधिरूपत्वात्। अस्तु सदसद्रूपत्वममुष्या इति चेन्मैवम्; परस्परप्रतिषेधरूपयोरेकत्र समुच्चयानुपपत्तेः, उपपत्तौ वा ख्यातिबाधयोः प्रपञ्चस्य सदसद्रूपत्वेनाप्युपपत्तेः सदसत्ख्यातिनि-र्वाच्यत्वस्यैवासिद्धेः।

---

१. दस्या. असत्त्वम्. घ. २. नि सद०. घ. ३. वृत्तिरपि. ख. ग. ङ. ४. स्यापि निवृत्ति घ. ५. दानिर्मोक्ष० घ. ६. ध्यानि. ग. ङ. ७. क्षणापि भवति. ग ८. तद्व्यतिरिक्त. ङ. ९. विरुद्धत्वात्. ग. १०. सद्विलक्षणत्व-ममुष्या. क. ११. ययोरेकत्र क. घ.

एतेनाविद्यानिवृत्तेः प्रसिद्धप्रकारत्रयानन्तर्गतौ चतुर्थप्रकारत्वमेव परिशेषादित्यपास्तम्। किञ्चाविद्यानिवृत्तिः किमुत्पाद्यानुत्पाद्या वा? न तावदनुत्पाद्या; नित्यमुक्तिप्रसङ्गात्। उत्पाद्या चेत् किमुत्पादकम्? अद्वैतसाक्षात्कार इति चेत् स किमनिवर्त्यो[1] निवर्त्यो वा? न तावदनिवर्त्यः; तस्याविद्यान्तर्गतस्यानिवृत्ताव[2]निर्मोक्षत्वापत्तेः[3]। नापि निवर्त्यः, कारणाभावात्। न च स्वयमेव कारणम्; स्वस्य निवृत्तिविरोधित्वेन कारणत्वानुपपत्तेः।

यत्पुनर्यथा सलिलगतं कतकरजो रजोन्तराणि शमयति, स्वयञ्च शाम्यति तथाद्वैतसाक्षात्कार इत्यभाणि। तत्र कोऽयं शमः,[4] किं स ध्वंसः अधःपातो वा? न तावद्ध्वंसः, असिद्धत्वात्। अथाधःपातः, तथापि रजोन्तराणां कतकरजोऽधःपातहेतुः, कतकरजसः पुनस्तद्गतं गुरुत्वं कर्म वा पतनहेतुरिति कथं स्वस्यैव स्वशमहेतुत्वमिति अलमतिदूरगमनेन। सिद्धं तावदेतत्—

> शुक्तिरर्थान्तरीभूतरजतात्मावभासते।
> न त्वनिर्वचनीयस्य रूप्यस्यान्यस्य धीरिति॥
>
> एवञ्च सत्यनिर्वाच्यः प्रपञ्च इति साधनम्।
> तद्दृष्टान्तेन साध्यस्य विकलत्वात् सुदुर्वचम्॥

इत्यविद्यावादो नाम षष्ठिप्रवाद
समाप्त।

---

[1] र्त्यो वा नि०, ग. छ [2] निवृत्तौ च निर्मो० छ [3] निर्मोक्षापत्तेः.
[4] किं ध्वंस क ग घ.

[ मिथ्यावादः। ]

न च प्रपञ्चो मिथ्येति जाड्यदृश्यत्वहेतुतः।
स्वप्नप्रपञ्चवत्साध्यं मिथ्यात्वस्यानिरूपणात्॥

यदि हि प्रपञ्चो मिथ्या दृश्यत्वात् भासमानत्वाद्वा स्वप्नप्रपञ्चवदिति साध्यम्, तर्हि कोऽयं मिथ्यापदार्थः किमसत्त्वं उत सदसद्विलक्षणत्वं उत बाध्यत्वम्? न तावदसत्त्वम्; अपसिद्धान्तप्रसङ्गात्। न हि भवन्तोऽपि प्रपञ्चस्यासत्त्वमाचक्षते, किन्तु सदसद्विलक्षणत्वम्।

अपि च धर्मी दृष्टान्तः साध्यधर्मः साधनञ्चेत्यादयः प्रपञ्चान्तर्गताः प्रमाणसिद्धा न वा? यदि प्रमाणसिद्धाः तर्हि तद्ग्राहकैः प्रमाणैर्बाधितविषयत्वादनुमानस्य न स्यादेवोत्थानम्। अथ न प्रमाणसिद्धाः तर्हि धर्म्यसिद्धेराश्रयासिद्धत्वं, साध्यासिद्धेरप्रसिद्धविशेषणत्वं, साधनासिद्धेः स्वरूपासिद्धत्वं, साधनस्य सपक्षवृत्तित्वासिद्धेरसाधारणानैकान्तिकत्वं, विपक्षव्यतिरेकासिद्धेः सन्दिग्धानैकान्तिकत्वं, साध्यसाधनयोर्दृष्टान्तधर्मित्वेनासिद्धेर्दृष्टान्तस्योभयविकलत्वमित्यादिदूषणशताकुलत्वात् सुतरामनुत्थानम्। न च तत्प्रतिभासस्य प्रमाणतस्सिद्ध्यभावात् बुद्ध्यारूढैर्धर्म्यादिभिरनुमानोत्थानम्; अप्रामाणिकस्य प्रमितिसाधनत्वानुपपत्तेः, उपपत्तौ वा बाष्पस्यापि धूमबुद्ध्यारूढस्य धूमध्वजप्रमितिसाधनत्वप्रसङ्गात्। यदि बुद्धिमात्रारूढैर्धर्म्यादिभिः सिध्यतः साध्यस्य प्रामाणिकत्वं तर्हि बुद्धिमात्रारूढैर्विपक्षवृत्तित्वादिभिः सिध्यतो दूषणशतस्यापि प्रामाणिकत्वमनिर्वार्यम्। न च विपक्षाव्यतिरेकादयो बुद्धावप्यनारूढाः; त्वदीय-

---

१. धर्म्य॰ ख. क. २. द्धेः दृष्टान्तस्योभय॰. घ. ३. कलमित्यादि. ग.
४. भावेऽपि बुद्ध्या॰. घ. ५. बाष्पस्य धूम॰. घ.

हेतुर्विपक्षाद्व्यावृत्त इत्यादिमीमांसकप्रणीतवाक्यजन्यायां बुद्धावारूढ-त्वात्। अतो न तावदसत्त्वं मिथ्यापदार्थः। न च[1] सदसद्विलक्षणत्वम्; तस्यान्यत्राप्रसिद्धेः पक्षस्या[2]प्रसिद्धविशेषणत्वं दृष्टान्तस्य साध्यविकलत्व-मित्यादिप्राप्तेः। नापि बाध्यत्वम्; बा[3]धकाभावस्य योग्यानुपलम्भ-सिद्धत्वात्। न चेदमेवानुमानं बाधकम्; अस्य प्रपञ्चप्रतिभासबाध्य-त्वेना[4]नुत्थानात्। न च तत्प्रतिभासस्य भ्रान्तत्वादुत्थानम्; अनुमानो-त्थाने सति तद्भ्रान्तत्वं तद्भ्रान्तत्वे सति तद[5]बाधादनुमानोत्थानमित्य-न्योन्याश्रयप्रसङ्गात्। अतोऽसिद्धमबाधितप्रत्यक्षादिसिद्धस्य प्रपञ्चस्य सत्यत्वम्।

इति मिथ्यावादो नाम सप्तविंशवादः
समाप्तः।

—

[विज्ञानवादः]

अत्र पुनरेताभिरेव युक्तिभिः प्रपञ्चस्य मिथ्यात्वमाचक्षाणाः सुगत-मतानुसारिणः प्रत्यवतिष्ठन्ते वदन्ति च—यत् प्रकाशते तत् प्रकाशाद-भिन्नं यथोभयप्रसिद्धः प्रदीपः, प्रकाशते च नीलादिः तस्मात् प्रकाशादभिन्नः। न च विपक्षे बाधकाभावाद् व्याप्त्यसिद्धिः; नीलादेः प्रकाशाद् भेदे प्रकाश-मानत्वस्यैवानुपपत्तेः। तथा हि—नीलादेः प्रकाशमानत्वं स्वाभाविकं परा-यत्तं वा? परायत्तत्वे यद्यस्य न स्वाभाविकं न तत्तस्य परेणापि कर्तुं शक्यं यथा नरस्य तुरगत्वमिति नित्यप्रकाशमानत्वप्राप्तेर्नीलादेः स्वरूप-

---

१. च सद्विलक्षणत्व० ग. २. स्याप्यप्र०० क० स्य प्रसिद्ध. ख ३. बाधा-भावस्य, ख. ग. ४. नुमानात्. ग ५. दबाधादनु०. ख.

मेवापह्नियते । अथ स्वाभाविकं, न तस्य परापेक्षा यथा नीलस्य नीलत्वमिति सिद्धं नीलादेः स्वयंप्रकाशत्वम् । सिद्धञ्च तत एव प्रकाशादभिन्नत्वमपि, तस्य तल्लक्षणत्वात् ।

किञ्च यदि ज्ञानाद् भिन्नोऽर्थः तर्हि किंलक्षण[3]मस्य ग्राह्यत्वम्? न तावदर्थस्वलक्षणम्; घटज्ञाने विश्वस्य विषयत्वप्रसङ्गात् । न च प्राकट्याश्रयत्वं व्यवहाराश्रयत्वं वा विषयत्वम्; भूतभविष्यतोस्तदसम्भवेनाविषयत्वप्रसङ्गात् । न ह्यप्रत्युत्पन्नो धर्मी धर्मश्च तदाश्रयः प्रत्युत्पन्न इति सम्भवति । न च हेतुत्वं विषयत्वम्; इन्द्रियादेरपि तत्त्वप्रसङ्गात् । ज्ञानेन सदृशो विषयः । न चेन्द्रियादिर्ज्ञानेन सदृश इति चेन्न; समनन्तरप्रत्ययस्य विषयत्वप्रसङ्गात् । अस्ति हि तस्य ज्ञानत्वेन सादृश्यं हेतुत्वञ्च । न[4] चात्यन्तसदृशो हेतुर्विषयः । समनन्तरप्रत्ययश्च नीलादिज्ञानेन नात्यन्तसदृशः, तस्य पीतादिरूपत्वादिति वाच्यम्; धारावाहिकेषूत्तरं प्रति पूर्वस्य विषयत्वप्रसङ्गात् । न च यत्स्वाकारमिन्द्रियादिर्ज्ञानं जनयति स विषय इति वाच्यम्; रूपेणेव रसेनापि चक्षुषः संयुक्तसमवायसम्बन्धोऽस्तीति रूपवेदने रसस्यापि विषयत्वप्रसङ्गात् । भवतु तर्हि वैभाषिकमतं ज्ञानैकसामग्रीप्रभवत्वमेवार्थस्य विषयत्वमिति । न चार्थस्य ज्ञानं प्रति हेतुत्वं, येन ज्ञानस्य वर्तमाना[5]वभासत्वादर्थस्य तत्काल[6]स्थितौ क्षणभङ्गहानिः स्यात् । न च कारणभूतप्राचीनार्थेन्द्रियालोकमनस्कारात्मैकपुञ्जाज्जायमानकार्यभूतार्वाचीनतादृशपुञ्जगतस्येन्द्रियादेरपि ज्ञानैकसामग्रीप्रभवत्वा-

---

१. अतः. ग.    २. एव प्रकाशाभिन्नत्वमपि. ख. एव स्वभावादभिन्नत्वमपि. ग.
३. मस्यग्रा०. ग.    ४. मेवात्यन्त०. ख, ग. ङ.    ५. भासत्वा०. क. ख. ङ.
६. कल्प०, ख. ङ.    ७. स्मपुञ्जा०. क. घ.    ८. ज्ञानस्य. ग. ङ.

दर्पणवद्वेद्यत्वप्रसङ्गः। यतो[1] यथा सम्बन्धतुल्यत्वेऽपि चक्षुषो रूपमेव प्रकाश्यं न रस इति स्वभावः, तथैकसामग्रीप्रभवत्वेऽप्यर्थस्यैव[2] विषयत्वं नेन्द्रियादेः; स्वभावस्यापर्यनुयोज्यत्वात्। तदयुक्तम्; भूतभविष्यतोरवेद्यत्वप्रसङ्गात्। न च ते अवेद्ये एव परमध्यवसेये इति वाच्यम्; अध्यवसेयस्यापि वेद्यत्वानपायात्।

किञ्चास्मिन्मते चक्षू रूपमेव प्रकाशयतीत्यपि दुर्निरूपम्; चाक्षुषज्ञाने रूपस्येव रसस्यापि वेद्यत्वातिपातात्। न हि चाक्षुषज्ञानेनैकसामग्रीप्रभवत्वादितरत् चक्षुःप्रकाश्यत्वं, तच्च पार्थिवाप्यरूपेष्वर्थेषु रूपेणेव रसेनापि समानमेव। तस्माद्ग्राह्यलक्षणायोगादवभासमानो[3] नीलपीतादिराकारो ज्ञानस्यैवेति प्राप्ते सौत्रान्तिकाः प्राहुः—अस्तु ज्ञानं साकारं तथापि न बाह्यमपह्नोतुं शक्यम्; ज्ञानस्याकारसमर्पकहेतुत्वेन बाह्यस्यापि ग्राह्यत्वव्यवस्थानात्। ज्ञानाकारसमर्पणक्षमं[4] हेतुत्वमेव हि ग्राह्यत्वम्। न च ज्ञानं स्वमेव[5] हि नीलादिमाकारं गृह्णाति न च[6] गृह्णात्यर्थम्; अतोऽर्थस्य[7] स्वाकारसमर्पणक्षमं हेतुत्वमित्यादि निष्प्रमाणकमिति[8] वाच्यम्; यदानिरस्तस्य विचित्ररूपस्य नीलादेर्ज्ञानाकारस्य कारणवैचित्र्यमन्तरेणानुपपत्तेः। न हि समनन्तरप्रत्ययमात्रात्[9] तदुत्पत्तिः; तेषामेकरूपत्वेनैकस्मिन् सन्ताने नीलबुद्ध्यनन्तरं नीलबुद्धिरेव न पीतादिबुद्धिरिति

---

१. यावदन्य. क. २. स्येऽर्थस्यैव ग. ३. लक्षणयोगा०. क. ४. समर्पण हेतुत्वमेव. ग. समर्पणक्षमं. ख. ङ ५. स्वयमेव ग. घ. ६. न गृह्णातीत्यर्थं ख. ङ. ७. तोऽप्यर्थस्य. क. ख. ङ. ८. निष्प्रमाणकमिति. घ. ९. यादनुत्पत्तिः. ग.

प्रसङ्गात्। न हि वित्तिः स्वसत्तामात्रेण[1] नीलपीतादिविचित्रतां भजते; तस्याः सत्त्वाविशेषादविशेषप्रसङ्गात्। अतो विचित्राकारसंवेदनदर्शनाद्वि[2]-चित्राकारसमर्पणक्षमहेतुत्वेन विचित्राकारसिद्धेर्यद्विचित्रं कारणं सोऽर्थ इत्यर्थस्यापि[3] सिद्धिः। न च सर्वत्रार्थस्यानुमेयपक्ष[4]निक्षेपात् किञ्चिद् प्रत्यक्षं किञ्चिदनुमेयमिति विभागाभावः; यस्य साक्षादेव स्वाकारसमर्पकत्वेन हेतुत्वं तस्य प्रत्यक्षत्वम्, यस्य तु परम्परया तस्यानु[5]मेयत्वमिति विभागात्। तस्मात् ज्ञानस्य साकारत्वेऽपि बाह्य[6]ग्राह्यत्वमविहतमित्य-सिद्धो ग्राह्यलक्षणायोग इति। तदिदमनुपपन्नम्; विचित्रशक्तिभ्यः सम-नन्तरप्रत्ययेभ्य एव विचित्रकार्योत्पत्तेः। न च शक्तिवैचित्र्यं पर्यनुयोगार्हं; तस्य कार्यवैचित्र्यमात्रकल्प्यत्वात्। किञ्च स्वप्नावस्थायामसत्यप्यर्थ-सन्निधौ ज्ञानवैचित्र्यदर्शनात् तस्य समनन्तरप्रत्ययकृतत्वमवश्यमङ्गी-करणीयम्। जाग्रद्दशायामपि तथैव प्रसक्तेर्नार्थसिद्धिः। अतस्सिद्धं ज्ञाना-द्भिन्नस्य ग्राह्य[10]लक्षणायोगान्नीलादेश्च ग्राह्यत्वात् तस्य ज्ञानात्मकत्वमेवेति।

अपि च यद्येन नियत[11]सहोपलम्भं तत्ततो न भिद्यते यथैकस्मा-च्चन्द्राद्द्वितीयश्चन्द्रः, नियतसहोपलम्भश्च ज्ञानेन नीलं, अतो ज्ञानादभिन्नम्, तथा यद्यतो भिद्यते तत्तेन नियतसहोपलम्भं न भवति यथा नीलं पीतेन, नियतसहोपलम्भश्च ज्ञानेन नीलं, अतो ज्ञानादभिन्नमेव। किञ्च योऽपि बाह्यं

---

१. सन्तानमात्रेण. घ. २. दनस्पर्शनाद्वि॰. घ. ३. त्यस्यापि. ग. ४. क्षनिर्दे विक्षेपात् किञ्चिद्. ख. ङ. ५. त्वमिति. ख. ङ. ६. ग्राह्यत्व॰. घ. ७. कल्पनात्. घ. ८. धौ गतत्वार्थं॰. ग. ९. स्वीकरणीयम्. घ. १०. ग्राह्यत्व॰. घ. ११. नियमेन सहो॰. ग.

ग्राह्यमाह तेनापि ज्ञानसिद्धिरवश्याऽभ्युपगमनीया[1] न चाप्रत्यक्षस्य तस्य सिद्धिः सम्भवति; लिङ्गाभावात्। न चार्थो लिङ्गम्; विनापि ज्ञानं सुषुप्तावर्थसम्भवाभ्युपगमात्। नाप्यर्थधर्मो ज्ञानजन्मा लिङ्गं, तदभ्युपगतौ प्रमाणाभावात्, अतीतादिषु तदसम्भवेन ज्ञानविलोपप्रसङ्गाच्च। ननु व्यवहारो लिङ्गम्। मैवम्; प्रागपि व्यवहारात् पश्यतो घटं जानेऽहं घटमिति. ज्ञानानुसन्धानदर्शनात्। तस्मादप्रत्यक्षत्वे ज्ञानस्वरूपमेव न सिध्येत्। न च निराकारस्य प्रत्यक्षत्वम्। न च द्वावाकारावनुभूयेते इत्यनु-भूयमानस्य नीलाकारस्य बलात् ज्ञानात्मकत्वं स्वयंप्रकाशकत्वञ्च प्राप्तम्। ननु स्वप्रकाशकत्वे स्वात्मनि क्रियाविरोधः। मैवम्; नहि ज्ञानं प्रकाशनरूपयात्मानं क्रियया कर्म करोति, किन्तु स्वहेतुभ्यः प्रकाश-रूपमेवोत्पन्नम्। अतः सर्वरूपमेव ज्ञानं स्वप्रकाशमनादिवासनावशात् साकारमेव बाह्यमप्यवस्यन्मिथ्येति[2] सिद्धम्॥

अत्राभिधीयते—

> धियामबाह्यग्राह्यत्वं सर्वासामेव गृह्यते।
> स्वांशपर्यवसानं वा मिथ्यात्वं वा यया धिया॥
>
> सा किमन्यादृशी यद्वा तादृशी यदि तादृशी।
> नेष्टसिद्धिरतादृक्त्वे व्यभिचारः स्फुटो भवेत्॥

निरालम्बनवादिना हि सर्वज्ञानानां बाह्यग्राह्यवैधुर्ये स्वांशालम्बनत्वं[3] वा मिथ्यात्वं वा साध्यम्। तत्र यया धिया तत्साध्यं गोचरीकर्तव्यं सापि

---

१. द्विर्भवति- क- घ. २. स्य मिथ्येति- ख. ङ. ३. त्वं मिथ्यात्वं वा ग.

किं तत्साध्ययोगित्वेन[1] सर्वज्ञानसदृशी,[2] न वा तत्सदृशी ? पूर्वत्र न साध्यसिद्धिः; नहि सर्वज्ञानवत् स्वयमपि सर्वग्राह्यविधुरया सर्वज्ञानगतं ग्राह्यग्राह्यवैधुर्यं स्वबहिर्भूतं शक्यग्रहम् । न च स्वांशपर्यवसायिन्या सर्वज्ञानगतं तादृशत्वमस्वांशभूतं गृहीतुं शक्यम् । नापि स्वयं मिथ्याभूतया ज्ञानान्तरगतं मिथ्यात्वं शक्यावगमम्;[3] मिथ्यात्वग्राहकस्य मिथ्यात्वे ग्राह्यभूतमिथ्यात्वाभावेन सर्वज्ञानानां यथार्थत्वप्रसङ्गात् । अथ न ग्राह्यग्राह्यविधुरा न च स्वांशालम्बना नापि मिथ्येत्यन्यादृशी, तर्हि तत्रैव विविधसाध्यप्रतिबद्धानामपि हेतूनां व्यभिचारः स्फुट इति सुतरां न साध्यसिद्धिः ।

किञ्च सर्वज्ञानानामनालम्बनत्वात् स्वांशालम्बनत्वाद्वा धर्मिस्वरूपं[4] लिङ्गस्वरूपञ्च नावगन्तुं शक्यमिति प्रकाशमानत्वादेर्हेतुजालस्य स्वरूपासिद्धत्वमाश्रयासिद्धत्वञ्च स्यात् । तथा लिङ्गस्य सपक्षसत्त्वविपक्षव्यावृत्त्योरपि तत एव दुरवगमत्वादसाधारणानैकान्तिकत्वं[5] सन्दिग्धानैकान्तिकत्वञ्च भवेत्[6] । ननु पक्षसपक्षविपक्षाः साध्यधर्मः साधनधर्मश्चेत्यादीनां ज्ञानान्तरकर्मत्वेन प्रकाशमानत्वाभावेऽपि स्वप्रकाशत्वादेव प्रागुक्तदोषानवकाश इति । नैवम्;[7] हेतोर्विपक्षव्यावृत्तिसिद्ध्यर्थं विपक्षप्रकाशोऽङ्गीक्रियमाणे विपक्षज्ञानस्य स्वाकारभूताद्विपक्षादभिन्नत्वेन विपक्षत्वाज्ञानत्वेन

१. न सर्वज्ञानवत् . ख. २. शी ? न तावत् सदृशी । पूर्वत्र. ग. ङ.
३. गमयितुं. ग. ४. धर्मं. ङ. ५. स्वत्र भवेत् सन्दिग्धानैकान्तिकत्वञ्च भवेत्. क. स्वत्र सन्दि॰. ख. ६. त् । यत्. ख. ग. ङ. ७. विपक्षादान. ग.

स्वयं प्रकाशत्वाच्च[1] तत्रैव प्रकाशमानत्व[2]हेतोर्विपक्षवृत्तिलक्षणो व्यभिचारः,
अनङ्गीक्रियमाणे तु विपक्षव्यावृत्तेरेवासिद्धेः सन्दिग्धानैकान्तिकत्व-
मित्युभयतः[3]स्पाशारज्जुप्रसङ्गात्। तथा नीलादिगोचरत्वेन[4] जडत्वज्ञानान्तर-
ग्राह्यत्वज्ञानव्यतिरेकादेरवश्यं प्रतिषेध्यतया प्रकाश्य[5]स्य ज्ञानाकारत्वेन
ज्ञानादभिन्न[6]त्वाद् ज्ञानमेव जडं ज्ञानान्तरग्राह्यं ज्ञानव्यतिरिक्तञ्च प्रसज्येत।

किञ्च यत्किञ्चिदस्मत्सिद्धान्तसिद्धं बौद्धेन प्रतिषेध्यतया प्रकाश्यं
तत्सर्वं ज्ञानाकारत्वेन[7] ज्ञानादभिन्नमिति परमार्थरूपमेव स्यात्। न च
यथार्थज्ञानाकारस्य परमार्थत्वमयथार्थज्ञानाकारस्य चापरमार्थत्वमिति
भेदादस्मत्सिद्धान्तसिद्धगोचरज्ञानस्य यथार्थत्वात्[8] तदाकारभूतमस्मत्-
सिद्धान्तसिद्धं परमार्थमिति वाच्यम्; ज्ञानगोचरस्य यथार्थत्वस्य विषय-
सत्यत्वनिबन्धनत्वानभ्युपगमे[9] स्वरूपसत्यत्वनिबन्धनमेव ज्ञानस्य यथार्थत्व-
मित्यस्मत्सिद्धान्तगोचर[10]ज्ञानस्यापि स्वरूपसत्यत्वेन यथार्थत्वप्राप्तेस्तदा-
कारभूतस्यास्मत्सिद्धान्तसिद्धस्यापि परमार्थत्वानपायात्। तथा धर्मि-
दृष्टान्तयोः साध्यसाधनधर्मयोश्च प्रयोगवाक्यगततत्तद्वाचकपदप्रकाश्यत्वात्
तत्तत्पदजन्यज्ञानाकारत्वेन तत्तज्ज्ञानादभिन्न[11]त्वात् ज्ञानस्य च ज्ञानान्तर-
धर्मत्वानुपपत्तेः हेतोरपक्षधर्मत्वं, दृष्टान्तस्य च साधनविकलत्वं साध्यवि-

---

१. शनत्वाच्च. ख. ङ. २. नहेतो. ग. नत्वे हेतोः. घ.
३. स्पाशारज्जु. क. ख. घ. ङ. ४. त्वे जड. घ. ५. श्यज्ञानाकारत्वेन. क.
६. भाभिन्न ग. ७. नाभिन्न. घ. ८. र्थज्ञानत्वात्. ख. ९. मेऽपि ख. क.
१०. चरास्मज्ज्ञान. ख. ङ. चरज्ञानेऽपि ग. चरस्यापि स्वरूप. घ.
११. ज्ञानभिन्न. ग.

फलत्वमित्यादि प्राप्तम् । एवं त्वदीयानुमानमुद्दिश्य मीमांसकेन सर्वेषामेव[1] दूषणानां तत्तद्वाचकैः प्रकाशितानां तत्तद्वाचकपदजन्यज्ञानादभिन्नत्वात् ज्ञानस्य[2] च सर्वत्र स्वरूपेण परमार्थरूपत्वात्[3] तदभिन्नानि तानि सर्वाणि दूषणान्यपि परमार्थरूपाणि स्युः । अत्यल्पश्चेदं वराकस्य सौगतस्य विप्रतिपद्यमानेन मीमांसकेन सौगतस्य शिरः छिन्नमिति वाक्योच्चारणे तद्वाक्यजन्यज्ञानविषयस्य तद्वाक्यजन्यज्ञानाकारत्वेन तदभिन्नत्वात्[4] मीमांसककर्तृकसौगतशिरश्छेदोऽपि सम्पन्नः[5] स्यात् ।

एतेन ग्राह्यत्वादिहेतवोऽपि पूर्ववत् साध्यं विकल्प्य तत्तद्दोषम-भिधाय निरस्ता वेदितव्याः । यत्तु[6] ज्ञानादनतिरिक्तस्य[7] ग्राह्यलक्षणा-योग इत्युक्तम्, तदग्रैव प्राकट्याश्रयत्वमेव ग्राह्यत्वमिति समर्थयद्भिरुप-रिष्टात् परिहरिष्यते । सहोपलम्भनियमस्तु[8] ज्ञेयप्रकाशसमये ज्ञान-प्रकाशस्यानभ्युपगमादसिद्ध एव । तथा एकस्य नीलस्य युगपद्बहुभि-र्[9]दृश्यमानस्यैकेनैवान्येनापि ज्ञानेन सहोपलम्भनियमासिद्धेरप्य-सिद्धत्वम्[10] । भिन्नान्येव तत्र प्रतिज्ञानं नीलादीनीति चेत् नैवम्; यदेव त्वया दृष्टं तदेव मया[11] दृष्टमिति सम्प्रतिपत्तेर्दर्शनात् । तथा सहभावस्य भेदव्याप्तत्वात्तत एव नीलतद्धियोरभेदसाधने हेतोर्विरुद्धत्वञ्च स्यात् ।

---

१. षां दूषणानां. ग. घ. २. ज्ञानस्य. घ. ३. र्थस्वरूप. ख. ङ. र्थस्वरूप-त्वात्. ग. ४. तत्तज्ज्ञानादभिन्नत्वात्. ग. ५. सर्वत्र स्यात्. ग. ङ. सर्वत्र स्यात्. ग. ६. तु ज्ञानाव्यतिरिक्तस्य. ङ. ७. नातिरिक्तस्य. ख. ८. स्तु प्रकाश. घ. ९. दृश्यमानस्यैकेनैव. ग. ङ. १०. सिद्धोऽप्यसिद्धत्वम्. ङ. ११. मापि. ङ. घ.

ननु चन्द्रेण द्वितीयचन्द्रस्येव ज्ञानेन नीलस्य भेदसहभावौ प्रतिभासमानावपि भ्रान्तावेव। यथाहुः—

> अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः।
> ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥

इति। तदयुक्तम्; प्रतिभासमानयोर्भेदसहभावयोर्ज्ञानाकारत्वेन ज्ञानादभिन्नत्वात् तस्य च सत्यत्वात् तदभिन्नौ नीलतद्धियोर्भेदसहभावावपि सत्याविति प्रसङ्गात् बाधाभावे भ्रान्तत्वमप्यनुपपन्नम्। न चेदमेवानुमानं बाधकम्; भेदप्रतिभासस्य भ्रान्तत्वे सत्यबाधितविषयत्वादनुमानोत्थानं, अनुमानोत्थाने च सति तत्प्रतिभासस्य भ्रान्तत्वमित्यन्योन्याश्रयप्रसङ्गात्।

यदपि यत् स्वयं न प्रकाशते तत् परेणापि प्रकाशयितुमशक्यमित्युक्तं, तन्मन्दम्; एतेनैव वाक्येनास्यैवार्थस्य पूर्वमस्मात् प्रत्यप्रकाशमानस्य प्रकाशितत्वादत्रैवानैकान्तिकत्वात्, यावज्जीवमहं मौनीतिवत् स्ववचनविरुद्धत्वाच्च।

यत् पुनर्ज्ञानस्य नीलाद्याकारविधुरत्वे निराकारस्य न प्रत्यक्षत्वं अप्रत्यक्षस्य स्वरूपमेव न सिध्यतीत्युक्तं, तदतिस्थवीयः; ज्ञानस्य नीलाद्याकारवैधुर्येऽपि स्वाकारेण प्रत्यक्षत्वाविरोधात्, अप्रत्यक्षत्वेऽपि तत्सिद्धेरुपपादयिष्यमाणत्वाच्च।

इति विज्ञानवादो नामाष्टाविंशवादः
समाप्तः।

---

१. भिन्नत्वेन नील. ख २. बाधकाभावे. फ. ३. बाधविषय. ख. ग. ङ.
४. मानोत्थाने सति. क ५. वं मौनी. ङ. ६. स्वाकार. ग.

[ स्वयंप्रकाशवादः । ]

किञ्च ज्ञानस्य प्रत्यक्षत्वं स्वप्रकाशत्वात् मानसत्वाद्वा ? न तावत् स्वप्रकाशत्वं सम्भवति, यथा पाकः पाक्यस्यौदनस्यैव[1] नात्मनः, छेदो वा छेद्यस्य वृक्षस्यैव नात्मनः तथा प्रकाशोऽपि प्रकाश्यस्य घटादेरेव नात्मनः; स्वात्मनि क्रियाविरोधात् ।

अथ यथा घटादिभिः स्वज्ञानायापेक्षितस्यापि दीपस्य स्वज्ञाने दीपान्तरानपेक्षणेऽपि न स्वात्मनि वृत्तिविरोधः तथा घटादिभिः स्वप्रति-[2]पद्व्यवहारा[3]यापेक्षितस्या[4]पि ज्ञानस्य स्वप्रतिपद्व्यवहारे[5] ज्ञानान्तरानपेक्षणेऽपि न स्वात्मनि वृत्तिविरोधः। तथा च प्रयोगः—ज्ञानं स्वगतव्यवहाररूपे कार्ये सजातीयपरानपेक्षं तथाभूतपरगतकार्यकारित्वात्, यद्यथाभूतं परगतं कार्यं करोति तत् स्वगततथाभूतकार्यजननार्थं सजातीयपरानपेक्षं यथा दीपो दीपान्तरानपेक्ष इति । तदिदमसारम्; अर्थान्तरानुमापकानुमितलिङ्गे व्यभिचारात् । लिङ्गत्वेन सजातीयत्वेऽपि तयोरवान्तरविशेषादनत्यन्तसजातीयत्वं अत्यन्तसजातीयानपेक्षत्वञ्च[8] साध्यमिति चेत्, तर्ह्यर्थविषय[9]ज्ञानस्य न ज्ञानविषयेण ज्ञानेना[10]त्यन्तसजातीयत्वं[11] किन्त्वर्थविषयेणैव, तदनपेक्षत्वञ्च ज्ञानस्य स्वव्यवहारे सिद्धमिति सिद्धसाध्यत्वम् । एतेनैव[12] तत्साध्य[13]प्रतिबद्धा वस्तुत्वादिहेतवो निरस्ताः ।

---

१. स्यौदनस्यैव. ख. ग. ङ. २. व्यप. ग. ङ. ३. रापेक्षितस्यापि. घ. ४. स्व विज्ञानस्य. ख. ङ. ५. व्यप ग. ङ. ६. स्वजातीय. घ. ७. नुमित-लिङ्गे. ग. ङ नुमिते लिङ्गव्यभिचारात्. घ. ८ साध्य. घ. ङ. ९. स्व ज्ञानविष-येण. ग. १०. नेन चात्यन्त. घ. ११. त्वं किन्त्वर्थ. घ. १२. नैतत्साध्य. ङ. १३. बन्धा. घ. बन्धवस्तु. ङ.

किञ्च यावन्तः स्वप्रकाशत्वसाधनाय हेतवस्तेषां सर्वेषामेव ज्ञानान्तरकर्मतयैव व्यवहार्यत्वेन व्याप्तत्वाद्विरुद्धाव्यभिचारित्वं सुप्रतिपादम्। यत्तु ज्ञानस्य स्वोत्पत्त्यनन्तरं स्वविषयसन्देहाभावात् स्वयंप्रकाशत्वसमर्थनं, तदयुक्तम्; असन्दिग्धस्य प्रकाशमानत्वनियमाभावात्। न हि स्वरूपत एवाज्ञातेषु[1] विषयेषु सन्देहस्याभावाच्च प्रकाशमानत्वमस्ति[2]। घटज्ञानसन्देहे घटव्यवहारोऽपि भवतीति लोकविरुद्धमित्यप्यत एव दुर्बोधम्; अनवगतस्वरूपघटज्ञानगोचरत्वेन[3] सन्देहस्यैवानभ्युपगमात्। न च घटज्ञानानवगतौ[4] न घटव्यवहारः; तस्यानवगतस्यापि स्वोत्पत्तिमात्रेण घटव्यवहारहेतुत्वात्। योऽपि कश्चित् ज्ञानोत्पत्त्यनन्तरं झटिति तद्विषयो व्यवहारः सोऽपि झटिति[5] प्रमाणान्तरेण तदवगमनिबन्धन इति न ततोऽपि स्वप्रकाशत्वसिद्धिः।

यत्पुनर्धीकर्मत्वस्य जडत्वव्याप्तेः व्यापकभूतजडत्वनिवृत्तौ धीकर्मत्वस्यापि निवृत्तिरिति, तन्मन्दम्; ज्ञानस्यापि धीकर्मत्वदर्शनात्। परज्ञानं[6] ह्यनुमेयतया धीकर्मैव। न चैतावता जडाजडविभागाभावः; यदधीनं ज्ञानस्यार्थस्य वा व्यवहारानुगुणत्वं[7] तदजडं, यदधीनं तु न कस्यचिदपि तज्जडमिति विभगात्। ननु कार्यं कारणं कल्पयदर्थेन विनानुपपन्नं तदेव कल्पयति, ज्ञानगतश्च व्यवहारः स्वेनैवोपपन्न इति न ज्ञानान्तरमपेक्षते।

---

१. एव ज्ञातेषु विषयेषु. ग. ङ. २. स्वसमर्थनत्वमस्ति. ग. ३. ज्ञानानवगतौ न घटव्यवहारः तस्यानवगतस्यापि. क. ४ तौ घटव्यवहारः. ग. ५. ति ततोऽपि. ग. ६ ज्ञानाना ह्यनुमेयतया. ङ. ७. हारगुणत्वं. ङ

मैवम्; नहि कार्यं येन[1] केनाप्युपपन्नम्, तथा सति सर्वस्मिन् कार्ये सर्व[2]स्यैवोपपादकत्वप्रसङ्गात्।

प्रमाणविरुद्ध[3]मेवोपपादकं, सर्वञ्च सर्वत्र कार्ये प्रमाणविरुद्धमिति नोपपादकत्वमिति चेत्, तर्ह्यत्रापि ज्ञानस्य ज्ञानान्तरानपेक्षस्य व्यवहार्यत्वं प्रमाणविरुद्धम्। प्रमाणञ्च ज्ञानं स्वप्रतिबद्ध[4]व्यवहारे ज्ञानान्तरापेक्षं[5] व्यवह्रियमाणत्वात् घटवत्, संवेदनं[6] स्वप्रकाशं न भवति वस्तुत्वात् यदुक्तसाधनं तदुक्तसाध्यं यथा घटः, विप्रतिपन्नो व्यवहारः स्वविषयसंवेदनापेक्षः व्यवहारत्वात् यो यो व्यवहारः स[7] स्वविषयसंवेदनापेक्षः[8] यथ-सम्प्रतिपन्नो व्यवहारः, संवेदनव्यवहारः संवेदनसंवेदननिबन्धनः[9] संवेदनव्यवहारत्वात् परगतसंवेदनव्यवहारवत्[10] इत्यादि। न चेदं जडत्वमयुक्तम्[11]; अजडस्यापि परगतज्ञानस्य स्वव्यवहारे ज्ञानान्तरापेक्षत्वात्।

एतेन ज्ञानज्ञात्रोरप्रकाशमानयोः स्वपरवेद्ययोरनतिशय इत्यपास्तम्; अप्रकाशमानयोरपि तयोर्यत्रैव यद्विषयं ज्ञानं समवैति तत्रैव तद्विषयो व्यवहारो नापरत्रेति विवेकात्। न चार्थव्यवहारस्य तथोपपत्तौ सत्यामप्यहं जानामीति ज्ञातृज्ञानगोचरव्यवहारस्य[12] तयोरप्रकाशमानयो-

---

१. न विनाप्युपपन्नम्. छ. २. र्वस्याप्युप. क. ३. रुद्धोपपादकं. ग. ४. बन्ध. ग, ङ. ५. ज्ञानापेक्षं ख. ग. ङ. ६. नं न प्रकाशनं न भवति. ख, ङ. ७. स स्व. घ. ८. रः, विषयसंवेदन. क. ९. ननिबन्धनः ख, ग, ङ. १०. हारवत्। न चेद. ग. ११. त्वमयुक्तं. ख. १२. रस्य तयोरप्रकाश. ग.

[1]रनुपपत्तेरन्यस्य च नियतस्य तत्प्रकाशहेतोरभावात् सर्वार्थवित्सु वेत्तृतया वित्ततया च तयोरपि प्रकाशोऽभ्युपगमनीय इति वाच्यम्; सर्वार्थवित्स्वहं जानामीति व्यवहारस्यासिद्धेः, यत्रापि क्वचित् सिद्धिः तत्रापि प्रमाणान्तरेणैव तयोः प्रकाशनात्।

नन्वात्मनो ज्ञानकर्मत्वं विरुद्धम्; एकस्य कर्मकर्तृत्वानुपपत्तेः। न [2]चात्मन्यवेऽपि ज्ञानजन्य[3]फल[4]भागित्वेन कर्मत्वं परसमवेतक्रियाफलभागित्वात् कर्मत्वस्य। तदयुक्तम्। तथा हि—अनेन वचनविन्यासेन किमात्मनो ज्ञानजन्यफलभागित्वं निषिध्यते न वा? यदि निषिध्यते तर्हि कथम[5]स्य कर्तृत्वेनापि प्रागविद्यमानप्रकाशसम्बन्धित्वं स्यात्? अथ ज्ञानस्यैव प्रकाशत्वात् न ज्ञानाधीनमात्मनः प्रकाशफलसम्बन्धित्वं नाम किञ्चित्, तर्ह्यर्थस्यापि तेनैव न्यायेन प्रकाशफलसम्बन्धाभावात् परसमवेतक्रियाफलभागितालक्षणं कर्मत्वं भज्येत। अथार्थस्य व्यवहारः तद्योग्यत्वं वा ज्ञानजन्यं फलं, तर्ह्यात्मन्यपि तदुभयमस्तीति कथं ज्ञानजन्यफलभागित्वं निषिध्यते? न निषिध्यत इति [6]चेत्तर्हि सुखादिवत् मनःसन्निकर्षजज्ञानजन्यफलभागित्वात् तल्लक्षणं मानसत्व[7]मपि प्राप्तम्। तथा [8]कर्मसंज्ञाकर्मविभक्ती विरुद्धे इति चेन्मैवं; शब्दसाधुत्वस्य प्रयोगगम्यत्वात्, प्रयोगस्य चा"त्मानं जानी[9]हि" "आत्मा ज्ञातव्य" इत्यादेर्लोकवेदयोर्दृष्टत्वात्। न चैवं गन्तुर्गन्तव्येन सह समानफल-

---

१. रनुपपत्तेरन्यस्य. [illegible] ग. २. चास्मिन्मतेऽपि. घ. ३ न्य फल. ग. ४. त्वयोगित्वेन घ. ५. मन्यस्य. ङ ६. चेन्मैवम्; शब्द. क. ७. त्वमिति प्राप्तम्. ग. ८. या सति कर्म घ. ९. नीहीति क.

प्राप्तावपि[1] कर्मसंज्ञाकर्मविभक्ती दृष्टे इति न तत्र तयोः साधुत्वम्।[2] किञ्च यदि सर्वत्रार्थवित्तिषु कर्तृतयैवात्मनः सिद्धिः तर्हि योऽहं प्राग्दुःखमन्वभूवं सोऽहमिदानीं सुखमनुभवामीति प्रत्यभिज्ञायां[3] तत्कालविशिष्टस्य कर्तुरवभासो भ्रान्तः स्यात्, तत्कालविशिष्टस्य सम्प्रतितने प्रत्यभिज्ञाने कर्तृत्वानुपपत्तेः। एतेनात्मनो ग्राहकत्वेन सिद्ध्यनुपपत्तेः मानसत्वे च स्वात्मनि वृत्तिविरोधात् परिशेषसिद्धं स्वयंप्रकाशत्वमित्यपास्तम्; गन्तुरिव ज्ञातुरपि स्वसमवायिक्रियाफलभागित्वेऽप्यविरोधयोरुपपादितत्वात्। कथञ्च स्वप्रकाशत्वे सुषुप्तावपि प्रकाशो न स्यात्? अस्त्येव तत्रापि सुखरूपस्यात्मनः प्रकाशः; सुखमहमस्वाप्समिति प्रतिसन्धानादिति चेत् न; प्रबुद्धस्य कामिनीसम्भोगादिविषयजसुखलवलाभाभावेन निर्वेदस्य दर्शनात्। न हि निरतिशयसुखानुभववेलायां स्वल्पसुखस्याननुभवः खेदकरः। सुषुप्तावनुभूतमपि तत्सुखं विस्मृतमिति चेत्तर्हि प्रतिसन्धानस्याभावात् सुषुप्तावनुभवस्य कल्पकमेव न स्यात्। तेन स्वार्थ्यपरत्वे सत्यस्मरणेन सुषुप्तौ दुःखाभावमात्रानोऽभ्युपगच्छतः तत्रैव गुणवृत्त्या सुखित्वव्यवहार इति स्वीकरणीयम्। तदनुगुणत्वेन चाचेतयमेनेयन्तं कालमस्वाप्समिति सुषुप्तावबोधव्यवहारोऽपि दृष्टः। किञ्चात्मा ज्ञानान्तराधीनप्रकाशः व्यवहार्यत्वात् घटवत्। न च व्यवहार्यत्वमसिद्धम्; आत्मा व्यवहार्यो न भवतीत्यस्यैव व्यवहारस्य तद्गोचरत्वेन स्ववचनविरुद्धत्वात्।

---

१. प्राप्तिविह कर्मसंज्ञा क. ख. २. त्वम्। हि यदि ग. त्वम्। हि यदि सर्वत्रार्थ. ङ. ३. प्रतिज्ञायां. ख. ङ. ४. च प्रकाशत्वे. ङ. ५. न, बुद्धस्य. ग. ६. गदुःखानुभव. ङ. ७. चाचेतयमेन. घ. ८. त्वा° न व्यवहार्यत्वाद. क.

"अत्रायं पुरुषः स्वयं ज्योतिः" "आत्मैवास्य ज्योति"रित्यादिवेदवचनात्[1] स्वप्रकाशत्वमिति चेन्न, पूर्वोक्तप्रमाणविरुद्धार्थत्वात्[2] "स मानसीन आत्मा जनाना"मिति श्रुत्यन्तरविरोधाच्च । तस्मादात्मा मानसप्रत्यक्षवेदनीय एव ॥

इति स्वयंप्रकाशवादो नाम एकोनत्रिंशवादः
समाप्तः ।

[ज्ञानप्रत्यक्षत्ववादः ।]

ननु तर्ह्यात्मवत् ज्ञानमपि मानसमस्तु । नैवम्, तथा[3] हि—आत्मगुणस्य सुखादेः सत्त्वमनुबुभुत्सितावश्यग्रहेण व्याप्तं दृष्टं, तदिह व्यापकभूता[5]बुभुत्सितावश्यग्रहणं निवर्तमानं स्वव्याप्यभूतं प्रत्यक्षात्मगुणसद्भावं निवर्तयति । यानि पुनर्ज्ञानं प्रत्यक्षं क्षणिकात्मविशेषगुणत्वात् सुखादिवदि त्यादीनि प्रत्यक्षसाधनानि तानि स[6]कलसपक्षानुगताबुभुत्सितावश्यग्रहण लक्षणविशेषविरोधादाभासान्येव । अन्यथा धर्माधर्मौ प्रत्यक्षौ आत्मविशेष गुणत्वात् सुखादिवदित्यत्र का परिहारः ? न ह्यसिद्ध्यादिदूषणमत्र[7] क्रमते, किन्तु प्रागुक्त एव विशेषः सकलदृष्टान्तानुगतः पक्षे प्रमाणान्तरेण बाध्यमानो व्याप्तिं विघटयन्ननुमानोत्पत्तिं विहन्तीत्यभ्युपगमनीयम् ।

---

१ वेदान्तवचनात् [illegible] २ रुद्धत्वात्, ख ङ. ३ याप्यात्म ख ङ था हि प्रत्यक्षात्म घ ४ सत्त्वमनुबुभुत्सितावश्य ख ग मनुबुभुत्सितावश्यग्रहणेन क ङ ५ वश्यग्रहणलक्षणविशेषविरोधादाभासान्येव । अन्यथा० क वश्यग्रहणनिवर्तमान ग ङ ६ लसपक्षानुगता० ख ङ ७. न क्रमते ग.

तस्मात् ज्ञान[1]स्यानु[2]बुभुत्सितावश्य[3]ग्रहणनिवृत्तौ प्रत्यक्षत्वनिवृत्तिरेव। नन्वा-
त्मवदनुबुभुत्सितं कदाचिदेव गृह्यतामनुबुभुत्सितमेव तु सुखादिवदवश्यं
गृह्यताम्। नैवम्; अनुबुभुत्सितावश्य[4]ग्रहणे ज्ञानविषयज्ञानानुपरम-
प्रसङ्गात्। सर्वस्यैव ज्ञानस्य ज्ञानान्तरेणावश्यं गृहीत्वैवोत्पादनात्, तस्मान्न
मानमप्रत्यक्षत्वमपि ज्ञानस्य प्रामाणिकम्।

इति ज्ञानप्रत्यक्षतानिरासवादो नाम त्रितो वादः
परिसमाप्तः।

[ प्राकट्यवादः। ]

कथं तर्हि ज्ञानसिद्धिः? श्रूयताम्—यथा गन्तव्यगतायाः[5] प्राप्ते-
र्गन्तारं प्रत्यसाधारण्यं तदेकसमवायिक्रियाजन्यत्वमन्तरेणानुपपद्यमानं
तथा घटादिगतस्य प्राकट्यफलस्यापि कञ्चिदेव प्रत्यसाधारण्यं तदेक-
समवायिक्रियाजन्यत्वमन्तरेणानुपपद्यमानं तदेकसमवायिनीं क्रियां कल्प-
यति, सैव च ज्ञानम्। न च प्राकट्यस्य कञ्चिदेव प्रत्यसाधारण्यं दुरवगमम्;
प्राकट्यमवगच्छतः तदनन्तरभावित्वेन तद्धेतुकं व्यवहारं स्वस्मिन्नेव[6] पश्यतः
स्वं प्रत्यसाधारण्यस्य सुज्ञानत्वात्। ततश्चा[7]विशेषेण तस्य सर्वत्रापि
साहद्स्वभावस्यनियमात्। न चात्ममनस्सन्निकर्षादेवो[8]पपत्तेर्न ज्ञानसिद्धिः;
तस्य तदेकसमवायित्वाभावेनोपपादकत्वानुपपत्तेः।

---

१. ज्ञानस्यानवबुभुत्सितावश्यग्रहण- ख. ज्ञानस्य बुभुत्सितावश्यग्रहण- ग. २. बुभुत्सित-प्रत्यक्षत्वनिवृत्तिरेव. घ. ३. स्वग्रहण- क. ४ स्वग्रहणे. क. ५. या प्राप्ते. ग. ६. स्वस्मिन्नेव. ग. ७. चापि विशेषेण तस्य. ग. ८. वोपपत्तेर्न. ग.

ननु कल्पकमेवासिद्धम्, अर्थगतस्य प्राकट्यफलस्यानभ्युपगमात्। तदिदमनुपपन्नम्। तथाहि—सन्ति तावद्घटः प्रकाशते घटो[1] भाति घटप्रकाश[2] इत्यादयो व्यवहारा लौकिकपरीक्षकाणाम्। न चैते भ्रान्तिमूलाः; बाधकाभावात्। अबाधितानामपि[3] तन्मूलत्वे सर्वस्यापि व्यवहारस्य तन्मूलत्वप्रसङ्गात्। अतो दृढप्रतिपन्नत्वाद्दृढव्यवहारमूलत्वेन प्रकाशविशिष्टोऽर्थः कल्पनीयः, स च विशेषणभूतः प्रकाशपदार्थः[4] प्राकट्यम्। न च घटस्तद्गतं वा द्रव्यत्वसत्त्वादिकमनागन्तुकमागन्तुकं चापि[5] प्रकाशपदार्थः; विरोधात्, पर्यायत्वेन[6] तद्वाचकैस्सह प्रयोगानुपपत्तेश्च। ननु ज्ञानमेवागन्तुकं प्रकाशशब्दार्थोऽस्तु[7]। तन्न; ज्ञानं ह्यात्मसमवेतमात्मसमानाधिकरणतयैव[8] भासते घटसमानाधिकरणश्च प्रकाशपदार्थः कथं ज्ञानमस्तु, अन्यसमवेतस्यान्यसमानाधिकरणत्वेऽतिप्रसङ्गात्। किञ्च ज्ञानप्रकाशपदयोरैकार्थ्ये[9] घटो भातीतिवत् घटो जानातीति वा घटं जानातीतिवत्[10] घटं भातीति वा जानातिपर्यायाणां भातिपर्यायाणाञ्च परस्परसाङ्कर्येण प्रयोगः स्यात्। न चैवमस्ति। अतो न भानप्रकाशपदार्थो[11] ज्ञानपदार्थः, अतिरिक्त एव।

ननु यथैकं स्पन्दमभिदधतोश्चलतिगच्छत्योश्चलतेरकर्मकत्वं गच्छतेश्च सकर्मकत्वं, तथैकमेव ज्ञानमभिदधतोर्जानातिभात्योर्भातेरकर्मकत्वं जानातेश्च सकर्मकत्वमित्यपि प्रयोगसाङ्कर्याभावस्योपपत्तेः कथं जानाते-

---

१. टो भवति घटः प्रकाश° घ. २. टः प्रकाशते. ख. ङ. ३. अपि बाधितानामपि ट. ४. शभूत. प्राकट्यम् . घ. ५. यत्तं वाचि प्रकाश ग. ६. वाचि. क. घ. ७. स्तु । न ज्ञानं. ग ८. णतयैव. घ. ९. कार्थ्ये. घ. १०. भातीति. घ. ११. भासप्रकाश. घ.

भातिभासत्यादिपदार्थोत्तीर्णार्थत्वम्? इत्थम् —धातोरकर्मकत्वे[1] जानात्येकार्थत्वे ज्ञातृ[2]समानाधिकरणार्थत्वप्रसङ्गात्। न हि चलतिरकर्मकोऽपि गन्तृसमानाधिकरणत्वमुन्मुच्य तदितरगन्तव्यादिसमानाधिकरणतां भजते, तथा सत्येकसमवेतार्थाभिधायिनस्तदन्यसमानाधिकरणत्वेनाभिधाने भ्रान्तत्वप्रसङ्गात्। अतो ज्ञातृसमानाधिकरणजानातिपदार्थाद् घटसमानाधिकरणभातिभासत्यादिपदार्थो व्यतिरिक्त इति सिद्धम्। न च घटगतं किञ्चिदनागन्तुकं तदर्थ इति प्रागेवोक्तम्। अस्तु तर्ह्यागन्तुको[3] व्यवहारस्तदर्थ इति चेन्न; तस्य व्यवहर्तृनिष्ठत्वेन पूर्ववदसामानाधिकरण्यप्रसङ्गात्। व्यवहारविषयत्वं प्रकाशपदार्थ इति चेन्नैवम्; अमीमांसकैरसदाश्रयस्य धर्मस्यानभ्युपगतेः भूतभविष्यतोर्व्यवहारविषयत्वं नास्तीति तयोरप्रकाशमानत्वप्रसङ्गात्। भवतु तर्हि मीमांसकानां तदेव प्रकाशमानत्व[4]मिति चेन्न; निर्विकल्पकोपेक्षणीयोर्व्यवहारस्यैवाभावात्। न चोपेक्षायामर्थो न प्रकाशते; प्रकाशमान एवोपेक्ष्यते, घटो नोपात्त इत्युत्तरपक्षे[5]स्मृत्य व्यवहारात्। न चोपेक्षैव तत्र व्यवहारः। सा हि हानादिप्रागभावो वस्तुन्यनुपयोगिताज्ञानं वा? पूर्वस्मिन्न[6]नादित्वादागन्तुकवाचिव्यवहारप्रकाशपदयोरर्थः। उत्तरस्मिन् ज्ञानस्वरूपत्वात्तस्य किन्तद्विषयत्वमर्थगतं[7] प्राकट्यादृते भवेत्? एतेन व्यवहारयोग्यत्वं प्रकाशपदार्थ इत्यपास्तम्; तस्य यावद्भावभावित्वेनानागन्तुकत्वे तावदागन्तुकवाचिप्रकाशपदार्थत्वानुपपत्तेः, आगन्तुकत्वे वा नामान्तरेण प्राकट्याङ्गीकरणप्रसङ्गात्।

---

१. त्वेन जानात्येकार्थत्वे. घ  २. णत्वप्रसङ्गात्. ग. घ.  ३. त। अस्तु तर्हि. घ.  ४. मानत्वमिति. ग.  ५. त्युक्त्य. ग.  ६. न्नरूपत्वात्तस्य. ख. घ. ङ.  ७. तं किं प्राकट्यादृते. ग.

नन्वेवं धातेर्घटसामानाधिकरण्येन घटगतार्थत्वे रोचतेरपि मोदक-सामानाधिकरण्येन मोदकगतार्थत्वं भवेत् । सत्यं, किन्तु[1] रुच्युत्पा-दानुगुणो मोदकगतः प्राकट्यभेद एव रोचतेः पदार्थः सम्भवतीति न तदतिरिक्तमर्थान्तरं सिद्ध्येत् । अतो यद्गतं ज्ञानं जनयति तत् किमपि प्रकाशादिपदवेदनीयमर्थगतमर्थान्तरमभ्युपगमनीयम् । तच्च प्राकट्य-मित्युच्यते । विषयत्वमर्थस्य तदाश्रयत्वमेव । तदुत्पत्तिप्रतिपत्त्यनुयोगास्त्वेवं समाधेयाः । प्रत्यक्षेषु तावत् पूर्वज्ञानजनितमुत्तरं ज्ञानं गृह्णाति तत्र जनकं ज्ञानं प्राकट्यं जनयित्वैव संस्कारं जनयति, प्रकटविषयत्वात् संस्कारस्य । प्राकट्यञ्च संयुक्तनदात्मतयेन्द्रियसम्बद्धमेव जायत इति प्राकट्यविषयं विज्ञानं संस्कारश्च युगपदुभयं जायते, ततश्च जनकज्ञाननिवृत्तौ संख्याया इव प्राकट्यस्यापि निवृत्तिः[2]।

न च ज्ञानस्य द्वित्रिक्षणावस्थाने बुद्धेर्विरम्यव्यापाराभावेन[3] प्रथमं वर्तमानक्षणसत्त्वमवभास्य पश्चाद् द्वितीयादिक्षणस्यार्थावभासस्यानुपपत्तेः प्रथमक्षण एव द्वितीयादिक्षणसत्त्वमप्यवभास्यम्[4]। तथा च तस्य वर्तमान-त्वेनावभासे भ्रान्तत्वापत्तेर्भविष्यत्त्वेनैवावभास इति प्रतिभासवैषम्यं स्यादिति वाच्यम्, एकस्मिन्ननवयवे काले भेदस्यौपाधिकत्वेनोपा-ध्यवभासमन्तरेणावभासानुपपत्तेरन्त्र च ज्ञाने महासम्भवता तादृशाना-मुपाधीनामप्रतिभासात्[5]।

---

१ तु । किन्तु ग २ त्ति । स च ज्ञानस्य ग ङ. ३ क्षणस्याव-भासस्यानुपपत्त ङ. ४ प्यवभास्य. ङ. ५ दस्योपाधि. ख

किञ्च ज्ञानं स्वोत्पत्तिक्षणानन्तरक्षणे प्रतिभासापरपर्यायं प्राकट्यमुपजनय्य तदनन्तरक्षणे संस्कारमुपजनयत् प्रथमतृतीययोः[1] क्षणयोः प्रतिभासान्तरं नोपजनयतीति कुतः प्रतिभास[2]वैषम्यचोद्यम्?

कथन्तर्हि भूतभविष्यतोः [3]प्राकट्योत्पत्तिः? सद्भावादेवेति ब्रूमः। न च सद्भावैव तत्र नास्ति; तिस्र आहुतयो हुताः षडपूपा भक्षिता इत्यादि-व्यवहारदर्शनात्। न चासौ भ्रान्तः; बाधकाभावात्। न च गौणः प्रयोगः; तस्यापि साधारणगुणयोगमूलत्वात्। तदङ्गीकारे वा वरं संख्याप्रयोगस्यैव स्वीकरणम्।

नन्वप्रत्यक्षेषु कथं प्राकट्यावगमः? उच्यते—प्रत्यक्षेषु शब्दप्रयोगादि-[4]व्यवहारस्य सुखदुःखयोरिच्छाद्वेषयोश्च तत्तद्विषयप्राकट्यानन्तरमेव दर्शनात् प्राकट्यहेतुत्वं निश्चीयते, ततोऽप्रत्यक्षेष्वपि तेषाम[5]न्यतमेन प्राकट्यमनुमेयम्, अनुमिताच्च ततो ज्ञानमिति। अतः सिद्धं ज्ञानस्याप्रत्यक्षत्वं अनाकारत्वञ्च। तदेवं बाह्यार्थप्रसाधनेन योगाचारं निराकुर्वद्भिर्ज्ञेयाभावात् ज्ञानाभावं वदन् माध्यमिकोऽपि परास्तो वेदितव्यः।

ननु ज्ञानस्य कल्प्यत्वे द्रव्यादिचतुष्टयस्य प्रत्यक्षत्वमेवेति प्रतिज्ञा विरुध्यते। नैवम्, ईदृशप्रतिज्ञाया अभावात्। इतराभावव्युदसनेन द्रव्यादिचतुष्टयस्यैव प्रत्यक्षत्वमित्येतावन्मात्रप्रतिज्ञानात्। कथन्तर्हि द्रव्यादिचतुष्टयान्त[6]र्भूतस्य प्राकट्यस्य प्रत्यक्षत्वमिति चेन्न, कर्मव्यति-

---

१. योः प्रति घ.  २ म्य चोद्यम्? क.  ३. कट्यापत्ति- ख.
४ स्य तत्तद्विषय- घ.  ५ न्यतरेण- ख ग. क.  ६. न्तर्गतस्य- क, ग.

रिक्तत्वान्तरसाधान्यवदनुपादानं गुण इति[1] लक्षणेन तस्यापि गुणत्वात् ॥

इति प्राकट्यवादो नामैकत्रिंश
समाप्तः ।

[ योगिप्रत्यक्षनिरासवादः । ]

नन्विन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षमिति लक्षणं भावनाप्रकर्षपर्यन्तजे योगिप्रत्यक्षे च नास्तीत्यव्यापकम् । तदयुक्तम्; भावनाप्रकर्षपर्यन्तजस्य स्मृतित्वेनाप्रमाणत्वात्, प्रमाणविशेषत्वाच्च प्रत्यक्षस्य । योगिप्रत्यक्षं त्वप्रामाणिकमेव । कथमप्रामाणिकं ? भूतभविष्यती कस्यचित् प्रत्यक्षे प्रमेयत्वाद् घटवदिति प्रमाणे जीवतीति चेन्न; प्रत्यक्षस्यासूक्ष्माव्यवहितविद्यमानार्थत्वव्याप्तेरनेवंविधविषयप्रत्यक्षत्वानुमानस्य[2] विशेषविरुद्धत्वात् । तथात्मत्वं भूतभविष्यत्प्रत्यक्षयित्रात्मव्यक्तिसमवेतं[3] न भवति जातित्वाद् गोत्वादिवदित्यादिना सप्रतिसाधनत्वाच्चेति सर्वमनाविलम् ॥

इति चिदानन्दपण्डितकृतौ तत्त्वाविर्भावे
प्रमाणपरीक्षायां प्रत्यक्षपरीक्षा
समाप्ता ।

१. ति गुणलक्षणेन घ. २. ता अनुमानस्य. ग. ३. व्यतिरिक्तसमवेतं. घ.

## ॥ अथानुमानम् ॥

[अनुमानपरीक्षावादः।]

तत्र—

> अनुमासन्निकृष्टेऽर्थे व्याप्यदर्शनजा मतिः।
> व्याप्तिस्स्वभावात्साध्येन नियतस्साधनान्वयः॥

व्याप्यदर्शनजन्मासन्निकृष्टार्थविषयं ज्ञानमनुमानम्। का पुनर्व्याप्तिः? साध्येन साधनस्य निरुपाधिकोऽन्वयः। तञ्च साधनस्य निरुपाधिकं साध्यान्वयं भूयोदर्शनजनितसंस्कारसमुपजातसाध्यान्वयस्मरणसहकृतमक्षमेवावधारयति। न केवलैर्भूयोभिर्दर्शनैस्तादृशमवधारणं सिध्यतीति प्रमाणोत्पत्त्यनुगुणस्तर्कोऽपि तत्र सहकारी। कथन्तर्हि देशान्तरकालान्तरयोर्व्यभिचाराशङ्कानिरासः? परिदृश्यमानशङ्कितत्तदुपाधिनिरासेन निरुपाधिकत्वावधारणात्। नन्वदृश्योपाधिशङ्काया विद्यमानत्वात् कथन्निरुपाधिकत्वावधारणम्? मैवम्; शङ्काया दृष्टसलक्षणविषयाया अदृश्योपाधिविषयत्वेनानुत्थानात्। उत्थाने वा सर्वत्र प्रसङ्गात्। किञ्चैवमनुमानप्रामाण्यमदृश्योपाधिशङ्कयापवदमानस्य चार्वाकस्यादृश्योपाधीनामनवगतावनवगतिमूलायाश्शङ्काया अभावादनुमानोदयः। अवगतौ वानुमानादन्यतस्तदनवगम इति सुतरामनुमानोदय इत्युभयतः स्पाशा

---

१. न्नाविद्योपाधि, ग. २. ने सर्वत्र. ग. ङ. ३. ङ्कयापवद. घ. ङ.
४. पलगमानस्य. घ.

रज्जुः स्यात्। अतश्शङ्कितोपाध्यवगमे सति यस्य येन सह यादृशः सम्बन्धो दृष्टान्तधर्मिषु दृष्टः तस्य तेन सह तादृशं सम्बन्धं भूयोदर्शनजनितसंस्कारसहकृतमक्षमेव निरुपाधिकत्वेन निश्चिनोतीति सिद्धा व्याप्तिः। एतेन सकृद्दर्शनगम्यत्वं व्याप्तेरपास्तम्; प्रथमदर्शन एव शङ्कितोपाध्यनवगमेन निरुपाधिकान्वयस्यानवगतेः, अवगतौ वा द्वितीयादिदर्शन एवानुमानप्रसङ्गात्। न च निरुपाधिकत्वादन्यत्[1] स्वाभाविकत्वम्, येन निरुपाधिकत्वस्य भूयोदर्शनावगम्यत्वेऽपि सकृद्दर्शनादेव स्वाभाविकत्वावगम इत्युच्येत[2]। अतः प्रथमदर्शने धूमं प्रति वह्न्यन्वयस्य सोपाधिकत्वानिश्चयेऽप्यनौपाधिकत्वमप्यनिश्चितमिति[3][4] भूयोदर्शनगम्यैव व्याप्तिः।

ये तु तादात्म्यतदुत्पत्तिभ्यां व्याप्तिमाहुः तेषां शिंशपात्मना वृक्षेण शिंशपानुमानमपि स्यात्। तथा कार्यकारणभावस्य कार्यकारणोभयनिष्ठत्वात् कारणात् कार्यानुमानञ्च स्यात्। न च कार्यकारणभावस्योभयनिष्ठत्वेऽपि कार्यमेवानुमापकमिति वाच्यम्; चरमसामग्रीनिवेशिनः कारणादपि कार्यानुमानस्य दृष्टत्वात्। न च तत् कार्यस्य कार्यमात्मा वा। किञ्च लिङ्गलिङ्गिनोर्भेदोपगतौ[6] न तादात्म्यनिबन्धना व्याप्तिः। अभेदोपगतौ वाऽभेदाधिष्ठाना व्याप्तिः। सिद्धसाध्यत्वं विरुद्धधर्माध्यासश्च स्याताम्। भेदाभेदयोरन्यतरस्य कल्पनानिर्मितत्वादुभयचिर्वहिष्यतीति[7] चेन्मैवम्; कल्पनामात्रनिर्मितस्य प्रमाणाङ्गत्वानुपपत्तेः, उपपत्तौ वा

१. धिकादन्यत् स्वाभाविकम्. घ. २. त्युच्यते. ग ङ. ३. मन्यानिश्चित. ग. ङ. ४. तमपि. ग घ. ५. मू, परम०. क घ. ६ भेदावगतौ. ग. ७ नादनिर्मि०. ग.

प्रमाणतदाभाससङ्करप्रसङ्गात्। न च तादात्म्यतदुत्पत्तिभ्यामन्तरेण व्याप्तिरेव दुरवगमा इति वाच्यम्; प्रागुक्तेन न्यायेन निरुपाधिकत्वावगमादेव व्याप्तिसिद्धेः। एवञ्च व्याप्त्यसिद्धेस्तुल्यत्वान्निश्चितोपाधेरिव शङ्कितोपाधेरपि हेत्वाभासत्वमनुसन्धेयम्। उपाधिश्च सर्वत्र[1] साधनाव्यापकत्वे सति साध्यसमव्याप्तिरेव।

ननु न विशेषोऽनुमेयः; तस्याननुगतत्वेनाव्याप्तत्वात्। न सामान्यम्; तस्यान्यतः प्राप्तत्वेन सिद्धसाध्यत्वात्। तदयुक्तं; सामान्ययोर्विशेषोपधानेनैव[2] व्याप्तेः। अन्यथा धूमत्वस्य वह्नित्वे स्वतःसंबद्धे[3] वह्नित्वप्रसङ्गात्। अतो विशेषस्य द्वारत्वात्तस्य च नियतस्य निरूपणानुपपत्तेरनियततज्जातीयविशेषोपहितयोरेव सामान्ययोर्व्याप्तिसिद्धौ पक्षधर्मतया प्राप्तं[4] साधनसामान्यमुपहितानियतविशेषसाध्यसामान्यमनुमापयति। अत एव सकलविशेषविरोधे[5] मूलविरोधात्[6] सामान्यस्यापि निरोध इति विशेषविरोधोऽ[7]नुमानदूषणानामग्रणीर्गण्यते।

स्यादेतत्—तथापि विशेषस्यानियतरूपेण व्याप्तिवेलायामेव प्राप्तत्वात् तदन्यस्य चानुमेयस्याभावात् सिद्धसाध्यत्वं तदवस्थमिति[8]। तन्न। देशकालविशेषस्य प्रागप्राप्तत्वात्। यत्र धूमस्तत्राग्निरिति तयोरपि सामान्यरूपेण प्राप्तिरस्तीति चेन्न; पर्वतादिविशेषरूपस्य प्रागप्राप्तत्वात्। तस्यापि वा प्राप्तावनाकलितधूमस्यैवाग्न्यर्थिनः पर्वते प्रवृत्तिप्रसङ्गात्। अतः पर्वत-

---

१. सर्वसाधनाव्यापकत्वे- ङ. २. पोपादानेनैव- ङ. ३. संमते. ग. संबन्धे. घ. ङ. ४. प्राप्तसाधन- ङ. ५. पनि०. ग. ६. स्वनि०. घ. ङ. ७. पनि०. ग. ङ. ८. वस्थितमिति- ङ.

विशेषस्य प्रागप्राप्तत्वात् तत्सम्बन्धोऽपि [1] प्रागप्राप्त एवेति कुतस्तदनुमाने सिद्धसाध्यत्वम् ?

ये पुनरनुमानस्य गृहीतग्राहित्वमाचक्षाणा धूमवतो वह्निमत्त्वस्य प्रागेव प्राप्तत्वाद्धूमस्येव प्रमाणापेक्षेत्याहुः। तेषां सकलदेश[2]कालव्यापितया धूमवत्त्वं प्रागप्राप्तं प्राप्तं वा? प्राप्तश्चेत् प्राप्तत्वादेव वह्निमत्त्ववत्तदपि[3] न प्रमाणमपेक्षेत। अथ न प्राप्तं तर्हि धूमवत्त्वप्राप्तिनिबन्धना वह्निमत्त्वप्राप्तिरपि नासीदिति कुतो गृहीतग्राहित्वम्? कथञ्च यत्र यत्र धूमस्तत्र तत्र[4] वह्निरितिवत् यत्र यत्राग्नीन्धनसंयोगः[5] तत्र तत्र धूमोऽपीति प्राप्तत्वात् धूमोऽपि[6] वा स्वावगमाय[7] प्रमाणान्तरमपेक्षेत? किञ्चानुमानस्य गृहीत[8]ग्राहित्वेन स्मृतिप्रमोषाद्युच्चारोऽपि न सिध्यति। यथा नोत्तरस्तथा[9]न्यथाख्यातिसमर्थन एव समर्थितम्। अतः सिद्धमनुमानमगृहीतग्राहीति।

तत्तु द्विविधम्—दृष्टं सामान्यतो दृष्टञ्चेति। तत्र दृष्टैकविशेष[10]विषयं दृष्टम्। यथा स्वरेण पुत्रानुमानम्। अनियतविशेषत्वेन सामान्यमात्रविषयं सामान्यतो दृष्टम्। यथा धूमाद्धूमध्वजानुमानम्। स्वार्थानुमानसामग्र्येव[11] च परार्थानुमानस्याप्यर्थः; तस्य परं प्रति तत्प्रतिपाद-

---

१. प्राप्त एवेति. ग. २. व्यापितया. घ. ङ. ३. प्रमाणान्तरमपेक्षेत. घ. ४. रिव यत्र. ङ ५. न्धनं तत्र तत्र. ग. न्धनसम्बन्धः. घ. ङ. ६. मो वा. ग. ७. य प्रमेयप्रमाणान्तर. ङ. ८. हित्वे स्मृति. घ ९. मा न गृहीत. ग. ङ. १०. यत्र. ग ङ. ११. ग्र्येव च. ग. ग्र्येव परा. घ.

नमान्नपरत्वात्। तच प्रतिज्ञाहेतुभ्यामेव निगमनोपनयनप्रयोजनसिद्धेर्न-
पञ्चावयवम्, तयोदाहरणोपनयाभ्यामपरिपूर्णाभिधानात् न व्यवयवमपीति
त्र्यवयवमनवयवविद्भिः कृतम्। अवयवाश्च प्रतिज्ञाहेतुदृष्टान्ताः। तत्र
प्रतिपिपादयिषयापक्ष[1]वचनं प्रतिज्ञा। साधनत्वावेदकं लिङ्गवचनं हेतुः।
सम्यगुदाहरणाभिधानं दृष्टान्तः। तत्र जिज्ञासितधर्मविशिष्टो धर्मी पक्षः।
तद्रूपपरिच्छेदात् तद्विपरीतपरिच्छेदाद्वान्यत्राप्रसिद्धत्वाद्वा यो न जिज्ञासितो
धर्मः तद्विशिष्टस्य न पक्षत्वमिति सिद्धविशेषणो बाधितविशेषणोऽप्रसिद्ध-
विशेषणश्च पक्षाभास एवेति तदावेदकं वचनमपि प्रतिज्ञाभास एव। तद्यथा-
वह्निरुष्ण इति सिद्धविशेषणः। वह्निरनुष्ण इति बाधितविशेषणः। सर्वं
कार्यं सर्वज्ञकर्तृकमित्यप्रसिद्धविशेषणः। बाधकप्रमाणभेदेन बाधित-
विशेषणस्यावान्तरभेदो द्रष्टव्यः।[2]व्याप्तः साधनधर्मो हेतुः। असिद्धो बाधकः
साधारणश्च चत्वारस्तदाभासाः। तत्रासिद्धभेदो यथा—बुद्धो रागद्वेष
विधुरः सर्वज्ञत्वादिति स्वरूपासिद्धः। गगनकुसुमं सुरभि कुसुमत्वादि-
त्याश्रयासिद्धः। अनित्यं गगनं [3]ज्ञानासमवायिकारणसंयोगा[4]धारत्वात्
इति सम्बन्धासिद्धः। गगनत्वादिति व्यतिरेकासिद्धः। वेदाः पौरुषेयाः
[5]उपाख्यानात्मकत्वादिति भागासिद्धः। एवमन्यतरासिद्धादयश्च तद-
वान्तरविशेषा ऊहनीयाः। बाधको द्विविधः [6]साध्यस्वरूपबाधकस्तद्विशेष-
बाधकश्चेति। तत्र साध्यविरुद्ध[7]व्याप्तः साध्यस्वरूपबाधकः। यथा—शब्दो
गुणः श्रावणत्वादिति। साध्यव्यापकविशेषस्यान्यतो बाधे [8]सति तदितर-

---

१. पक्षयावेद. क. ख. ग. २. ससाधन. घ. ३. ज्ञानसम. ङ. ४. गात्वाधार. ग. ङ.
५. स्यात्म. ङ. ६. साध्यरूपबाधकस्तद्विशेषबाधकेति. ग. ङ. ७. व्यस्त. ङ.
८. ति यीदत. ग.

विशेषबाधमुखेन साध्यसामान्यस्यापि बाधकस्साध्यविशेषबाधकः। यथा-क्षित्यादिकं सकर्तृकं कार्यत्वादिति। स चायं साध्यविशेषबाधकापरनामा विशेषविरोध ईश्वरवाद एव प्रस्तोष्यते इति नेह तदनुबन्धिनौ चोद्य-परिहारावुच्येते। सव्यभिचारः साधारणो यथा—नित्यश्शब्दः प्रमेयत्वादिति। पक्षमात्रवृत्तिः असाधारणः यथा—नित्या भूर्गन्धवत्त्वादिति। केचित्पुनस्साधारणासाधारणविप्रतिपत्तिमूलस्संशय इति साधारणधर्मस्यापि सन्देहहेतुत्वमाचक्षाणा असाधारणमपि सव्यभिचारकोटौ निवेशयन्ति। ननु कथं चत्वारो हेतुदोषाः, कालात्ययापदिष्टप्रकरण-समयोरपि तद्दोषत्वात्। मैवम्; कालात्ययापदिष्टस्य बाधितविशेषण-पर्यायत्वेन पक्षदूषणत्वात्। यैः पुनर्बाधितविशेषणस्य पक्षत्वानुपपत्तेः पक्षधर्मतया हेतोरसिद्ध्यभावादसिद्धावन्तर्भावमाह तस्यै हेतुदोषव्यति-रेकेण पक्षदोषो नाम न स्यात्। एतेन सिद्धविशेषणत्वपर्यायं सिद्ध-साध्यत्वं व्याख्यातम्। प्रकरणसमत्वन्तु दूषणान्तरं न सम्भवति, प्रबलदुर्बलयोर्विरोधे दुर्बलस्य प्रबलापहृतविषयत्वाद् बाधितविशेषणत्वस्य पक्षदोषस्यैव प्राप्तेः। तुल्यबलयोस्तु विरोधस्यैवानुपपत्तेःउपपत्तौ वा वस्तुनो[7] द्विरूपत्वमसङ्गात्[8]। व्याप्तस्य पक्षधर्मत्वेन प्रमितिसिद्धिरिति शङ्कितोपाधित्वेन व्याप्त्यसिद्धप्रयोजकोऽप्यसिद्धभेद एव।

व्याप्तिवेदनास्थानमुदाहरणम्[10]। तद्द्विविधं साधर्म्यवैधर्म्यभेदात्। तत्र साधनस्य साध्येनान्वयोपदर्शनं साधर्म्यम्। यथा—यो धूमवान्

१. यथा अनित्या. घ. यथा नित्या भूत शब्दवत्त्वादिति. ग २ न सपक्ष ग
३. यत्पुनर्बाधित-. क ग. घ ४. पक्षधर्मत्वा घ ५. स्य हेतुधर्मव्यतिरेकेण.
६ स्य दोषहेतुव्यतिरेकेण. ग ६ नस्य पक्ष ग ङ. ७. स्तुनो घ ८ नो विरूप. क ९ त्वे व्याप्त्यसिद्धेर. ङ १०. नास्थानमुदाहरणम्. घ. नावस्थान क

सोऽग्निमान् यथा महानस इति । साध्याभावस्य साधनाभावेनान्वयोपदर्शनं वैधर्म्यम् । यथा–योऽग्निमान्न भवति नासौ धूमवान् यथा पाप इति । साध्यहीनः साधनहीन उभयहीन आश्रयहीन इति साधर्म्योदाहरणाभासाश्चत्वारः । तद्यथा—नित्यो ध्वनिरकारणत्वात् यदकारणं तन्नित्यमित्यत्र प्रागभाववदिति साध्यहीनः । प्रध्वंसवदिति साधनहीनः । घटवदित्युभयहीनः । नरशृङ्गवदित्याश्रयहीनः । नित्यत्वमत्राविनाशित्वमेव विवक्षितं न कोटिद्वयराहित्यम् । वैधर्म्योदाहरणाभासा अपि साध्याव्यावृत्तादयश्चत्वारः । यथा यन्नित्यं न भवति न तदकारणमित्यत्र प्रध्वंसवदिति साध्याव्यावृत्तः । प्रागभाववदिति साधनाव्यावृत्तः । गगनवदित्युभयाव्यावृत्तः । नरशृङ्गवदित्याश्रयहीनः । सर्वे पुनः पक्षहेतूदाहरणाभासानामवान्तरभेदा विस्तरभयादेव नोदाहृता इत्यनुसन्धेयम् । तत्र त्र्यवयवं परार्थानुमानवाक्यमुदाहरणपर्यन्तम्, यद्वोदाहरणादिकमिच्छानुसारेण प्रयोक्तव्यम् । तत्रोदाहरणपर्यन्तं यथा–वह्निमान् पर्वतः धूमवत्त्वात् यो धूमवान् स वह्निमान् यथा महानस इति । उदाहरणादिकं यथा–यो धूमवान् स वह्निमान् यथा महानसः अयञ्च धूमवान् तस्माद्वह्निमानिति । शेषमनुक्तं वार्त्तिक एव द्रष्टव्यम् ।

इत्यनुमानपरीक्षावादो नाम चतुर्विंशवादः

समाप्तः ।

---

१. यो योऽग्निमान्. ग. २. यत् कारणं. क. ३. साध्यव्यावृत्तादयः. ग. ४. साध्यव्यावृत्तः. घ. साध्याव्यावृत्तिः ङ. ५. उभयव्यावृत्तः. घ ६. ननु त्र्य. क. ७. णाभासादिकं ग. घ.

## ॥ अथ शाब्दम् ॥

[शाब्दपरीक्षावाद ।]

तत्र विज्ञातेभ्यः पदेभ्यः पदार्थस्मृतिमुखेनासन्निकृष्टेऽर्थे यत् ज्ञानं तच्छाब्दम् । तत्पुनर्द्विविधं पौरुषेयमपौरुषेयञ्च । तत्राप्तवचः पौरुषेयम् । वेदवचोऽपौरुषेयम् । ननु कथं पौरुषेयं शाब्दम्? पुरुष वचसां वक्त्रभिप्रायानुमापकत्वात् । न हि तान्यर्थे प्रमाणं भवितुमर्हन्ति; शङ्काकुण्ठितशक्तित्वात् । तदयुक्तम्; यत इन्द्रियादेरिव शङ्कितव्यभिचारादपि वाक्याद्वाक्यार्थप्रत्ययः प्रथममुपजनित एव पश्चादन्यतः शङ्कितव्यभिचारोऽपि व्यभिचारनिदानभूतभ्रमादिचतुष्टयाभावनिश्चयात्[2] प्रमाणमिति निर्धार्यते । यत्पुनर्यत् ज्ञातमर्थप्रतिपत्तिं जनयति न तस्य शङ्कितव्यभिचारस्य तज्जनकत्वमित्युक्तम्, तदयुक्तं, तादृशव्याप्तेर्व्यभिचारस्मृत्यपेक्षप्रमिति साधनलिङ्गत्वप्रयुक्तत्वात् । अन्यथा कथञ्चित् साधर्म्येण शब्देऽपि तदापत्तौ यदर्थप्रतिपत्तिञ्जनयति तज्ज्ञानमशङ्कितव्यभिचारञ्च जनयति, यथा लिङ्गमित्यतादृशस्येन्द्रियस्यार्थप्रतिपत्त्यजनकत्वप्रसङ्गात् ।

किञ्च यदि लौकिकं वाक्य अर्थस्यानाभिधायकं तर्हि कथमाप्त वाक्यार्थावगमपूर्विका प्रवृत्तिः । वक्त्रभिप्रायस्यानुमेयत्वात्तद्विशेषणतया वाक्यार्थस्यापि सिद्धिरिति चेत् कुतो वक्त्रभिप्रायस्यैवानुमानम्? अभिप्रायकार्यभूतात् वाक्यलिङ्गादिति चेत् कथमपरिचितचरत्वेनागृहीतसङ्गतेर्वाक्यार्थविशेषगोचराभिप्रायभेदस्य सिद्धिः? तदसिद्धौ च कुतस्तन्निबन्धना प्रवृत्तिसिद्धिः । अथ वाक्यार्थविशेषगोचराभिप्रायभेदस्या

---

१. च शब्दम् घ. २ रादिवाक्यात् ग ३ त् प्रामाण्यमिति. ङ
४ त्पुनर्ज्ञात॰. ग ङ ५. ज्ञातम ङ ६ चार जनयति ङ ७
वाक्यार्थस्यानभिधायकं कथमाप्त ङ. ८ यस्य सिद्धि. ङ ९. दसिद्धि. घ
१० द्धौ वा. क घ. ङ ११ दस्य परि॰ ग.

परिचितत्वेऽपि सामान्येनाकांक्षादित्रयमुपलक्षणीकृत्यैतानि पदान्याकांक्षादित्रयोपलक्षितस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि अदुष्टपुरुषप्रणीतत्वात् गामानयेतिवत् इत्याकांक्षादित्रयोपलक्षितपदार्थज्ञानसिद्धावनुमेयानुरक्तसिद्धिपर्यायात् पक्षधर्मताबलाद्वाक्यार्थ[1]विशेषविषयज्ञानस्यापि सिद्धिः । यद्येवं कथमाप्तत्वमवधारणीयम् ? न ह्याशयदोषराहित्यमात्रमाप्तत्वम्, अपि तु भ्रान्त्याद्यभावोऽपि, नचायं क्वचिन्न भ्राम्यतीति कश्चित् निरूपयितुं शक्यः, भ्रान्तेः पुरुषधर्मत्वात् । प्रतिवाक्यन्तु भ्रान्त्यभावावगमे निर्विशेषस्य भ्रममात्रस्य पुरुषेषु निषेधानर्हत्वादर्थविशेषविषयो भ्रमविशेषो निषेद्धव्यः । अत[3] एतद्वाक्यार्थ[4]विषयो भ्रमोऽस्य नास्तीति निषेध्यभ्रमविशेषणतया वाक्यार्थोऽपि प्रथममवगन्तव्य एव । न चासौ स्मर्तुं शक्यः; अननुभूतपरत्वात् । न चानुमानादन्यतस्तदनुभव इत्यनुमानग्रहणे[5] पूर्वमाप्तत्वस्यैवासिद्धेर्विशेषणासिद्धो हेतुः स्यात् ।

एतेन सर्वत्र वाक्यार्थोऽनुमेय एवेति वदन्तः काणादा निरस्ताः; अविशेषितानां पदानां तत्स्मारितानां[6] पदार्थानां वाक्यार्थव्यभिचारित्वेन लिङ्गत्वानुपपत्तेः । निर्दोषत्वेन विशेषणे लौकिकवाक्येषु निर्दोषत्वावगमस्याप्तत्वावगमाधीनत्वात् तदवधारणस्य च पूर्वोक्तक्रमेण वाक्यार्थावगमपूर्वकत्वात् वाक्यार्थपूर्वकत्वात् — 

---

[1]. वाक्यार्थ॰ ग.　　[2]. प्रमादित्वस्य पुरुषेषु क.　　[3]. मत एतद्वाक्य॰ क.
[4]. द्वाक्यविषयो॰ घ.　[5]. माप्तत्वैवासिद्धेः॰ ग.　　[6]. नां वाक्यार्थ॰ क.

मनुमापयेत् तर्हि यादृशं वक्त्रभिप्रायस्यानुमापकं तादृशमर्थस्यैव कुतो नाभिधायकम्[1] ? न हि निरस्तभ्रमादिचतुष्टयस्यापि वाक्यस्य व्यभिचाराशङ्कास्ति, येन तद्रूपावगतावपि वाक्यं वाक्यार्थं नाभिदधीत ।

यत् पुनर्वाक्यं मानाद्दुष्टार्थविषयं न वेति शङ्कायां विद्यमानायामभिधानानुपपत्तेरवश्यं मूलमानानुमानेन भवितव्यमित्यभिहितं, तदयुक्तम्; मूलमानसद्भावावगमस्यानभिधानं प्रत्यनुपयोगात् । यदि हि मूलमानस्य निश्चये सत्येव वाक्यमभिधायकं नानिश्चय इति स्यात् ततः स्यादपि तत्सन्देहे वाक्यस्याभिधाननिरोधः । न चैतदङ्गीकर्तुं शक्यम्; वेदवाक्यस्यानभिधायकत्वप्रसङ्गात् । वेदवाक्यं मूलनिश्चयाभावेऽपि निर्दोषवाक्यत्वादभिधायकमिति चेत् तर्हि वाक्याभिधाने निर्दोषत्वमेव प्रयोजकं, न मूलसद्भाव इति तदनवगमेऽपि निर्दोषत्वावगमादेव वाक्यमभिदधीत । तस्मादनाप्तवाक्येषु व्यभिचारदर्शनेऽप्यनाप्तप्रणीतत्वादेव निरस्तव्यभिचाराशङ्कमूलमाननिश्चयानपेक्षं यथा वैदिकं वचः स्वार्थस्याभिधायकं तथा[2]प्तवाक्यमपि अनाप्तप्रणीतत्वादेव निरस्तव्यभिचारशङ्कमूलमानानपेक्षमेव स्वार्थमभिदध्यात् । न चाप्तवाक्येषु मूलमाननिश्चयात् पूर्वं व्यभिचाराशङ्कैव न निवर्तेत इति वाच्यम्; तदनिवृत्तौ मूलमानानुमानस्याप्यनुपपत्तेः । लिङ्गमपि शङ्कितव्यभिचारमगमकमेव । कथञ्च विशेषदर्शने सत्यपि तददर्शनयोनिः सन्देहोऽवकल्पते, न हि चलनदर्शनेऽप्यूर्ध्वत्वादर्शनमात्रात् स्थाणुर्वा पुरुषो वेति सन्देहो जायते; सन्देहसामग्र्येकदेशस्य विशेषा-

---

१. वारे वाक्यार्थं नाभिदधीत. ड.    २. अपि नानाप्तप्रणीतत्वादेव. ग. अपि मानाप्रणीतत्वादेव. क.

दर्शनस्य विशेषदर्शने सत्त्वाभावात्। अतो वाक्यं साधारणमुपलभ्य तत्र मूलमानसदसद्भावसन्देहे[1]ऽप्याश्रयादिचतुष्टयराहित्य[2]स्य विशेषस्य दर्शनात् तददर्शनयोनिर्मूलमानसदसद्भावसन्देहोऽपि[3] निवर्तेत इत्यननुमितवक्त्रभिप्रायमपि वाक्यं निःशङ्कत्वाभिधायकमेव स्यात्।

किञ्च—

> वाक्यार्थोऽनुमया लोके यदा वेदे तदा न किम्।
> वेदेऽभिधानश्चेत्सिध्येत् सिध्येल्लोके तदस्तराम्॥

यदि हि लौकिकवाक्येष्वनुमीयमानवाक्यार्थज्ञान[4]विशेषणतया वाक्यार्थोऽप्यनुमेयः तर्हि वैदिकेष्वपि वाक्यार्थोऽनुमेय एवास्तु किमभिमानव्यसनेन। नहि ज्ञानोपसर्जनत्वस्वातन्त्र्ये परिहाप्य[5] वाक्यार्थानुमानं प्रति लोकवेदयोः[6] कश्चिद्विशेषमुपलभामहे। अतो वाक्यार्थस्य लोकेऽनुमेयत्वाङ्गीकारे वेदेऽपि तथैव प्राप्तेः शाब्दं प्रमाणमेवोत्सीदेत्। अतः कश्चिदमुष्य[7] चोद्यस्य दुष्परिहरत्वमनवगम्य परिहारकथामग्रन्थीत्[8]। तथया बाधितेऽपि[9] नदीतीरसंसर्गे समभिव्याहारमहिम्नास्ति तावत् संसर्गग्रहः[10]। न च बाधितविषये लैङ्गिकभ्रमोऽवकल्पते। न हि पाथसि वह्न्यभावमवगच्छतो धूमात्[11] तदनुमानभ्रमो भवत्येव। अतोऽस्य लैङ्गिकभ्रमत्वानुपपत्तेः प्रमाणान्तराभासत्वं वाच्यम्। तथा च प्रमाणान्तरं शाब्दमपि कश्चित्

---

१. ष्याश्रयदोषादिचतुष्टय०. घ. २. सादित्यस्य. ग. ३. स्य नुभिन्न०. ग
४. धैविज्ञान०. ग. ५. हि तज्ज्ञानोप०. ग. ६. योः किञ्चिद्विशेष०. घ.
७. द्। अत्र कश्चिद्. क. द्। अत्र किञ्चिदमुष्य. घ. ८. मग्रन्थीद्. क. समग्रमद. ग.
९. वा धापि०. ग. १०. सादन्न संसर्ग. ङ. ११. धूमात्. क.

सिध्यतीति । तदिदमसारं; लिङ्गभ्रमनिदानत्वाल्लैङ्गिकभ्रमस्य सत्यपि बाधे यावल्लिङ्गभ्रमं लैङ्गिकभ्रमस्यानुवृत्तेः । न हि सामग्री विद्यते कार्यन्नोत्पद्यत इति सम्भवति। न च बाधाभावोऽपि तद्धेतुः; तस्य लैङ्गिकप्रमितिमात्रहेतुत्वेन तदाभासं प्रत्यहेतुत्वात्। अन्यथा शब्देऽपि प्रमितिहेतौ बाधाभावस्य तदाभासं प्रत्यपि हेतुत्वप्रसङ्गात्। अतो लिङ्गभ्रमानुवृत्त्यनुवृत्तिनिबन्धने एव लैङ्गिकभ्रमानुवृत्त्यननुवृत्ती इति। तथा पायसि वह्निभ्रमस्य बाष्पे धूमभ्रमः कारणमिति तत्र लिङ्गभूतधूमभ्रमनिवृत्तौ[1] लैङ्गिकभ्रमनिवृत्तिः। नदीतीरफलसंसर्गे तु बाधितेऽपि नद्यास्तीरे फलानि सन्तीति समभिव्याहारदोषेण वाक्यार्थपूर्वकवाक्यविशेषत्वरूपलिङ्गभ्रमोऽनुवर्तत इति लैङ्गिकवाक्यार्थभ्रमानुवृत्तेरप्युपपत्तिः। अतो वाक्यार्थस्य क्वचिल्लिङ्गाधीनसिद्धित्वमभ्युपगच्छतः सर्वत्र तथैव प्राप्तेश्शाब्दभङ्गप्रसङ्गो दुष्परिहर एव। शक्यते हि प्रयोक्तुं वेदेषु एतानि पदान्याकाङ्क्षादित्रयोपेतस्मारितपदार्थसंसर्गवन्ति दुष्टपुरुषाप्रणीतपदत्वात् आप्तप्रणीतपदवत्। यद्वा पदार्थान्येव पक्षीकृत्यैते पदार्थाः परस्परसंसर्गिणः दुष्टपुरुषाप्रणीतपदस्मारितपदार्थत्वादाप्तप्रणीतपदस्मारितपदार्थवदित्यादि। अतोऽस्मदुक्तयुक्तिभिरेव शब्दस्य प्रामाण्यसिद्धिर्नान्यथेति लौकिकवचनस्य वाक्यार्थानुमापकत्वे वैदिकस्यापि तथैवानुमापकत्वमेव भवेत्। अथ वैदिकवचनेषु वृद्धव्यवहारसिद्धाभिधानशक्तीनां पदानामपौरुषेयत्वेन निश्शङ्कतयाभिधाननिरोधाभावादभिधानमेव सिध्येत् तर्हि लौकिकेष्वनाप्तप्रणीतत्वादेव पूर्वोक्तनयेन निश्शङ्कत्वात् सुतरामभिधानं सिध्येत्।

---

१. न अतदभासं. घ. २. शाब्देऽपि. ङ. ३. तौ न लैङ्गिक. ग. ४. देष्वपतानि. ङ.

अतो लौकिकवचसामभिधायकत्वानुमापकत्वयोर्यैव विधा सैव वैदिकवचसामपीति स्थितम्।

योऽपि शाब्दधीहेतोः शब्दस्य दोषाभावान्न तस्य कश्चिद्व्यभिचारः, अपि तु लिङ्गस्येति विभागो दर्शितः, सोऽपि न चतुरस्रः। यद्यपि वक्तृगोचराशयदोषादयो न शब्दनिष्ठाः तथापि दुष्टवक्त्रभिव्यङ्ग्यत्वस्य शब्दनिष्ठत्वात् तस्यैव च शाब्दज्ञानहेतुदोषत्वाङ्गीकरणात्। तस्मात् सुव्यवस्थितमिदं पौरुषेयमपौरुषेयं च शाब्दमिति। तदवान्तरविशेषास्तु विस्तरभयान्नाभिधीयन्ते इति सर्वमनवद्यम्॥

इति शब्दपरीक्षावादः चतुर्थिंशवादः
समाप्तः।

---

१. धा आशयदोषादय. ख. क. २. स्यात्तथैव च शाब्द०. ख.

# अथोपमानम् ॥

[ उपमानपरीक्षावादः ]

त[1]त्रानुभूतवस्त्वन्तरस्य वस्त्वन्तरेऽनुभूयमाने तत्प्रतियोगिकपूर्वानुभूतवस्तुविषयासन्निकृष्टसादृश्यज्ञानमुपमानम् । अ[2]त्र केचिद्द्रव्यादिवैधर्म्यात् सादृश्यं तत्त्वान्तरमाहुः । तदयुक्तं; गुणावयवसामान्यानामिवैकत्र प्रतीतानामन्यत्र सादृश्यबुद्धिविषयत्वात् । यथा देवदत्तो यज्ञदत्तजन्यत्वेनोपलक्ष्यमाणो यज्ञदत्तपुत्रबुद्धिविषयो भवति, स्वरूपे[3]ण तु निरूप्यमाणो देवदत्तबुद्धेरेव । न च स्वरूपवैलक्षण्यमपि; तस्यैव देवदत्तस्योपलक्षणभेदेन विलक्षणबुद्धिविषयत्वात् । तथा गुणावयवसामान्यान्यपि गवयाश्रिताकारेणोपलक्ष्यमाणानि गवि गवयवद्गवयसादृश्यबुद्ध्योर्विषयः । स्वरूपेणैव निरूप्यमाणानि तदित्यनुवृत्तबुद्धेरेवं विषयः [4]न तद्वत्सादृश्यबुद्ध्यो[5]रिति ।

एतेनैतन्निरस्तं यदाहुः—न सामान्यमनुवृत्तत्वात्, न योगः सम्बन्धत्वात् । तद्वदिति हि तद्धीः न तदिति न संबन्ध इति चेति ।

यत्पुनर्गुणादिसामान्यानि गुणादिवर्तीनि बहूनि च । सादृश्यन्तु गुणादिमद्वर्त्येवैकं चेति भेद इति । तदसत्; गुणादिवर्तिनामपि गुणादिसामान्यानां समवेतसमवायात् गु[6]णादिमद्वर्तित्वाद्बहुत्वेऽप्येकप्रतियोग्याश्रिताकारेण निरूप्यमाणानामेकत्वाच्चेति ।

---

१. अत्रानुभूत०. ग. २ तत्र. ग. ङ. ३. ण निरूप्य०. ग. ङ. ण च निरूप्य०. घ. ४. च न तद्वत्सादृश०. घ. ५. द्ध्योरपीति. ग. ६. णादिवर्तित्वात् . ग.

यत्तु गुणादिसामान्यानि समवेतसमवायाद् गुणादिमद्वर्तीनि सादृश्यन्तु तद्गतमेवेति भेद इति । तदतिस्थवीयः ; उभयत्रापि तद्गतत्वबुद्धेः अविशेषात् । न हि सामान्यं समवेतसमवायात् तद्गतं, सादृश्यन्तु समवायादेव तद्गतमिति विशेषमुपलभामहे । इयांस्तु भेदः गुणादिसामान्यानि गुणादिवर्तित्वात्तेषाञ्च काचित्कत्वात् पिण्डैकदेशे तद्गतत्वेन भान्ति । सादृश्यन्तु गुणादिसामान्यसमाहाररूपत्वात् तस्य च सकलपिण्डगतत्वात् तद्गतत्वेनैव भातीति ।

यत्तु सामान्यान्याश्रयभेदेऽपि तान्येव । सादृश्यन्तु प्रत्याश्रयं भिन्नमिति भेद इति । तदतिमन्दं ; सामान्यानामेव तत्तदाश्रिताकारेण निरूप्यमाणानां प्रत्याश्रयं भेदात् । किञ्च सादृश्यस्य तत्त्वान्तरत्वे देवदत्तो यज्ञदत्तेनाल्पसदृशः विष्णुमित्रो बहुसदृश इति प्रत्ययो[1] विरुध्यते । न हि[2] त्वन्मते सादृश्यस्याल्पत्वमहत्त्वे नाम सम्भवतः ; न तावत्परिमाण[3]भेदात् , अद्रव्यत्वेना[4]परिमाणत्वात् । नाप्याश्रयपरिमाणभेदात्, एकरूपस्य देवदत्तस्याश्रयत्वात् । अस्मन्मते गुणादिसामान्यानामल्पसङ्ख्याभाजामल्पत्वं बहुसङ्ख्याभाजां बहुत्वमिति नाल्पत्वबहुत्वयोरनुपपत्तिः ।

यत्त्वभिव्यञ्जकगुणादिसामान्याल्पत्वबहुत्वाभ्यामभिव्यक्तिबहुत्वाल्पत्वे स्यातां, तथाऽल्पाभिव्यक्तमल्पं, बह्व[5]भिव्यक्तं बह्विति । तन्न ; सादृश्यस्यानवयवत्वात् । घटादौ हि सावयवे कतिपयानवयवानभिव्यक्ते-

---

१ प्रत्ययो विरुध्येत ग    २. हि त्वन्मते ग घ    ३ परिमाण°, ग. क,
४. परिमाण° ग.    ५. बहुत्वाभिव्यक्त क.

रूपाभिव्यक्तत्वम्, इह त्वनभिव्यक्तांशाभावान्नास्तत्वम्।' न चेमौ प्रत्ययौ भ्रान्तौ; बाधकाभावात्। इत्यलमनेन।

नन्वेवं प्रत्यक्षगवयसादृश्यात् परोक्षगोसादृश्यमनुमेयमस्तु, नोपमेयम्। तत्र; व्याप्त्यसिद्धेः। प्रथमत[1] एव हि गामनुभूय गवयं पश्यन्नु[2]पमिनोति।

स्यादेतत्—यो यत्सादृश्यप्रतियोगी स तेनापि सदृशः यथा यमाविति सामान्येन व्याप्तिलाभ इति। तदयुक्तम्—

सादृश्यमात्रे गोरसाध्ये[3] यतो नेष्टं प्रसिध्यति।
साध्ये गवयसादृश्ये दृष्टान्तः साध्यवर्जितः॥

यदि गवयसादृश्येन व्याप्तिमगृह्णतोऽपि यो यत्सादृश्यप्रतियोगी स तेनापि सदृशः यथा यमौ इति[4] सामान्यव्याप्तेरेव गवयसादृश्यमनुमातुं शक्येत[5] ततः स्याद्प्युपमानस्यानुमानेऽन्तर्भावः। न च तत् शक्यम्। न हि सामान्यव्याप्तिमूला साध्यसिद्धिः स्वसिद्धिपर्यवसानायानियतरूपविशेषमालिङ्गन्ती[6] नियतरूपं गवयसादृश्यविशेषमालिङ्गितुमर्हति; तथा सति कलमबीजेनाङ्कुरविशेषस्य व्याप्तिमगृह्णतोऽपि योऽङ्कुरस्स बीजव्याप्त इति सामान्यव्याप्तिग्रहादेव कलमबीजानुमानोदयप्रसङ्गात्। अतस्सामान्यव्याप्त्या सादृश्यमात्रे साध्ये न गवयसादृश्यस्येष्टस्य सिद्धिः। गवयसादृश्ये तु साध्ये दृष्टान्तः साध्यविकल इति कथमनुमानान्तर्भावः?

---

१. एव गामनुभूय. ग. २. पश्यन्नुपमिनोति क ग. ङ. ३ गोरसाध्ये. घ.
४. ■ इति सामान्यव्याप्तेरेव. ग. ङ. ५. शक्यते. ङ. ६ न्ती. ङ.

यत्तु यदि प्रत्यक्षसाधर्म्यात् परोक्षविषयगोसाधर्म्यज्ञानाय[1] प्रमाणान्तरं कल्प्यं तर्हि प्रत्यक्षपुरुषवैधर्म्यात् परोक्षमहिषवैधर्म्यज्ञानायापि प्रमाणान्तरं कल्प्यं स्यादिति[2]। अत्र वदामः—यस्य तावत् प्रमाणस्य न कथञ्चिदपि क्लृप्तप्रमाणसामग्रीतो निर्वाहः तस्यैव तदतिरेकेण सामग्र्यन्तरकल्पना[3]। यस्य तु निर्वाहस्तस्य तदतिरेकेण सामग्र्यन्तरकल्पनमन्याय्यमित्यविवादम्। तत्र च वैधर्म्यं द्विविधम्—पुरुषगोचरधर्मायोगित्वं पुरुषागोचरधर्मयोगित्वञ्चेति। ततश्च प्रमाणसामग्रीत्वेन क्लृप्तयोग्यस्मृत्यनुदयादेव पुरुषगोचरधर्मायोगित्वलक्षणवैधर्म्यविशिष्टत्वेनापि पुरुषविधर्मा महिष इति विशिष्टप्रत्ययोपपत्तौ नाप्रामाणिकपुरुषागोचरधर्मयोगित्वलक्षणवैधर्म्यान्तरपूर्वकविशिष्टप्रत्ययाय सामग्र्यन्तरं कल्प्यम्। साधर्म्यस्य तु न कथञ्चिदपि क्लृप्तसामग्र्यन्तर्भाव इति सिद्धमुपमानं प्रमाणान्तरमिति।

यत्तु नैयायिकोक्तमुपमानं गवयशब्दवाच्यः क इति पृच्छतो[4] गोसदृशो गवयशब्दवाच्य इति श्रुतातिदेशवाक्यस्य गोसदृशपिण्डमनुभवतः स्मृतश्च वाक्यार्थं अयमसौ गवयशब्दवाच्य इति भवति मतिः सोपमानफलमिति। तदयुक्तम्; तस्य वाक्यप्रत्यक्षसमाहारफलत्वात्। ननु गोसदृशो गवयशब्दवाच्य इत्यत्र गोसादृश्यं निमित्तस्वरूपानुप्रवेशि निमित्तोपलक्षकं वेति सन्देहात् पूर्वं निमित्तताप्रतीतेर्न समयपरिच्छेदसिद्धिः। अनुभूयमाने ▮ गवये वाक्यमसन्निहितमेव। न च यो यत्रासति

---

1. धृगवयसाधर्म्यज्ञानाय. ग. ङ.  2. दिति। तत्र वदाम.। ङ.  3. नात् यस्य तु. ङ.  4. नुभवतः. ङ.  5. स्व वाक्यस्य प्रत्यक्ष. क.

वृत्त्यन्तरे प्रयुज्यते स तस्य वाचकः यथा गोर्गोशब्द इत्यनुमानात् समयपरिच्छेद इति वाच्यम्; असति वृत्त्यन्तर इति हेतुविशेषणस्य सन्दिग्धासिद्धत्वात्। न च वाच्यं वाक्यगतस्य गोसदृशपदस्य गोसादृश्य-विशिष्टनिमित्तपरत्वं गोसादृश्योपलक्षितनिमित्तपरत्वं वेति सन्देहाद्वाक्यं समयानिश्चायकत्वादपर्यवसितमिदानीं स्मृतिसमारूढं समयपरिच्छेदाया-लमिति; वाक्यस्य प्रागपर्यवसितत्वासिद्धेः। वाक्यगतस्य हि गोसदृश-पदस्य यद्यपि विशेषणोपलक्षणयोः[1] सन्देहः तथाप्युभयसाधारणसामा-नाधिकरण्यमात्रेणापि वाक्यस्य पर्यवसितत्वान्नान्वयः[2]। यत्र तु पदार्थ एवान्वयायोग्यः तत्र मानान्तरोपनीतेनान्वयः यथा गङ्गायां घोष इत्यत्र। न च प्रकृते तथा सामानाधिकरण्येनाप्यन्वयोपपत्तिरिति। तदाहुः—

> श्रुतान्वयादनाकांक्षं न वाक्यं ह्यन्यमिच्छति।
> पदार्थान्वयवैधुर्यात्तदाक्षिप्ते हि सङ्गतिः॥

इति। अत्र ब्रूमः—गवयशब्दवाच्यः क इति प्रश्ने गोसदृशो गवयशब्दवाच्य इत्युत्तरं तावदवश्यं निमित्तकथनपरमित्यविवादम्। अन्यथा प्रश्नोत्तरयोरसङ्गतिः स्यादिति। अत्र[3] च प्रष्टव्यो नैयायिकः किं गोसदृशपदेन निमित्तमुपदर्शितं न वेति। तत्र यद्युपदर्शितं तर्हि तदैव[4] गवयशब्दवाच्यत्वमपि[5] परिच्छिन्नमित्युत्तरञ्चापि[6] अयमसौ[7] गवयशब्दार्थ इति सम्प्रत्यभिज्ञं प्रत्यक्षमेव।

---

१. यथोः सन्देह क. घ ङ. २. आन्वयः. ग. ङ. ३. तत्र च. ग. ४. तदेव. ङ. ५. त्वमिति किमपि परिच्छिन्न ङ. ६. अप्यसौ गवय. ङ. ७. शब्दवाच्यार्थ इति ग. ङ.

अथ गोसदृशपदस्य निमित्तपरत्वेऽवगतेऽपि गोसादृश्यविशिष्ट-परत्वं गोसादृश्योपलक्षितपरत्वं वेति सन्देहात् निमित्तमनुपदर्शितं[1] तर्हि वाक्यमपर्यवसितमेव; तात्पर्यसन्देहे वाक्यस्यापर्यवसानात् नवकंबलो वणिगितिवत्। न हि तत्र प्रथमं विमर्शारूढान्वयादृते वाक्यार्थनिश्चयः, पश्चात्तु तात्पर्यावगतौ स्मृतिरथं तदेव वाक्यं वाक्यार्थनिश्चायकमिति तद्वदिहापि। यदि न[2] पूर्वं निमित्तावगमः तर्हि गवये प्रत्यक्षे तदेव वाक्यं स्मृतिस्थं तत्सहायं समयपरिच्छेदाय स्यात्। पटो भवतीति वाक्ये तु पटस्य रक्तत्वादिसन्देहेऽपि पटपदस्य पट एव तात्पर्यात् तस्य चासन्देहा-दन्वयप्रतिपत्तिरेव। न चेहापि सामानाधिकरण्यमात्रे[3] तात्पर्यम्; उक्तेन न्यायेन निमित्तपरत्वात्, सामानाधिकरण्यमात्रस्य[4] चानिमित्तत्वादिति। तस्मादस्मदुक्तमेवोपमान[5]मिति सर्वं निर्मलम्।

इति उपमानपरीक्षावादः पञ्चत्रिंशः समाप्तः।

---

१. तमुपदर्शितं. क. ख. २. दि पूर्वं. ख. ३. त्रे तात्पर्यम्. क. ४. च वानिमित्तत्वादिति. ग. स्य निमित्तत्वादिति. घ. ५. नं निर्मलमतीति सर्वं. ग.

## ॥ अथार्थापत्तिः ॥



[ अर्थापत्तिपरीक्षावादः । ]

अर्थापत्तिस्तु, तत्रैकदेशिप्रणीतमर्थापत्तिलक्षणम् —उपलब्धोऽर्थः कल्पनां विनार्थान्तरं सन्देहयन्नर्थं कल्पयति सन्दिग्ध एव वा कल्पयति । चित्रतश्च यः सदा गृह एव दृष्टः[1] कञ्चित्कालं जीवनञ्च निश्चितं गणितागमेन तस्य गृहेऽदर्शनात् [2]पूर्वनिरूपितगृहदेशत्वधर्महानाज्जीवनं सन्देहं नीतं बहिर्भावकल्पनया पुनर्निश्चितमिति गृहाभावो जीवने सन्देहमापादयन् गमयति जीवनं वा तदापादितसन्देहं गमयति । उभय[3]थापि हेतुस्वरूपानुप्रविष्टस्य जीवनस्य सन्दिग्धत्वात् सत्यामपि व्याप्तौ नानुमानत्वमतः प्रमाणान्तरमिति ।

तदिदमसारम् । तथा हि—सन्दिग्धे जीवने तस्य बहिर्वृत्तित्वेन पुनर्निश्चय एव तावदशक्यः । सर्वत्र सन्दिग्धे वस्तुन्यन्यतरपक्षावधारणं तदसाधारणधर्मोपलम्भादेव । यथोर्ध्वत्वदर्शनात् स्थाणुर्वा पुरुषो वेति सन्देहे [4]पुरुषासाधारणचेष्टादिधर्मदर्शनादेव पुरुषत्वनिर्णयः तथेहा[5]पि यदि गृहाभावदर्शनेन जीवनं सन्दिग्धं तर्हि [6]जीवनासाधारणधर्मान्तरदर्शनादेव बहिर्वृत्तितया जीवनं निश्चेतव्यं, न च तदस्ति अतः कथं सन्दिग्धाज्जीवनात् बहिर्वृत्तित्वेन जीवननिश्चयः कथञ्च यस्मादेवदत्तो जीवति[7]

---

१. दृ: किञ्चित्कालं. ग. दृ. कञ्चित्काल. घ. २. पूर्वनिरूपित. ग. ३ था हेतु. घ. ४. रुषासाधारण. घ. ५. पि गृहाभाव. घ. ६. वनसाधारण. ग. ७. ति न वा. घ.

वा न वा तस्माद् वह्निरस्तीति कल्पनीयम्? न हि कोटिद्वयसाधारणं वहिरस्तित्वम्; अजीवनपक्षे प्रमाणविरुद्धत्वात्। अतः कथं तस्मिन्नपि शङ्क्यमाने तद्विरुद्धं वहिरस्तित्वं निश्चीयते। सन्देहस्तु कारणानुगुणो वहिर्भावेऽपि भवेदिति। नैवमनुमानार्थापत्त्योर्भेदः, न चैतल्लक्षणमपि। ननु जीवतो गृहाभावाद्बहिर्भावव्याप्तादनुमानमेव[1] नार्थापत्तिः। तदयुक्तम्; यतः।

> हेतू भवेतां प्रत्येकं न गृहाभावजीवने।
> वहिस्सत्त्वमविज्ञाय न च सिध्येत् समुच्चयः॥

*गृहाभावजीवनयोर्हि प्रत्येकमलिङ्गत्वात् संसृष्टयोरेव लिङ्गत्वं* वाच्यम्[2]। जीवता गृहे वहिर्वा स्थातव्यमिति नियमाज्जीवने प्रतिपन्ने गृहे वहिर्वा स्थितिरपि प्रतिपन्नैव[3]। ततश्च देवदत्तो गृहे वहिर्वा स्थितो गृहे नावस्थित इत्युभयं परस्परविरुद्धं नदीतीरफलसदसद्भावविषयवाक्यद्वयप्रतिपन्नार्थद्वयवत्र समुच्चित्य प्रतिपत्तुं क्षमम्। वहिर्भावकल्पनोत्तरकालन्तु जीवनगृहाभावयोस्समुच्चित्य प्रत्ययो भवन्नपि प्रमेयाभावान्नानुमानादपीति। नन्वेवं यदि जीवतो गृहाभावात् न वहिर्भावावधारणं कुतस्तर्हि तदवगमः? प्रमाणयोर्विरोधादिति ब्रूमः। ननु प्रमाणयोश्चेन्न विरोधः विरोधश्चेत् न प्रामाण्यम्। तन्न; असाधारणविषयस्य[4]ासाधारणविषयेण विरोधादप्रामाण्यं इदं रजतं नेदं रजतमितिवत्। साधारण-

---

१. मेवेदं नार्थापत्ति. क. २ च्यम्। तत्र जीवता. ग. ३ व। अतश्च. ग.
४. स्य साधारण. ख. ग.

विषयस्य तु प्रामाण्यं विरोधेऽपि विषयान्तरे व्यवस्थितत्वात्[1]। यथात्रैवोदाहरणे देवदत्तो गृहे वा बहिर्वा संस्थितो गृहे नावस्थित इति प्रमाणद्वयम्। न च नानयोर्विरोधः; गृहे नावस्थितो गृहे बहिर्वावस्थित इति विरुद्धविषयत्वात्। न चाप्रामाण्यम्; इदं रजतं नेदं रजतमितिवत् सर्वथा विषयापहाराभावात्। सर्वत्र[2] चार्थापत्तौ साधारणासाधारणप्रमाणाविरोध एव सामग्री। स एव च भाष्येऽनुपपत्तिरित्युच्यते। तदविरोधोपपादनाय च विषयान्तर एवैकैकस्य[3] स्थापनं सार्थापत्तिरिति यद्युच्येत भवतु साधारणासाधारणप्रमाणाविरोधस्सामग्री तथाप्यनुमानादनतिरेक एव। सर्वतः[4] साधारणप्रमाणस्य[5] स्वविरुद्धासाधारणप्रमाणगृहीतेतरविषयत्वव्याप्तिरिति। तन्न; तादृशव्याप्तेरर्थापत्तिं विना दुर्ग्रहत्वात्।

अथैकं[6] देशं स्वसम्बन्धितया प्रत्यक्षयन्[7] देशान्तराणि[8] योग्यानुपलब्ध्या निषेधन् जीवता स्वेन तत्र वान्यत्र वा स्थातव्यमिति साधारणप्रमाणस्याप्येवं स्वाभावग्राहिणानुपलम्भेन सह विरोधे साधारणप्रमाणं तत्रैव स्वसत्त्वविषयं पश्यन् व्याप्तिं निश्चिनोति। तन्न; साधारणप्रमाणं[11] हि तत्र वान्यत्र वेत्यनियतैक[12]विशेषविषय[13]परिग्रहेणेतरविशेषनिषेधात्मकं[14] नतु युगपदुभयालम्बनम्। तथा च तद्देशावस्थानलक्षणविशेषलाभेन कृतार्थं सत् पश्चात्तदितरदेशावस्थानलक्षणविशेषान्तरनिरपेक्षं सद्बाधेऽपि न बाध्यत इति कथं तत्र प्रमाणविरोधं[15] पश्यति कथन्तरां च व्याप्तिं

---

१. त्। यत्रैवोदाहरणे ग. ङ. २. तदा विरोधोप. ङ ३. कस्यावस्थापनं. घ. ४. वेत्रे. ङ. ५. स्य स्वविरुद्ध. घ ६. थैकदेशं. ग. ङ. ७. स्ववदेशान्तराणि. ङ. ८. णि तु. क. ९. धयन्. ग. ङ. १०. प्र स्वभाव. ग. ङ. ११. णं तत्र. ङ. १२. वेति नियतैक. घ. १३. कदेशविषय. ङ. १४. यपरिग्रहेणेतर. ग. १५. माणं विरोध. ङ.

गृह्णातीति। प्रकृते पुनरर्थापत्त्युदाहरणे[1] तु वह्निभावकल्पनायाः पूर्वलब्धैक-विशेषं साधारणं विशेषमात्रापेक्षमेकविशेषाबाधेऽपि[2] बाध्यत एवेति भेदः।

नन्वेवं यो धूमवान् सोऽग्निमानिति व्याप्तिग्राहकप्रमाणस्य पर्वत-धूमवत्त्वप्रत्यक्षस्य[3] च पर्वते वह्निमत्तां विना परस्परानुपपत्तिलक्षणविरोधाद्वह्निमत्तापि कल्प्यतां किमनुमानेन? स्यादेवं यद्यनयोर्विरोधो भवति। न त्वसावस्ति। न ह्येकगृहीतं विषयमितरदंशेनापि निषेधति। न च केशतोऽप्यनपहृतविषयस्य विरोधः सम्भवति; अतिप्रसङ्गात्।

यत् पुनरनुपपत्तिमात्रं व्याप्तिबलापन्नं तदर्थापत्तेः कारणम्। ननु यो धूमवान् सोऽग्निमानिति व्याप्तिग्राहकप्रमाणेन पर्वते वह्निमत्त्वं[4] प्राप्तं वह्निमत्तानुपलब्ध्या विरुद्धमिति तदपि तत्र कल्पनमेव। तत्र; सत्यामपि तादृशव्याप्तावविशेषेण पर्वते वह्निमत्त्वानुमानात् पूर्वं तदनुपलम्भेन विरोधाभावात्। न ह्यमाप्तस्य निषेधो विरोधमापादयति[5]। यथा[6] च पर्वते[7] वह्निमत्त्वमनुमानमन्तरेण व्याप्तिमात्रात् न सिध्येत् तथानुमानपरीक्षायामेव समर्थितम्।

एतेन धूमवतः[8] पूर्वभागे परभागे[9] वा वह्निरिति व्याप्तेः पूर्वभागे योग्यानुपलब्धिविरोधात्[10] परभागे वह्निरपि कल्प्यः स्यादिति निरस्तम्; उक्तेन क्रमेण पर्वते वह्निमत्त्वानुमानात् पूर्वं पूर्वभागे वह्निमत्त्वप्रतिषेधेन

---

१. णवह्नि॰ ग. ङ. २. पक्षाभोऽपि॰ ङ. घ. पक्षोभोऽपि॰ क. ३. [illegible] पर्वतवह्निमत्तां विना न परस्परानु॰ क. ४. त्वं वह्निमत्तानुपलब्ध्या विरुद्धमिति॰ क. ५. मापादयति॰ ड. ६. था पर्वते॰ ग. घ. ७. त् तत्त्वानुमान॰ ड. ८. परवत्पूर्वभागे॰ ड. ९. गे वह्निरिति. घ. १०. लम्भविरोधात्. क.

विरोधस्यैवानुपपत्तेः। उत्तरकालन्तु पूर्वभागे योग्यानुपलम्भ[1]निरोधात् परभागे वह्निमत्त्वज्ञानस्यार्थापत्तित्वेनाभ्युपगमात्।

एतेन यदाहुः[2]—

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः।
न मानयोर्विरोधोऽस्ति प्रसिद्धे चाप्यसौ समः[3] ॥

इति। तदपि पराकृतं वेदितव्यम्।

ननु यदि सर्वार्थापत्तौ साधारणासाधारणप्रमाणविरोधः[4] सामग्री कथं तर्हि शक्तिकल्पनम्? उच्यते—यादृशात् करतलानलसंयोगाद्दाहो[5] दृष्टः तादृशादेव मन्त्रादिप्रयोगे सति कदाचित्तददर्शनात् करतलदहन-संयोगातिरिक्तं दृश्यमदृश्यं वा यत्किञ्चित् कारणमस्तीति साधारणप्रमाणं गमयद्दृश्यकारणाभावग्राहिणा योग्यानुपलम्भेन प्रतिहन्यते। तदनयोर्विरो[6]-धादविरोधायादृश्यमपि कारणं कल्प्यं, तच्छक्तिरित्युच्यते। न चा-दृष्टसाकल्यवैकल्याभ्यामेव तदुपपत्ते[7]रविरोधः; तस्य[8] दृष्टकारणसाकल्य-मात्रहेतुत्वात्। अन्यथा दृष्टकारणसाद्गुण्ये[9]ऽप्यदृष्टवैगुण्यमाशङ्कमानानां क्वचि-दपि कार्यानिश्चयेन प्रवृत्त्यनुपपत्तेः कर्मानन्तरभाविविभागोत्पत्तिनियम-भङ्गप्रसङ्गाच्च। तथा मन्त्रप्रतिबद्धेन च पावकेनादह्यमानस्य[10] तदितर-पावकेनापि तत एवादह्यमानत्वप्रसङ्गाच्च। स्यादेतत्—प्रतिबन्धकाभावः

१. म्भविरोधात्. ङ. २. दाहुरिति—अनियम्यस्य. घ. ३. मः ॥ तदपि. घ. ४. रोधसामग्री. ग. ५. नसंयोगस्यातिरिक्तं. क. नस्य संयोगस्यातिरिक्तं ग ६. रोधायादृश्यमपि कारण. ग. ७. दुपपत्तेः विरोध ग. ८. तत्र दृष्टकारणं साकल्य. क. ९. रणात् साद्गुण्येऽपि. ङ. १०. नादाह्यमानस्य. ङ.

कारणम्। तस्य च प्रतिबन्धकसन्निधौ निवृत्तेः कार्यानुत्पत्तिरिति। तन्न; अभावस्याकारकत्वात्। न च वृन्तसंयोगाभावस्य फलगुरुत्वं पतन-हेतुरिति वाच्यम्; तत्रापि पतनप्रतिबन्धकद्रव्यापेक्षया बलवतो गुरुत्वस्यैव पतनहेतुत्वस्वीकारात्।

यत्तु विहिताकरणात् प्रत्यवाय इति। तत्रापि यद्दुरपहपानीय-मानमवर्जनीयमेनः तदेव नित्यकर्मभिरनपनीतस्य प्रत्यवायहेतुत्वं न तु विहिताकरणस्य। यथोक्तं—

स्वकाले यदकुर्वंस्तु करोत्यन्यद्विचेतनः।
प्रत्यवायो हि तेनैव नाभावेन स जन्यते॥

इति।

ननु विशेषादर्शनस्य संशयहेतुत्वं योग्यानुपलम्भस्य चाभावज्ञानहेतुत्वं भवद्भिरेव स्वीकृतम्। सत्यम्। अत एवाकारकत्वादित्युक्तम्। द्वेधा खलु वस्तुनः सिद्धिः, ज्ञानतः स्वरूपतश्च। तत्र ज्ञानस्वरूपसिद्धौ व्याप्रियमाणानि ज्ञापकान्युच्यन्ते। स्वरूपसिद्धौ व्यापृतानि तु कारकाणि। तदेवं योग्यानुपलम्भविशेषादर्शनयोर्ज्ञानस्वरूपे कारकत्वेऽपि तद्गतस्य कारकत्वाभावात् ज्ञापकत्वमेव न कारकत्वम्। एष एव हि ज्ञापक-कारकयोर्भेदः—यत् ज्ञाने कारकत्वं तद्विषयश्च कारकत्वञ्चेति। तस्मादभावस्य ज्ञापकत्वमेव न कारकत्वम्।

---

१. तस्यापि च. ट. २. नुपपत्तिरिति. ट. ३. पतनप्रतिहेतुरिति. क. ४. मेव न तस्यैव. ट. ५ तस्य नित्य. ग. ६. योऽपि. क. योऽस्य. घ. ङ. ७. ते॥ मनु. घ.

यत्त्वभावस्याकारकत्वे भावस्यापि अकारकत्वप्रसङ्ग इति, तद्-युक्तम्; भावकारकत्वस्यावश्याश्रयणीयत्वात्। अन्यथा भावसामग्र्या-मसत्यामपि प्रतिबन्धकाभावमात्रेण कार्योत्पत्तिप्रसङ्गात्।

अथ भावसामग्र्यां सत्यामपि प्रतिबन्धके सति कार्यानुत्पत्तेः प्रतिबन्धकाभावोऽपि कारणमुच्यते। तन्न; भावसामग्र्यां सत्यां कार्या-नुत्पत्तेरसम्भवात्। यदि हि भावसामग्री परिपूर्येत भवत्येव कार्यमिति। तदेवं भावसामग्रीसम्भवे प्रतिबन्धकाभावापेक्षया कार्यविलम्बादर्शनात् प्रतिबन्धकाभावे सत्यपि भावसामग्र्यपेक्षया कार्यविलम्बदर्शनाच्चावश्याङ्गी-[1]करणीया भावसामग्र्येव कार्यहेतुः न प्रतिबन्धकाभाव इति।

यत् पुनरभावस्य कारकत्वनिवृत्तौ कार्यत्वमपि निवर्तेत इति, तद्युक्तम्; अनन्यथासिद्धमुद्गरपाताद्यन्वयव्यतिरेकानुविधायिनो[2] घटादि-प्रध्वंसस्य कार्यत्वावश्यंभावात्।

एतेनैतन्निरस्तम्[3]। यदाहुः—

'भावो यथा तथाभावः कारणं कार्यवन्मतम्।'

इति।

अतो यत् कारकं तद्भावरूपमेवेति भावत्वनिवृत्तौ कारकत्वमपि निवर्तेत इति न प्रतिबन्धकाभावस्य कारकत्वम्। अपि च प्रतिबन्धका-भावस्य कारकत्वे प्रतिबन्धकेतरेतराभावस्य प्रतिबन्धकसन्निधावपि सद्भावात् कार्योदयप्रसङ्गः। न च प्रतिबन्धकप्रागभावप्रध्वंसौ कारणम्; देशान्तरस्थेऽपि प्रतिबन्धके तयोरभावेन[4] कार्यानुदयप्रसङ्गात्।

---

१. श्याश्रयणीयः भाव. घ. २. अन्यथासिद्ध- ग. ३. तेन तन्निरस्तम्. क. ४. केतरयोरभावेन. ग. घ.

स्यादेतत्—प्रतिबन्धकसंसर्गाभावः कारणम्। न च प्रतिबन्धक-संसर्गे सत्यप्युत्तम्भकसन्निधौ कार्यदर्शनात् तस्याकारणत्वमिति वाच्यम्, असत्प्रतिपक्षस्य मण्यादिस्वरूपस्य प्रतिबन्धकत्वात्, उत्तम्भकसन्निधौ च सत्प्रतिपक्षकत्वात् मण्यादिस्वरूपस्य प्रतिबन्धकत्वमेव नास्तीति। तद्-युक्तम्; मण्यादौ प्रतिबन्धके संसृज्य वियुज्य पुनस्संसृष्टे कार्योदय-प्रसङ्गात्। अस्ति हि तदापि प्रथमसंसर्गप्रध्वंसः; तस्याविनाशित्वात्। न च सर्वेषामेव संसर्गाभावानां सम्भूय हेतुत्वम्; तथा सति संसर्गप्रध्वंसे विद्यमानेऽपि भाविसंसर्गान्तरप्रध्वंसानां भूतसंसर्गप्रागभावानाञ्च सम्भवा-भावेन कार्यानुदयप्रसङ्गात्। एतेनेतरेतराभावान्यत्वमप्येकाभावोऽपि प्रत्यूढो वेदितव्यः।

यत्पुनरुच्यते सर्वत्र प्रतिबन्धकसंसर्गप्रागभाव एव हेतुः। न चाग्न्युदाहरणे प्रतिबन्धकमण्यादौ संसृज्य वियुक्ते संसर्गप्रागभावाभावात् कार्यानुदयप्रसङ्गः; तत्र तेजोवयवानां विशरारुत्वेन प्रतिबन्धक-संसृष्टानामजनकत्वादन्येषाञ्च तत्कालोत्पन्नानां संसर्गप्रागभावसहकृताना-मेव जनकत्वादिति। तदयुक्तम्, स्थिरावयवानामेव तुलादीनां प्रति-बन्धकसन्निधौ कार्यमनुत्पादयतां पुनस्तदपगमे कार्योत्पाददर्शनात्। तथा चोपदिशन्ति—

कुलिशेन्द्रगतनाम वह्निर्मांसाद्यकाष्ठनम्।
शुद्धस्यापि तुलास्थस्य गुरुत्वं जनयेद्ध्रुवम्॥

वायुवेगमानि वायुस्थं[3] वहिरग्रानिलाहतम्[4]।
नाम कुर्यात्तुलास्थस्य प्रहतस्तु च लाघवम्॥

---

१ नासीसार. ष. २. अकमावोऽपि. क. ३. स्थं ह ४. वहिरग्र. ह.

[1] वह्न्यात्मा वदने न्यस्तो नाकारो रसनां दहन् ।
मन्त्रसिद्धिं हरेत् पुंसो वादे च प्रतिभां तथा ॥

[2] कुर्याद्वह्निशिखास्तस्य प्रतिवादिनि मूकताम् ।

इत्यादि ।

किञ्च प्रतिबन्धकसंसर्गाभावस्य हेतुत्वे संसृज्यमानेऽपि प्रतिबन्धके प्रतिबन्धकान्तरसंसर्गाभावात् कार्योदयप्रसङ्गः ।

यत्पुनरत्रोच्यते[3]—यथा यज्जातीये सति कार्यं जायत इत्यवधृते-[4]ऽर्थादसति न जायत इति स्थिते तज्जातीयस्य कस्यचित् सम्भवेऽपि तज्जातीयान्तरासम्भवान्न कार्यानुदयः, तथा यज्जातीये सति प्रतिबन्धो जायत इत्यवधृते अर्थादसति न जायत इति स्थिते तज्जातीयस्य कस्यचित् सम्भवेऽपि तज्जातीयान्तरासम्भवान्न प्रतिबन्धानुदयः स्यात्, अनुकूलप्रतिकूलयोरविशेषादिति । तदयुक्तम् । नहि सहकारिषु सत्सु बीजजातीये कस्मिंश्चिदपि सति कार्यं जायत इत्यवधृते बीजजातीयस्य कस्यचिदसम्भवमात्रेणाङ्कुरस्यासम्भवोऽप्यवधृतो भवति, तथा सति पूर्वावगतस्यैव विरोधात् । किन्तु बीजजातीये सर्वस्मिन्नेवासम्भवत्यङ्कुरस्यासम्भव[5] इति । तस्मात् सहकारिषु सत्सु तज्जातीयकारणमात्रादेव कार्योत्पत्तिः । कार्यनिवृत्तिस्तु तज्जातीयसमस्तकारणनिवृत्तेरेव ।

---

१. वन्ध्यात्मा वदने न्यस्तो कुमारा रसनान्दहिन्. ग. वह्न्यात्मवदने. ङ.
२ द्रुहिशिखोऽस्यस्य प्रतिवादिनि. ग द्रुहिशिखास्यस्था प्रतिवादिनि. घ. द्रुहिशिखोऽस्य प्रतिवादिनि. ङ. ३. ते यत्रावध्य. ग. ङ ४. धृतोऽर्थादसति. घ.
५. स्मिन्नेवासम्भव इत्यङ्कुर. क. ङ.

यत्पुनरेकप्रतिबन्धकसन्निधानादेव प्रतिबन्धसिद्धेः कार्यानुत्पत्तिरिति, तदयुक्तम्; एकप्रतिबन्धकसन्निधौ तदभावमात्रस्यैव प्रतिबन्धात्। सर्वो हि स्वाभावमेव प्रतिबध्नाति नाभावान्तरम्। अत एकबीजप्रतिबन्धेऽप्यप्रतिबद्धबीजान्तरसहितैः क्षितिपवनपायोभिरिवैकप्रतिबन्धकाभावप्रतिबन्धेऽप्यप्रतिबद्धप्रतिबन्धकाभावान्तरसहकृतैः कार्योत्पत्तिर्दुरपह्नवैव, ननु सिद्धापि शक्तिः किं प्रतिबन्धकेन नश्यति, अभिभूयते वा? न नश्यति; प्रतिबन्धकापगमे कार्यानुदयप्रसङ्गात्। नाभिभूयते; मूर्तिरहितायास्तदयोगादिति। तदयुक्तम्। द्वे किल भावानां शक्ती एका भावकारणजन्या इतरा तज्जन्येति। तत्र भावकारणजन्या सहजेत्युच्यते। सा च सहकारिषु सत्सु कार्योत्पत्तिविनाश्यां कार्यजननशक्तिमुत्पादयति। सा च कार्यमेव। एवञ्च यत्र कार्यजननशक्तिरुत्पन्नापि प्रतिबन्धकसन्निधेर्नश्यति तत्र कार्यानुदयेऽपि प्रतिबन्धकापगमे पुनरुत्पन्नया कार्यजननशक्त्यैवाविनष्टया कार्योत्पत्तिः। यत्र पुनरप्रतिबद्धबलेन प्रतिबन्धकेन सहजशक्तेरपि विनाशः तत्र कार्योदय एव पुनर्नास्तीति। एवमन्यत्राप्युदाहरणेषु साधारणासाधारणप्रमाणविरोधस्यार्थापत्तिसामग्रीत्वं द्रष्टव्यम्। अतोऽस्त्येवानुमानादर्थापत्तेर्भेदः॥

सा पुनर्द्वयी दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। ननु कथं श्रुतार्थापत्तिः? द्वारं द्वारमित्येकवाक्यार्थप्रतिपत्त्यर्थमुच्चरितेन द्वारपदेन प्रतिपन्नस्य द्वारपदार्थस्य सान्वयप्रतिपादनाय योग्येनाकाङ्क्षितेनावरणाद्यर्थान्तरेण

---

१. एपुनरनेक. ङ  २. बन्ध. ग. घ. ङ.  ३. प्यप्रतिबन्धकाभावान्तर. ग. प्यप्रतिबन्धप्रतिबन्धकाभावान्तर. घ.  ४. न्या। इतरा तज्जन्येति. ग.  ५. प्रिधौ. ग.  ६. बन्धबलेन. ग. ङ.  ७. र्द्वे. ङ.  ८. त्यर्थमनूचितेन, ङ.

श्रुतशब्दविपर्ययेणाश्रुतशब्दविपर्ययेण वा भवितव्यमिति साधारणप्रमाणस्य श्रुतशब्दविषयत्वेन तादृशार्थान्तराभावग्राहिणानुपलम्भेन सह विरोधादाकाङ्क्षितस्य योग्यस्यावरणाद्यर्थान्तरस्याश्रुतशब्दविषयत्वेन कल्पनं श्रुतार्थापत्तिरिति। नन्वेवं श्रुतार्थापत्तेर्दृष्टार्थापत्तेश्च को भेदः? श्रूयताम्—श्रुतार्थापत्तिः शब्दमेव कल्पयति नार्थमिति। ननु द्वारशब्दार्थस्यावरणाद्यर्थान्तरमन्तरेणानुपपत्तेः तत् कल्प्यं न तच्छब्दः। मैवम्; आवरणादिशब्दगम्येनैवावरणाद्यर्थेन विनानुपपत्तेः, शाब्दस्य शाब्देनैवान्वयात्। तथा च शब्दगम्यार्थे कल्प्ये लाघवाच्छब्द एव क्लृप्ते तद्गम्यस्यार्थस्य तत एव सिद्धेरर्थापत्तिपरिसयाच्छब्द एव कल्प्य इति।[1]

तदाह—

'प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणा।'[2]

इति। शाब्दस्य शाब्देनैवान्वय इति नियम एव कुत इति चेत् व्युत्पत्तिबलादिति ब्रूमः। तथा हि—व्युत्पित्सुर्गामानय गां बधानेति प्रयोजकवृद्धवाक्यश्रवणात्[3] प्रयोज्यवृद्धगतां गवानयनविषयां गोबन्धनविषयाञ्च शब्दकारणिकां धियमनुमाय तत्र तत्रावापोद्वापाभ्यां[4] गोमात्रे गोशब्दं, बन्धनमात्रे च बन्धनशब्दं, आनयनमात्रे चानयनशब्दं व्युत्पद्यमानस्तत्संसर्गात्मकवाक्यार्थप्रतिपत्तावुपायं चिन्तयन्नन्तरङ्गत्वादन्यथानुपक्षीणत्वाच्च पदार्थानामेव तदुपायत्वं बुध्यमानः प्रमाणान्तरप्रतिपन्नानामाकाङ्क्षादिमतामप्यश्वपदोपादिपदार्थानां बन्धनाद्यन्वयलक्षणवाक्या-

1. स्यन इति. घ. 2. धना. घ 3. कवाक्यश्रवणात्, घ. 4. पोद्वाराभ्यां. घ. 5. नयानेव्युत्पद्यमान. ग. ड.

र्थानुभवेऽशाभावाच्छाब्दस्य शाब्देनैवान्वय इति निश्चिनोति। ततश्च यत्र क्वचिदध्याहारादिष्व[1]परिपूर्णत्वाद्वाक्यार्थप्रतिपत्तेः[2]साकाङ्क्षत्वं तत्रापि शब्दमेव कल्पयति नार्थमात्रम्; क्लृप्तरूपापरित्यागात्। न चाव्युत्पन्नावेवाध्याहृतेन पदार्थमात्रेणाप्यन्वितो वाक्यार्थः प्रतीयत इति शक्यं वक्तुं, येनायं नियमो भज्येत। यथा[3] हि त्वन्मते तावदाद्यव्युत्पत्तावेव निधिमानेष[4] भूभाग इत्यादिषु कार्यपदाभावेऽपि प्रवृत्तिहेतुत्वेन कार्यबोधमनुमाय तदुपायं चिन्तयन् सन्निहितत्वविशेषमात्रेण[5] शब्दस्यैव तदुपायत्वमवधारयति, ततश्च द्वितीयादिषु व्युत्पत्तिषु क्रमेण कार्यपदाभावं जानानोऽपि न पूर्वावगतं कार्यपरत्वं परित्यजति किन्त्वध्याहारादिभिरपि[6] तदेव निर्वहति, तथैव प्रथमं परिपूर्णपदवाक्यश्रवणोऽपि[7] व्युत्पित्सुः प्रवृत्त्यादिभिर्वाक्यार्थधिय[8]मनुमाय प्रमाणान्तराप्रतिपन्नेषु बहुष्वन्येषु पदार्थेषु कथं द्विता एवैते पदार्थाः परस्परसंसर्गात्मकवाक्यार्थभावमनुभवन्तीति चिन्तयन् दृष्ट्वाच्छब्दप्रतिपन्नत्वमेव विशेषं इत्यवधारयति, ततश्च द्वितीयादिषु व्युत्पत्तिषु वाक्यार्थमपरिपूर्णं जानानोऽपि न पूर्वावगतं शब्दप्रतिपन्नस्यैव पदार्थस्य वाक्यार्थत्वमपजानीते[9], किन्तु शब्दं कल्पयित्वापि तन्निर्वहत्येव। यदि चैवमुत्तरत्राध्याहारादिषु क्वचिद्दर्शनमात्रेणैव शब्दप्रतिपन्नत्वं विहायार्थमात्रस्यैव वाक्यार्थानुप्रवेशित्वं क्रियते तर्हि प्रथमं कार्यान्विते शक्तिग्रहणेऽपि

---

१. दिषु परि. ग. २. साकाङ्क्षत्वं. घ. ङ. ३. तथा हि. घ. ङ. ४. प भाग. ङ. ५. तद्विशेष. ख. ग. ङ. ६. तमेव. ग. ७. वणेऽपि. क. ख. घ. ८. र्थविषयमनुमाय. ङ. ९. अपि बध्या ग.

कार्यैः[1] स्यात्पयामोदनमित्यादिषु[2] कार्यादर्शनात् कार्यान्वितत्वं विहायेतरा-न्वितमात्रे[3] शक्तिः कल्पनीया स्यात् ।

यद्युच्येत यथा शालिबीजे सत्येव शाल्यङ्कुरदर्शनान्न बीजमात्रे शक्तिः किं तु शालिबीजे। तथा कार्यान्वित एव शाब्दधीदर्शनात् कार्यान्वित एव शब्दस्य शक्तिर्नेतरान्वित इति, तर्हि शब्दप्रतिपन्नस्यैव वाक्यार्थानुप्रवेशदर्शनाच्छब्दप्रतिपन्न एव वाक्यार्थानुप्रवेशीति[4] सर्वं समानम् । करिष्यते चायमिर्बन्धो वाक्यार्थ[5]विचारावसरे सम्यगिति नेह प्रपञ्च्यते। अतः शाब्दस्य शाब्देनैवान्वय इति सिद्धम्। अत एव विकृतिषु सौर्यादिषु कर्मसन्निहिताग्न्यादित्वात् तत्पदनिवृत्ते[6]र्न्यूनसाकाङ्क्षमन्त्रपूरणाय पदस्यैवोहः क्रियते नार्थमात्रस्य। तथाध्याहारेऽपि 'इषेत्वे'त्यत्र 'छिनद्मी'ति पदमध्याह्रियते नार्थमात्रम् ।

यत्पुनः कैश्चिदुक्तं मन्त्रस्याभिधानिकं[7] प्रकाशनं कार्यं प्रकृतावधगतं तस्य शब्दकल्पनयैवोपपत्तेस्तत्कल्पनमिति । तन्न; 'निर्वपामि'पदेन 'पेत्वे'ति पदाभ्यां च सूर्यार्थेन[8] छिनद्म्यर्थेन[9] च विशिष्टस्य स्वार्थस्य पृथगुभय-त्राभिधानादाभिधानिकप्रकाशनस्यापि सिद्धेः । न च मन्त्रस्य स्वपद-प्रकाशितार्थाभिधानं कार्यमिति तदर्थं पदस्योह इति वाच्यम्; ऊहप्रवरना-मधेयानाममन्त्रत्वं इत्यूह्यपदस्यामन्त्रत्वस्थितेः । अतः शाब्दस्य शाब्दे-नैवान्वय इति नियममन्तरेण पदोहस्यैवानुपपत्तेस्स एव तत्र प्रमाणम्। तेषां[10] च प्रमाणग्राहिणीत्वेन सिद्धः श्रुतार्थापत्तेर्भेद इति सर्वमनाविलम् ॥

इत्यर्थापत्तिपरीक्षावादः समाप्तः ।

---

१. कार्येषु स्याम्पामोदन. ङ. २. न पचनीत्यादिषु कार्यदर्शनात्. घ. ३. तरयमात्रे. ग. ४. वेशीनि ग. क ग. वेशिनी ख. ङ. ५ र्थावसरे. ग. ६. वृत्तौ. घ. ७. क कार्यं. ग ८. न च विशिष्टस्य. घ ९. र्थे विशिष्टस्य ङ. १०. तथा च. क. ग. घ

## ॥ अथाभावः ॥

[अभावपरीक्षावादः]

अभावस्तु, दृश्यानुपलम्भजं सन्निकृष्टाभावज्ञानमभावो नाम[1]। नन्वभावो नाम तत्त्वान्तरं नास्ति यदवगमाय षष्ठप्रमाणमाद्रियते[2]। तन्न। इह भूतले घटो नास्ति अघटं भूतलमित्यादिविशिष्टभूतलव्यवहारस्य विशिष्टभूतलवेदनमूलत्वात् तद्विशेषणत्वेन तत्त्वान्तरमास्थेयमिति। न च वाच्यं भूतलवेदनादेव व्यवहार इति ; घटवत्यपि प्रसङ्गात्।

यत्तु तन्मात्रवेदनमभावव्यवहारसाधनमिति, तन्मन्दम् ; मात्रशब्दार्थस्य भूतलातिरेके तत्त्वान्तरत्वापत्तेः। अनतिरेके च घटसंसृष्टेऽपि प्रसङ्गात्। एतेन केवलशब्दार्थोऽप्यपास्तः। नन्वेकाकिभूतलज्ञानं नास्तीति व्यवहारसाधनम्। तन्न। किमिदमेकाकित्वं किमेकसंख्यायोगित्वं उत "एकाद्वाकिनिचासहाय" इति द्वितीयासहायत्वम्? पूर्वत्र घटवत्यपि प्रसङ्गः। उत्तरत्र द्वितीयासहायत्वम् इति तत्त्वान्तरत्वापत्तिः। न च वाच्यं घटविशिष्टाद्विविक्तभूतलबुद्धिः कारणमिति। विवेको हि भेदः। स च स्वरूपमितरेतराभावो वा धर्मान्तरं वा? स्वरूपञ्चेत्तस्य भूतलमात्रव्यवहारहेतुत्वेन नाभावविशिष्टभूतलव्यवहारहेतुत्वम्। न हि विशिष्टो व्यवहारस्तद्विषयेऽविशिष्ट इति न्याय्यम् ; विषयवैशिष्ट्यहेतुत्वात् व्यवहारवैशिष्ट्यस्य। किञ्च स्वरूपभेदपक्षे तत्कालोत्पन्नघटसंसृष्टे कस्मिंश्चिद्भूतले तदितरभूतलस्य स्वरूपमेव ततो भेद इति स्वरूपस्य च यावद्भूतलविनाशमवस्थानात् कदा

1. ज असन्निकृष्ट. क. जन्यासत्ति घ. 2. षष्ठं प्रमाणं. क. घ. 3. मार्ग आश्रीयते. घ. 4. त्वमिति तत्त्वान्तरत्वापत्तिः। न च म 5. त्वापत्ति. ङ. 6. च रूप. ङ. 7. विशिष्ट इति न्याय्यम्, ङ.

चिज्ज्ञातघटसंसर्गमपि तद्धटाभावव्यवहारं प्रसुवीत, स्वरूपस्यानपायात्। अथ तदानीं न तद्भिन्नं भूतलं, घटसंसृष्टत्वात् तर्हि न स्वरूपं भेदः, तस्य तदानीमप्यनपायात्। इतरेतराभावभेदस्त्वभावस्वीकारभयादेव नाभ्युपगतः। धर्मान्तरभेदपक्षेऽपि तस्य मात्रस्वरूपस्यादर्शनाद्मात्र एवेति घटसंसृष्टभूतलाद्विविक्तमिति रिक्तं वचः। एतेन तद्भिन्नतदितरतदन्यपक्षा निरस्ताः।

यत्तु संसृष्टभूतला[२]द्विभक्तं भूतलं कारणमिति, तत्र विभागस्य संयोगपू[३]र्वत्वान्नित्यसंयोगस्य कादयामभावाच्च तदभावो निर्विषयः स्यात्। किञ्च रसे रूपं नास्तीति व्यवहारो भ्रान्तः प्रसज्येत। न हि रसे रूपविभागो[४]ऽस्ति, गुणस्य गुणासमवायात्।

एतेन प्रतियोगिसंसृष्टात् परं पृथक्त्वाभावव्यवहारालम्बनमित्यपास्तम्; परत्वपृथक्त्वयोरपि गुणत्वात्। न च दृश्ये प्रतियोगिनि भूतलोपलम्भनं कारणम्; दृश्यमाने प्रतियोगिनि दृश्यत्वानपायात्। न च स्मर्यमाण इति विशेषणीयम्; दृश्यमानस्य तत्समीपनिषेधाभावप्रसङ्गात्। न च प्रतियोगिनि जिघृक्षित इति वाच्यम्; देशान्तरागते प्रिये पुत्रादौ जिघृक्षानुपरमात्तदभावः प्रसजतीति। न च देशान्तरस्थे प्रतियोगिनि देशान्तरज्ञानमभावव्यवहारकारणम्; शाबलेयस्थिते गोत्वे बाहुलेयोपलम्भेऽस्य गोत्वाभावव्यवहारकारणत्वप्रसङ्गात्। ननु भूतलज्ञानमेवाभावव्यवहारसाधनम्। न च घटवति प्रसङ्गः, घटेन व्यवहारशक्तिप्रतिबन्धात्।

---

१. यस्य दर्शनात्. क. ख. २. द्विविभक्तभूतल. ग. ३. पूर्वत्वात्. ख. ४. रिक्त, गुणे गुणासमवायात्. ख. ५. तदभावव्यव. ग. ६. व्यभिचारात्. क. ख. ङ. ७. व्यस्य. क. व्यवहार. ग. घ.

चन्न। सर्वस्य हि ज्ञानस्य स्वविषयव्यवहारशक्तिरेका। सा यदि भूतल-ज्ञानस्य घटसंसृष्टे घटेन प्रतिबद्धा तर्हि भूतलव्यवहारमपि तत्र न प्रसुवीत; स्वविषयव्यवहारशक्तेरेकत्वात् तस्याश्च प्रतिबद्धत्वात्। न च वाच्यं सर्वमेव ज्ञानं स्वविषयव्यवहारे प्रतियोग्यभावव्यवहारे च शक्तं, तत्र प्रतियोगिसंसृष्टे प्रतियोग्यभावव्यवहारशक्तिर्नश्यति, इतरा तु स्वकार्यं करोतीति; सर्वज्ञानस्य विशिष्टविषयत्वेन विशिष्टव्यवहारकत्वनियमात्। भूतलज्ञानस्य चाविशिष्टभूतलविषयत्वादभावाविशिष्टभूतलव्यवहारशक्तिः प्रमाणबाधितेति।

किञ्चायं प्रतिबन्धः शक्तेः कार्योन्मुख्यविघातः स्वरूपध्वंसो वा। सर्वथा नाभावादन्यस्सुनिरूप इति मास्तु तत्त्वान्तरम्।

यत्तु यत्राभावधीस्तत्र संसृष्टधीस्वरूपधीर्नास्ति स्वरूपधीस्त्वस्तीति द्वयी स्वरूपधीरास्थेया। तत्र संसृष्टस्वरूपधीतोऽन्या स्वरूपधीस्तन्मात्रधीः तद्वीवेद्यं च तन्मात्रमिति न मेयान्तरमिति। तदयुक्तम्; यतः—

> उपलक्षणभावे वां प्रसङ्गो घटवत्यपि।
> मृतसञ्जीवनी वा स्याद् धीविशेषे विशेषणे॥

अत्रेदं परः प्रष्टव्यः—किमभावव्यवहारविषयस्य भूतलस्य संसृष्टधी-स्वरूपधीतो[१२] विलक्षणस्वरूपधीवेद्यत्वमुपलक्षणं विशेषणं वा? उपलक्षणत्वे स्वरूपधीवेद्यस्य पुनः प्रतियोगिसंसर्गेऽप्यभावव्यवहारहेतुत्वं भवेत्। विशे-

---

१. तले ज्ञानस्य. घ. ङ. २. बन्धत्वात्. ग. ङ. ३. तस्या तु. ग. ४. स्य चाविशिष्ट. घ. ५. तले शक्तिः. ग. ६. पप्रध्वंसो वा. ग. ७ द्दस्वरूप-धीर्नास्ति. ग. ङ. द्वधीः स्वरूपाधीः नास्ति. घ. ८. त्र स्वरूपधीतोऽन्या. ङ. ९. वेद्यस्वतन्मात्रमिति. ग. ङ. १०. वे वाप्रसङ्गो. ङ. ११. इ प्रष्टव्यम्. ङ. १२. इस्वरूपधीतो. ग. घ. १३. धीत्वमुपलक्षणं. ग.

पणत्वे तु भूतलस्य विलक्षणधीवेद्यत्वं तद्विनाशे नश्यतीति भावाभावयो-रेकनिषेधस्येतरविधिरूपत्वादनन्तरक्षणे प्रतियोगिसद्भावप्रसङ्ग इति मृत-सञ्जीवनीचोद्यं दुर्वारम्। किञ्च विलक्षणधीवेद्यत्वस्य भूतलाविशेषणत्वे तदप्यवगन्तव्यं विशिष्टव्यवहाराय, न च तदवगमोपायं पश्यामः।

यत्तु विलक्षणस्वरूपधीः स्वप्रकाशा, अतस्सा भूतलस्वरूपञ्च वेद्यं, स्वप्रकाशत्वात् न मानान्तरापेक्षेति विषयवैशिष्ट्यात् विशिष्टविषय-व्यवहारसिद्धिरिति[1]। तन्न। सर्वं हि वेदनं वेदनतयैव स्वप्रकाशं न वेद्यतया[2]। अतः कथं वेद्यकोटिनिविष्टभूतलस्वरूपविशेषणीभूतनत्वं[3] तस्य? किञ्च संसृष्टस्वरूपबुद्धावपि स्वरूपबुद्धित्वमस्त्येव, विशेषणेन स्वरूपस्यातिरस्का-रात्[4]। इति विशिष्टस्वरूपासिद्धावपि स्वरूपबुद्धित्वं स्वप्रकाशत्वञ्चास्तीति घटवत्यपि प्रसङ्गः[5]।

यत्पुनर्जिज्ञासापेक्षं भावस्वरूपवेदनं नास्तीति व्यवहारहेतुरिति। तन्न; तादृशस्वरूपवेदनस्यैव सूक्ष्मकण्टकाद्यभावव्यवहारहेतुत्वव्यभिचारात् स्वरूपवेदनस्य विषयातिरेके तत्त्वान्तरत्वापत्तेः[6]। अनतिरेके विशिष्ट-व्यवहारं प्रत्यकारणत्वाच्च निराकर्तव्यम्।

नन्वभावज्ञानसाधनं[7] यादृशभूतलज्ञानं तदेवाभावव्यवहारसाधन-मस्तु, किमभावज्ञानेन। तन्न, अस्मन्मते तु भूतलज्ञानस्यैवाभावज्ञानकारण-त्वात्[8]। न च घटवति प्रसङ्गः; तत्सहकारिणो योग्यानुपलम्भस्या-भावात्।

---

१. ष्टव्यवहारसिद्धिरिति. क. घ. ङ. २. न न वेद्यतया. क. ३. ष्टवि-शिष्टभूतल. ङ. ४. ति स्वरात्. ग. ५. वति प्रसङ्गः. घ. ६. न्तरापत्तेः. क. ७. वसाधनज्ञानं. घ. ८. ज्ञाने कारणत्वात्. ग.

यत्पुनरनुपलम्भस्य ज्ञाततया हेतुत्वेऽनवस्थानात् सत्तया हेतुत्वं वाच्यम् । तथा च प्रातश्चत्वरे मैत्रमनुपलभ्य मध्याह्ने चोपलभ्य सायंसमये प्रातरिह मैत्रो नासीदिति ज्ञानमुदेति तदा प्रातःकालीनोपलम्भाभावस्य मध्याह्नोपलम्भेन नाशितत्वाद्योग्यस्मृत्यनुदयस्य मध्याह्नानुभवजनितसंस्कारजसायंकालीनस्मृतिविनष्टत्वादनुपलम्भो न सत्तयापि कारणमिति, तन्न; मैत्रमात्रस्मृत्युदयेऽपि प्रातःकालविशिष्टमैत्रविषयस्मृत्यनुदयस्य तदानीमपि भावात् तज्जन्यत्वाच्च प्रातरिह मैत्रो नासीदिति ज्ञानस्य । किञ्च तन्मात्रमेघवादिनोऽप्येवंविधे स्थले तन्मात्राभावगमाय योग्यस्मृत्यनुदयस्यैव हेतुत्वं वाच्यम् । न च तस्य लिङ्गत्वेन हेतुत्वम्; अज्ञातस्य तस्यानुपपत्तेः । न च तस्य मानसत्वम्; स्मरणस्यैवामानसत्वात् । न ह्यभावमात्राभावो मानसो भवति । अतो बलात् सत्तयैव योग्यस्मृत्यनुदयस्य कारणत्वं वाच्यम् । अथ तु वैय्यत्याच्चन्मात्रं प्रातरेवावगतं सायं स्मर्यत इति पक्षः, तर्ह्यभावोऽपि प्रातरवगतस्सायं स्मर्यत इत्यस्तु । अथ प्रातः प्रतियोगिस्मृत्यभावात् कथं प्रतियोगिनिरूपणनिरूप्यस्याभावस्यावगमः ? तर्हि तन्मात्रस्यापि तत्स्वभावत्वात् प्रातरनवगम एव । अथ न तन्मात्रस्यायं स्वभावः किन्तु तद्व्यवहारस्येति, तर्ह्यभावस्यापि नायं स्वभावः किन्तु तद्व्यवहारस्येति सर्वमनभिनिविष्टचेतसां समानमेव ।

यत्तु प्रातःकालविशिष्टमैत्रानुभवाभावे संस्काराभावात् स्मृतियोग्यत्वं नास्तीति । तन्न; तुल्योपलम्भयोग्यवस्त्वन्तरेषु स्मर्यमाणेषु संस्कारातिरिक्तसुस्मूर्षादिकारणान्तरसाकल्यलक्षणत्वात् स्मृतियोग्यत्वस्य ।

---

१. तत्र प्रातःकालीन. घ. २. भावात् वादिनोऽपि. ध. ३. मतः. घ.
४. स्वगम. ग. ५. स्यापि. ग. ६. वेन. ग. ङ.

यत्तु स्मृत्यनुदयेन प्रमाणोदय इति, तत्र प्रमाणशब्दस्य यथार्थ-ज्ञानोपलक्षणत्वान्न विरोध इति सिद्धं तत्त्वान्तरमभाव इति।

न चास्य प्रत्यक्षत्वम्; प्रमाणाभावात्। नन्वनन्यथासिद्धेन्द्रियान्वयव्यतिरेकानुविधानादैन्द्रियकत्वमस्तु। तन्न; विषयतदधीनेतरकारण-साकल्यलक्षणयोग्यत्वायेन्द्रियस्यान्यथासिद्धत्वात्। ननु तर्हि रूपादि-ज्ञानेऽपि तादृशयोग्यत्वाय चक्षुरुपक्षीणमिति न कश्चिच्चक्षुः कारणं स्यात्। तन्न; तत्र हि रूपाद्युपलब्धिकारणत्वेनैव चक्षुः क्लृप्तमिति यदन्तरा कारणानां मिथः प्रत्यासत्तियोग्यत्वापादनं तत्तस्यावान्तरव्यापार इति शक्यावगमम्। इह तु चक्षुरवान्तरव्यापारत्वावगमस्य चक्षुःकारणत्वावगम-पूर्वकत्वात् अभावज्ञाने च चक्षुःकारणत्वमेवाक्लृप्तमिति तत्र योग्य-त्वापादनस्य चक्षुरवान्तरव्यापारत्वायोगात्तेनैवोपक्षीणं चक्षुरित्यव-गमात्।

एतेन निर्विकल्पक[4]ज्ञानोपक्षीणत्वादिन्द्रियस्य न सविकल्पकाना-[5]मैन्द्रियकत्वमित्येतन्निरस्तम्; सविकल्पकानामप्यपरोक्षत्वेन कारणानन्त-रानुपलम्भे[8] चेन्द्रियकारणत्वे क्लृप्ते तदुपयोगित्वेन निर्विकल्पकस्येन्द्रिय-व्यापारत्वावगमात् न निर्विकल्पक एवोपक्षीणमिति। तस्मादत्रेन्द्रिय-कारणत्वावगमपूर्वकं विषयतदधीनेतरकारणं मिथः प्रत्यासत्तिरूपयोग्य-

---

१. दयो प्रमाणोदय. क. २. स्य याथार्थ्यज्ञानोप., ग. ३. रत्वाव-गमस्य. क ४. ल्पज्ञानोप. ग. ल्पकोपक्षीण घ. ५. ल्पकमैन्द्रियक-मित्यपास्तम्. घ. ६. यत्वमित्येतन्निरस्तम्. ङ. ७. नामित्यपरोक्षत्वेन. ङ. ८. म्भेन च. घ. ९. कस्यैन्द्रियस्य व्यापारत्वावगमान्निर्विकल्पकमेवोपक्षीणमिति. ग.

त्वस्येन्द्रियान्तरव्यापारत्वज्ञानं,[1] ततश्च तत्रानुपक्षीणत्वादनन्यथासिद्धे-[2]न्द्रियान्वयव्यतिरेकानुविधानादैन्द्रियकत्वमिति चक्रकं दुर्वारम्[3] ।

नन्वन्यत[4] एवाभावज्ञानस्यैन्द्रियकत्वमवगंस्यते— यदज्ञायमानकारणं तदैन्द्रियकं यथा रूपज्ञानं तथा चाभावज्ञानमिति । तन्न; स्मृतावनैकान्तिकत्वात् ।

यत्तु स्मृतिरपि मानसी संस्कारस्तु तत्प्रत्यासत्त्यावुपयुज्यत इति, तत् लिङ्गादेरपि मनःप्रत्यासत्त्युपयोगित्वेन सर्वज्ञानस्य मानसत्वप्रसङ्गात् निराकरणीयम् । न च स्मृतिव्यतिरिक्तत्वे सतीति विशेषणीयम्; सफलसपक्षानुगतस्य भावविषयत्वे सतीति विशेषणस्यापि दुर्वारत्वात् ।

यत्त्वपरोक्षप्रतीतित्वात्तदैन्द्रियकत्वम् । आपरोक्ष्यञ्च कार्यैकजात्ये कारणवैजात्यानुपपत्तेः ज्ञातानुपलम्भजस्य लैङ्गिकाभावज्ञानस्य परोक्षत्वादज्ञातानुपलम्भजस्यापरोक्ष्येण भवितव्यमिति, तन्न; अपरोक्षत्वेऽप्यवान्तरभेदेन कारणभेदोपपत्तेः[5] । अन्यथा चाक्षुषस्यापरोक्षत्वात् तदितरकारणस्य[6] स्पार्शनस्य[7] परोक्षत्वप्रसङ्गात् । अज्ञातकरणत्वाच्चापरोक्ष्यमैन्द्रियकत्वं वा निराकरणीयम् ।

यत्तु भावरूपकारणसहकृतस्यैव मनसः प्रवृत्तिरिति नियमादभावसहकृतस्य न प्रवृत्तिरिति, तदयुक्तम्; एवं सत्यनुमेयाभावेऽप्यभावज्ञानस्येन्द्रियेतरकारणत्वव्याप्तेरिह भूतले घटो नास्तीत्यनाकारणत्वमस-

---

१. स्येन्द्रियान्तरव्यापारत्वं ज्ञान ततश्च. ग. स्येन्द्रियान्वयव्यतिरेकानुविधानाद् . घ. २. ज्ञानपक्षीण. घ. ३. कं दुर्निवारम् . ग. ४. न्वत्र एव- ग ५. त् न घ. ग. ६. रोक्षत्वात्तदितर- ङ. ७. स्य स्पार्शनस्य. क. ग. ङ. ८. पद्यत. ङ. ग. घ

ङ्गेनार्थापत्तिविरुद्धत्वात्। ननु व्याप्तेर्विशेषाभावाद् इन्द्रियकारणत्वमर्थापत्तिविरुद्धमनुपलम्भकारणत्वञ्च विरुद्धमस्तु। तन्न; लाघवतो विशेषस्य वक्ष्यमाणत्वात्।

यानि चक्षुरभावग्राहकं इन्द्रियत्वात् मनोवत्, अभावः स्वप्रतियोगिसर्वप्रमाणात्यन्तसजातीयग्राह्यः अभावत्वादनुमेयाभाववत्, सत्ता सामान्यसमवायातिरिक्ता, असत्प्रत्ययात् परावृत्ता, जातित्वात् गोत्वादिवदिति साधनानि, तानि बाह्येन्द्रियस्य संयोगादित्रिविधसन्निकर्षवत एव तज्ज्ञानहेतुत्वव्याप्तेरभावे च तदभावाद्विशेषविरुद्धानि। अन्यथा चक्षुर्धर्माधर्मग्राहकम् इन्द्रियत्वाद् मनोवदित्यपि स्यात्।

किञ्च अभावः प्रत्यक्षो न भवति अभावत्वादनुमेयाभाववत्। सत्ता असत्प्रत्ययात् परावृत्ता जातित्वाद् गोत्ववदित्यादिना प्रथमस्य हेतोस्सप्रतिसाधनत्वं द्वितीयतृतीययोर्विरुद्धाव्यभिचारित्वञ्च द्रष्टव्यम्।

यत् पुनर्यद्भ्रमो यद्दोषमनुविधत्ते तत्तज्ज्ञानकारणं, अभावभ्रमश्चेन्द्रियदोषमनुविधत्ते ततस्यैन्द्रियकत्वमिति, तन्न; अभावज्ञानं प्रति योग्यत्वस्य ज्ञाततया हेतुत्वात् योग्यत्वभ्रमादेवाभावभ्रमः, नेन्द्रियदोषात् लिङ्गभ्रमादिव लैङ्गिकभ्रम इतीन्द्रियदोषानुविधायित्वस्यासिद्धत्वात्।

नन्वघटं भूतलमित्यत्रानुपलम्भस्य विशेषणीभूताभावमात्रावगम एव व्यापारावगमाद्विशिष्टावगमाय सम्प्रमाणानभ्युपगमात् सुरभिचन्दनादिष्विव विशेषणावगमसहायं चक्षुरेव विशिष्टावगमशक्तमित्याश्रयणीयम्।

---

१. सजननव्याप्तेरभावे. ग २. चक्षुरभावग्राहकमिन्द्रियत्वात्. क. ३. असत्प्रत्ययापरावृत्ता. घ. ४. सत्वात् परावृत्ता ग. ५ [illegible] द्रष्टव्यम्. ग. ६. गमाय सहाय [illegible]

ततश्च तदेवाभावविशिष्टेऽपि शक्तमस्तु किमन्तरा षष्ठप्रमाणेन? न च विशिष्टावगमस्य विशेषणावगमहेतुत्वात् तदर्थं प्रमाणान्तरं, यस्य विशेषणस्य प्रतियोगिव्यङ्ग्यस्वभावत्वं नास्ति तस्यैव दण्डादेर्विशिष्टज्ञानालम्बनत्वाय पृथक् ज्ञानापेक्षा। अभावस्य तु प्रतियोगिव्यङ्ग्यस्वभावस्याज्ञातस्यैव विशिष्टज्ञानालम्बनत्वमिति भेदात्। तस्मादिह भूतले घटो नास्तीत्यत्राभावज्ञानं केवलेन्द्रियाधीनं षष्ठप्रमाणाधीनं वेति विकल्पः प्राप्त इति। तदिदमनुपपन्नम्; एवं सति विशेष्यमात्रोपक्षीणस्य चक्षुरादेर्विशिष्टेऽपि शक्तिकल्पनाभयादभावस्य स्वप्रतियोगिव्यङ्ग्यस्वभावस्य विशिष्टज्ञानालम्बनत्वं विनैव विशिष्टव्यवहारहेतुत्वमिति विशिष्टज्ञानस्याप्यपलापप्रसङ्गात्। अथ विशिष्टव्यवहारस्य विशिष्टज्ञानहेतुत्वात् तस्मिन्नसति स न भवति तर्हि विशिष्टज्ञानस्य विशेषणज्ञानहेतुत्वात् तस्मिन्नसति तदपि न भवत्येवेति। तदेवमुक्तेन क्रमेण संग्रहश्लोकद्वयं निरस्तं वेदितव्यम्।

यदुक्तमुदयनेन—

> प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्।
> अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः॥
> प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः।
> अक्षाश्रयत्वाद्दोषाणामिन्द्रियादिविकल्पनात्॥

इति।

यत्पुनर्भावानुपलम्भस्याभावोपलम्भहेतुत्वे अभावानुपलम्भस्यापि भावोपलम्भहेतुत्वमिन्द्रियादेरहेतुत्वमिति, तन्न; अनुपलम्भमात्रादन्धादे-

---

१. त्वाच्च. ग. २. द्वे शक्ति०. ग. ३. नमूलत्वात्. क. ध. ङ. ४. स्वापरिलयात्. घ. ५. तत्कारण. ग. घ. ङ. ६. तु॥ यत्पुन०. घ. ७. यदभावानुपलम्भस्या०. क. ग.

रुभयत्रापि ज्ञानाभावात्। भावाभावयोरेकस्योपलम्भहेतुत्वेनेन्द्रियादिकं[1] परिकल्प्य तस्मिन् सत्यनुपलम्भादितरस्योपलम्भ इत्येकत्रेन्द्रियकारणत्वस्यावश्यकत्वे भावस्य रूपाद्यात्मना स्वतो भिन्नस्य भावरूपाच्चक्षुराद्यात्मना स्वतो भिन्नादवगम इत्यौचित्यात् कल्प्यम्। अभावस्य तु प्रतियोगिभिन्नाद्भावरूपादनुपलम्भादवगम इति।

यत्तु चक्षुरादेरभावोपलम्भेऽपि कारणत्वं नाङ्गीकृतं, तद् प्रमाणविरोधात्। तथाहि—इन्द्रियाणां प्राप्यकारित्वात् प्राप्तेश्च भावरूपत्वात् भावस्य चाभावे समवायानभ्युपगमात् विशेषणविशेष्यभावस्य च सम्बन्धान्तरपूर्वकत्वनियमादैन्द्रियकत्वं प्रमाणविरुद्धमेव।

न च वाच्यं भवत्पक्षे संयुक्तनदात्मकत्वेनाभावस्य सन्निकर्षोपपत्तेरैन्द्रियकत्वमस्तीति[2]; अनुपलम्भस्येन्द्रियैर्व्यापाराभावेऽप्यभावज्ञानं[3] प्रति स्वरूपेण कारणत्वस्यावश्याश्रयणीयत्वात्[4]। यथोक्तम्—

> स्वरूपमात्रं दृष्ट्वा च पश्चात् किञ्चित् स्मरन्नपि।
> तत्रान्यनास्तितां[5] पृष्टस्तदैव[6] प्रतिपद्यते॥

इति।

न चैतदनुपलम्भलिङ्गकमनुमानम्; अनुपलम्भस्यानुपलम्भान्तरलिङ्गत्वेनानवस्थापातात्[7], अज्ञातस्य चालिङ्गत्वात्[8]। न च मानसत्वम्; उपलम्भस्यैवामानसत्वात्। न हि तस्मिन्नमानसे तदभावस्य

1. त्वे इन्द्रियादिक० ग० घ  2. मस्तिवति० घ० छ०  3. यस्य व्या०० घ०
4. यत्वम्।० घ०  5. ०यनास्तिता पृष्ट,० ग०  6. दे॥ नचैत०० घ०
7. त्वेऽनवस्थान त्० ग० ङ  8. तस्यालिङ्गत्वात्० ग०  9. ०मस्या० मनसु ३।१ ग०

मानसत्वं युक्तम्। उपलम्भस्यामानसत्वञ्च प्रत्यक्षपरीक्षायामेव समर्थितम्। अतोऽवश्याश्रयणीयत्वादनुपलम्भहेतुत्वस्यान्यत्रापि तस्यैव हेतुत्वं कल्प्यम्।

किञ्च—

अनिर्विकल्पपूर्वत्वात् संयोगादेरसम्भवात्।
इन्द्रियस्यान्यथासिद्धेस्संबन्धान्तरकल्पनात्॥
प्रत्यक्षत्वमभावस्य विरुद्धं गौरवाय च।
इत्यनेवंविधस्यैव तत्र प्रामाण्यकल्पनम्॥

अभावस्य हि प्रतियोगिग्रहसापेक्षत्वेन निर्विकल्पकानर्हत्वात् संयोगादिसन्निकर्षानाधारत्वादिन्द्रियस्य च योग्यत्वापादन एवोपक्षीणत्वाद्विशेषणविशेष्यभावलक्षणसम्बन्धान्तरस्य च कल्प्यत्वादिन्द्रियस्याभावज्ञानहेतुत्वं प्रमाणविरुद्धमिति गौरवाय चेत्यनुपलम्भस्यैवान्यत्रानुपक्षीणस्य प्रमाणविरुद्धकल्पनान्तरविधुरस्याभावज्ञानहेतुत्वं कल्प्यम्। नन्वनुपलम्भस्य लिङ्गत्वेनैव गमकत्वान्न मानान्तरत्वम्। न; अनुपलम्भस्य लिङ्गत्वेनैव गमकत्वेऽज्ञातस्य लिङ्गत्वानुपपत्तेरनुपलम्भस्य चाभावरूपत्वेनानुपलम्भान्तरवेद्यत्वेनानवस्थाप्रसङ्गात्। तस्सिद्धमनुपलम्भष्षष्ठं प्रमाणान्तरमिति॥

अकृतेदश्चिदानन्दः प्रमाणानां परीक्षणम्।
खण्डनं परतर्काणामाचार्यमतमण्डनम्॥

इत्यभावपरीक्षावादः षष्ठविंशवादः
समाप्तः।

---

१. स्संयोगान्तर. ख. २. प्रमाणान्तराविरुद्धकल्पनान्तर. घ. ३. दत्वं कल्पनान्तर. ग. ४. त् सिद्धमनुपलम्भष्ष. ५. णम्। बन्धनं परतर्काणामाचार्यमतबन्धनम्. ग. णम्। खण्डनं परतर्काणामाचार्यमतखण्डनम्. घ. णम्। बन्धनं पर. ङ.

# [स्फोटवादः ॥]

अथ युक्त्या निराकर्तुं विमतानारभामहे[1] ।
पदस्वरूपसम्बन्धतन्नित्यत्वे च वादिनः ॥

तत्र प्रथमं पदस्वरूपं निरूपयामः। केचिदाहुः—उच्चीर्णवर्णमन्यदेव किञ्चिदेकं[2] तत्त्वं पदमिति। तदयुक्तम्। तथाहि—तत् खल्वेकं पदतत्त्वं[3] अनवयवं सावयवं वा स्यात्। न तावत् सावयवम्[4]; तदावेदकप्रमाणाभावात्। न च वर्णा एवावयवाः, तेषां विभुत्वेनावयविन्यूनपरिमाणत्वलक्षणावयवत्वविरोधात्। न चानवयवम्; वर्णव्यतिरिक्तस्य कस्यचिदनुपलम्भात्। नन्वनेकेषु वर्णेष्वेकं पदमिति एकस्य वस्तुनोऽनुभवाद्वर्णानाञ्च नानात्वेन तस्यानुपपत्तेस्तदतिरिक्तेन पदेन भवितव्यम्। मैवम्; अनेकेषामपि वर्णानामेकार्थप्रतिपत्तिहेतुत्वेनैकबुद्धिविषयत्वोपपत्तेः। नन्वेवमिदं[5] पदमस्यार्थस्य वाचकमिति पदत्वज्ञानाधीनमेकार्थप्रतिपत्तिहेतुत्वज्ञानं तदधीने च पदज्ञाने परस्पराश्रयत्वमापद्येतैव। मैवम्; अनवगतपदभावानामपि वर्णानामन्वयव्यतिरेकाभ्यामेकार्थप्रतिपत्तिहेतुभावस्य स्वध्यवसानत्वात्।

स्यादेतत्—वर्णेभ्योऽर्थप्रतीतिरेव न सम्भवति; तेषां प्रत्येकमहेतुत्वात् सहभावस्य चाभावात्। न हि क्रमवदुच्चारणाधीनज्ञानानां ज्ञाय-

1. हे। पेदस्वरूप. ग. 2. विशत्व. ग. 3. त्त्व विरवयव. ग. 4. म्, वेदकप्रमाणाभावात्. क. 5. न्वेकमिदं. ग. 6. प्रतीति. ग. क.

पानत्वेन सद्भावसम्भवी[1]। न च पूर्वपूर्ववर्णानुभवजनितसंस्कारसचिवो-[2]
ऽन्त्यो वर्णानुभवोऽर्थधीहेतुः; अन्यविषयेभ्यस्संस्कारेभ्योऽन्यत्र प्रत्ययो-[3]
त्पत्तेरनुपपत्तेः। नचैकस्मृतिसमारूढा वर्णा एवाभिधेयधीहेतव इति
साम्प्रतम्; अक्रमव्युत्क्रमाभिन्नक्रमेभ्योऽप्येकस्मृतिसमारोहिभ्यस्तेभ्योऽभि-
धेयधीप्रसङ्गात्। तदयुक्तम्; अन्यूनाधिकक्रमवदेकवक्त्रभिव्यक्तवर्णानुभव-
संस्कारजनितस्मरणविपरिवर्तिभ्यो वर्णेभ्य एवाभिधेयप्रत्ययस्योत्पत्तेः।
न च वर्णानामभिधेयप्रत्ययार्थमेवंविधत्वकल्पनं गौरवायेति साम्प्रतम्; एवं-
विधत्वस्य स्फोटाभिव्यक्तिपक्षेऽप्यवश्याङ्गीकरणीयत्वात्। न हि स्फोटा-
भिव्यक्तिरप्यनेवंविधेभ्यो वर्णेभ्यस्सम्भवतीति[4] प्रागुक्तदोषस्य स्फोटा-
भिव्यक्तिपक्षेऽपि प्रसङ्गात्। अतो येऽदृग्भ्यो यावद्भ्यः[5] स्फोटाभि-
व्यक्तिस्तेभ्यस्तावद्भ्यो[6]ऽभिधेयप्रत्ययो नानुपपन्नः।

यत् पुनः स्फोटस्य प्रत्यक्षत्वात्[7] तस्य प्रत्येकवर्णावभासत्वेऽपि स्फुटा-
स्फुटतमाद्यवभासितया न द्वितीयादीनामानर्थक्यम्[8]। अविधेयायमासस्पत्व-
प्रत्यक्षत्वात् तत्र च स्फुटादिविभागाभावा[9]द्द्वितीयादीनामानर्थक्यमिति[10], तद-
युक्तम्; स्फोटस्य प्रत्यक्षत्वेऽपि तस्याविभागत्वेन[11] किञ्चित् स्फुटं किञ्चिद्
अस्फुटमिति विभागाभावेन द्वितीयादिवैयर्थ्यस्य तादवस्थ्यात्। भवतु वा
स्फोटस्य सभागत्वं तथापि यथैकस्या एव प्रत्यक्षसामग्र्या भूयोभूयोऽभ्या-
साद्वभासवैशद्यम्[12], एवमेकस्यैव वर्णस्य भूयोभूयोऽभ्यासादवभास-

---

१. यसम्भवः ग.   २. योऽन्त्यैव वर्णानुभवोऽर्थधीहेतुः. ग.   ३. द्वयाश्रयणीय-त्वात्. घ.   ४. वति, प्रागुक्तदोषस्य ग. ङ.   ५. यावद्भ्यो. ग.   ६. स्ताव-द्भ्यस्तावद्भ्यो. ग.   ७. त् न तस्य. ग.   ८. मासिन द्वितीयादीनामानर्थक्यम्. ग. ङ.   ९. दिभागाभावात्. ग.   १०. क्यमेवेति. ङ.   ११. भागित्वेन. ग.   १२. म्, एकस्यैव. घ.

वैशद्यं न वर्णान्तरेभ्य इति स्यात्। एतेनाभिधेयप्रत्ययोत्पत्त्यनुपपत्तिरेव वर्णोच्चीर्णपदतत्त्वे[1] प्रमाणमित्यपास्तम्; वर्णेभ्य एव तदुपपत्तेः[2] प्रदर्शितत्वात्। किञ्च पदस्फोटस्याभिधेयप्रत्ययगम्यत्वे स्फोटज्ञानाधीनोऽभिधेयप्रत्ययः तदधीनं च स्फोटज्ञानमिति अन्योन्याश्रयत्वं[3] स्यात्। अतस्सिद्धमेकाभिधेयधीहेतुभूता वर्णा एव पदमिति॥

इति स्फोटवादोऽर्थविद्या
समाप्तः।

## [ईश्वरवादः॥]

कः पुनरत्र[4] पदार्थेन सम्बन्धः? प्रत्याय्यप्रत्यायकभाव इति ब्रूमः। न च वचनीयम् अगृहीतसङ्केतेरपि प्रत्यायकत्वप्रसङ्ग इति, यदालोक इव चक्षुषस्सङ्गतिग्रहोऽपि पदस्य ज्ञानजनने सहकारी। न च सङ्केतयितृसव्यपेक्षमेव सम्बन्धज्ञानम्, येन सम्बन्धस्यानित्यता भवेत्। किन्तु वृद्धव्यवहारादेव। न च वृद्धव्यवहारस्यापि मूलभूतसङ्केताभावेन प्रवृत्तिरिति वाच्यम्; पूर्वस्य पूर्वस्योत्तरमुत्तरं प्रति हेतुत्वेन वृद्धव्यवहारप्रवाहानादितयैव तदुपपत्तेः। न च देवदत्तादिशब्दाः सङ्केताधीनाभिधाना धीना इति गवादिशब्दैरपि तथा भवितव्यम्, तेषु सङ्केतयितुरनुपलम्भात्। न चेश्वर एव सङ्केतयिता; तत्सद्भावे प्रमाणाभावात्।

---

१ पदत्त्वे क भ ङ   २ सेर्दर्शितत्वात्. घ   ३ यत्र स्यात्. घ,
४. नत्वत्र ग   ५. त्सतोदयेत ग   ६. ताभिधानाधाना घ. ङ

नन्वस्त्येव तत्र प्रमाणम् । तथाहि—क्षित्यादिकं सकर्तृकं कार्यत्वात्, यदुक्तसाधनं तदुक्तसाध्यं यथा घटः तथाचेदं तस्मात्तथेति । यद्वा सर्वं कार्यं सर्ववित्कर्तृकं[1] कार्यत्वात् यदुक्तसाध्यं न भवति तदुक्तसाधनमपि न भवति यथाम्बरम्, न चेदं नोक्तसाधनं अतो नोक्तसाध्यमपीति । न चासिद्धं कार्यत्वम्; अपरमाणुत्वे सति मूर्तत्वान्मध्यमपरिमाणशालित्वाद्वा घटवदिति तत्सिद्धेः । न च कर्मद्वारा चेतनानामेव कर्तृत्वात् सिद्धसाध्यत्वम्, उपादानादीनां साक्षात्कारचिकीर्षाप्रयत्नाधाररूपत्वात् कर्तृत्वस्य, तस्य च पृथिव्यादिगोचरतया चेतनानामसम्भवात् । न चानुपजन्मसु दूर्वाङ्कुरादिषु व्यभिचारः; तेषां पक्षीकरणात् । न च योग्यानुपलम्भविरोधः; परकर्तुः परं प्रति प्रत्यक्षानर्हत्वेन सत्यप्यनुपलम्भमात्रे योग्यानुपलम्भस्यासिद्धेरिति ।

तदिदमनुपपन्नम् । तथा हि—

सोपाधिकत्वाद्व्याप्तेर्विशेषणविरोधतः ।
प्रतिहेतुविरुद्धत्वात् कार्यत्वं नेष्टसाधनम् ॥

यद्भावाभावौ हि शरीरकर्तृत्वं[2] तदभावस्यानुमापयतः तत् किमपि विप्रतिपन्नकर्तृकेभ्यो[3] भूधरादिभ्यो व्यावृत्तं प्रसिद्धकर्तृकेषु प्रासादादाद्यादिष्वनुस्यूतं सन्निवेशविशेषादियोगित्वं भवद्भिरप्यङ्गीकरणीयम्; अन्यथा चिरोत्पन्नेषु प्रयोजनाभावादस्मृतशरीरकर्तृकेषु चैत्यादिषु शरीरकर्तृरहितेषु पर्वतादिषु च विशेषाभावाच्चैत्यादेरशरीरकर्तृत्वानुमानं पर्वता-

---

१. संज्ञकर्तृकं. क. सर्ववित्कर्तृपूर्वकं. ख. २ तृत्वं. ख. ३. भ्योऽप्रासादिभ्यो. ग. भ्यो प्रासादिभ्यो. ङ.

देरनद्भावानुमानं च निर्बीजं प्रसजेत्। अतो येन पर्वतादिभ्यो व्यावृत्तेन विशिष्टव्यवहारहेतुविशिष्टानुमानलिङ्गहेतुत्वेन घटादिमतिवादिभ्या-मवश्यमिष्टेन सन्निवेशविशेषादियोगित्वलक्षणेन विशेषेण चैत्यादे-रशरीरिकर्तृकत्वानुमानं तद्विशेषप्रयुक्तव्याप्त्युपजीवि कार्यत्वं न सकर्तृकत्वे प्रयोजकमिति।

यत्तु यथा कलमबीजाङ्कुरस्य कलमबीजं प्रत्येव प्रयोजकत्वं न बीजमात्रं प्रति तथा सन्निवेशविशेषादियोगित्वस्यापि शरीरिरूपकर्तृ-विशेषं प्रत्येव प्रयोजकत्वं न कर्तृमात्रं प्रतीति, तदयुक्तम्; सन्निवेशविशे-षादौ सपक्षव्यापकत्वेन सम्भवति कार्यत्वस्य तत्प्रयुक्तव्याप्त्युपजीवित्वं प्रति निश्चयाभावेऽपि सन्देहस्य दुर्वारत्वात्। न हि साध्यव्यापकविशेषा-न्तरदर्शनेऽपि नेदमस्य प्रयोजकं किन्त्वन्यदेवेति निर्णयस्य शपथादृते शरणमस्ति। न हि प्रयोजकत्वसन्देहेऽपि गमकत्वम्। न हि धूमस्य वान्यस्य वाग्निं प्रति प्रयोजकत्वमिति सन्दिहानो धूमेन वह्निमनुमातुमलम्। अतः सन्दिग्धप्रयोजकत्वादप्रयोजकत्वाद्वा न कार्यत्वं सकर्तृकत्वसाधनाय प्रभवति।

यत्तु कलमाङ्कुरस्येत्यादि, तत्र कलमाङ्कुरं विहायाङ्कुरान्तरमपि जनयद्बीजान्तरं दृष्टमिति बीजमात्रस्य कलमाङ्कुरव्यभिचारात् न कल-माङ्कुरं बीजमात्रप्रयोजकम् अपि त्वङ्कुरमात्रमेवेति निश्चीयते। प्रकृते तु न तथा व्यभिचार इति यत्किञ्चिदेतत्।

---

१ स्वरूपकर्तृत्वे ह  २ जनमिति ह  ३ प्रति, तदयुक्तम् ह
४ दुर्वार बीज ग ह  ५ अप्रयोजकमेवेति निश्चीयते ह

अपि च विशेषविरुद्धं कार्यत्वम् । तथा हि— ज्ञानचिकीर्षाप्रयत्न-समवायित्वं कर्तृत्वमभिमतम् । तच्च शरीरसम्बन्धात् प्रागूर्ध्वं वा शरीर-सम्बन्धेतरदेशे वा न दृष्टमिति शरीरहेतुकमेव ; तद्भावाभावनिबन्धनत्वात् कार्यकारणभावस्य, अन्यथा बीजादेरप्यङ्कुरादिकं प्रत्यकारणत्वप्रसङ्गात् । अतस्सर्वत्र शरीरसम्बन्धस्यैव ज्ञानचिकीर्षाप्रयत्नसमवायित्वलक्षणकर्तृत्व-दर्शनात् कर्तृत्वं शरीरिण एव नाशरीरिण इति स्थितम् । एतेन शरीर-व्यापारे व्यापार्यशरीरस्य करणत्वाभावात् कर्तुश्शरीरमव्यापकमित्यपा-स्तम् ; करणत्वाभावेऽपि कारणत्वस्य दुर्वारत्वात् । न हि शरीरसमवेतो व्यापारः स्वसमवायिकारणं शरीरमतिपत्य भवतीति सम्भवति । अतो यत्र यस्य कर्तृत्वं तत्र तच्छरीरस्य कारणत्वमवश्यमङ्गीकरणीयम् । न च कर्तृशरीरसम्बन्धे जन्यज्ञानेमुपाधिरिति वाच्यम् ; तस्य साधनव्यापक-त्वेनोपाधित्वानुपपत्तेः । एतेन धर्माधर्माश्रयत्वादीनामप्युपाधिभावो निरस्तः । तथा च कर्तृत्वस्य शरीरित्वं व्यापकमिति कार्यत्वं क्षित्यादौ सकर्तृकत्वं साधयत् स्वसाध्यविरुद्धमकर्तृकत्वमिव स्वसाध्यव्यापक-शरीरित्वविरुद्धमशरीरित्वमपि कर्तुः प्रतिक्षिपति । न च स्वसाध्यविरुद्ध-मेव प्रतिक्षिपति न स्वसाध्यव्यापकविरुद्धमिति वाच्यम् ; स्वसाध्य-विरुद्धस्येव स्वसाध्यव्यापकविरुद्धस्यापि स्वविरोधित्वात् तत्प्रयुक्तत्वाच्च प्रतिक्षेपस्य । अन्यथा कार्यत्वं स्वविरुद्धमकार्यत्वमेव प्रतिक्षिपति न साध्य-विरुद्धमकर्तृकत्वमिति क्षित्यादेरकर्तृकत्वमप्रतिक्षिप्तं प्रसज्येत । अतः

---

१. तन्नियमनिबन्धनत्वात्. ग. २. व्यन्तरस्येर. घ. ३. रवश्यमङ्गीकरणीयम् ।. घ. ४. व्यन्य तच्छरीरत्वमुपाधिरिति. ग. व्यन्येन जन्य. घ. ५. नत्वमुपाधिरिति. क. घ. ६. यद्द शरीरित. घ. ङ.

कार्यत्वं सकर्तृकत्वेन व्याप्तं क्षित्यादौ तत्साधनाय प्रवृत्तं तद्व्यापकशरीरिकर्तृकत्वविरोध्यशरीरिकर्तृकत्वमप्यप्रतिक्षिप्य तत् साधयितुमशक्तं योग्यानुपलम्भविरोधाच्छरीरिकर्तृकत्वमादायापि साधयितुमसमर्थं निरुद्धाशेषविशेषत्वेन सामान्यस्यापि निरोधात् सकर्तृकत्वमसाधयदात्मनस्सकर्तृकत्वस्य प्राचीनसम्बन्धाध्यवसानमेव विघटयति— नाहं सकर्तृकत्वेन व्याप्तमिति। न च वाच्यं कथं कर्तृविशेषनिरोधे कर्तृसामान्यस्यापि निरोध इति; कर्तृसामान्यस्य कर्तृविशेषमनन्तर्भाव्य क्षित्यादिविशेषणत्वानुपपत्तेः। न हि कर्तृविशेषमनुपधाय कर्तृसामान्येन क्षित्यादिकं सम्बद्धं प्रत्येतुं शक्यम्; तथा सति कर्तृसामान्येन स्वतस्सम्बन्धिनः क्षित्यादेरपि कर्तृत्वप्रसङ्गात्। अतस्सकलविशेषनिरोधे सामान्यस्यापि निरोध एवेति।

स्यादेतत्— एकव्याप्तिविघटनेन तदितरव्याप्तिसिद्धौ नोभयविघटनमुचितम्। तथा च सकर्तृकत्वशरीरिकर्तृकत्वयोरेव व्याप्तिविघटनात् कार्यत्वसकर्तृकत्वयोर्व्याप्तिः सिध्यतीति। तदयुक्तम्; विशेषाभावात्। न हि कार्यत्वसकर्तृकत्वयोर्व्याप्तेः सकर्तृकत्वशरीरिकर्तृकत्वयोर्व्याप्तेश्च विशेषमुपलभामहे, येनेयमेव बाध्या नेयमित्युच्यते।

यत्तु कार्यस्य कर्तृशून्यस्याकस्मिकत्वप्रसङ्ग इत्यादि विपक्षे बाधकमेव विशेष इति, तदिदानीमेव निराकरिष्यामः। एतेन यदभिदधाति—

---

१. त्व साधयदात्मन. ग. ह. २. त्मना सकर्तृकत्वस्य ह. ३. पविरोध. ग. ह. ४. षेण कर्तृ. ह. ५. पि विरोध. ग. ६. पविरोधे. ग. ७. पि विरोध एवेति. ग.

कार्यत्वेन पृथिव्यादौ शरीरिकर्तृकत्वं प्राप्तमप्राप्तं वा? यदि प्राप्तं सिद्धं तर्हि सकर्तृकत्वम्; विशेषविधौ सामान्यस्यावश्यकत्वात्। अथाप्राप्तं कथं तर्हि स्वविरुद्धमशरीरिकर्तृकत्वं प्रतिक्षिपेदिति, तन्निरस्तम्; उक्तेन क्रमेण पृथिव्यादिगतकार्यत्वप्रमितेरेव[1] स्वपरिपन्थित्वेन प्राचीनव्याप्ति-विघटनहेतुत्वात्। अतो विशेषविरुद्धं कार्यत्वम्। न च असिद्ध्याद्यनन्त-र्गतत्वेन विशेषविरोधो न दूषणम्; असिद्ध्यादिपक्षकस्यानुमानोत्पत्ति-प्रतिबन्धेनैव दूषणत्वात्, तस्य च प्रकृतेऽपि व्याप्तिविघटनद्वारेण प्राप्तत्वा-दसिद्ध्यादिदूषणान्तर्भावेऽनन्तर्भावे वा दूषणत्वानपायात्। अन्यथा भव-तामपि पृथिव्यादिकं धर्माधर्मरागद्वेषाश्रयकिञ्चिज्ज्ञानचेतनकर्तृकं कार्य-त्वाद् घटवदिति पार्श्वस्थप्रणीते कः परिहारः? न हि ईश्वरानुमानादमुष्य मनागपि विशेषमुपलभामहे। तत्सिद्धं विशेषविरोधो[2] न दूषणमिति। नन्वेवं सामान्यतो दृष्टानुमानाय दत्तो जलाञ्जलिः। दीयतां कामम्। न हि सङ्गतिग्रहणमापेक्षं लिङ्गमदृष्टचरतया दृष्टचरपरिपन्थित्वेन च सङ्गति-शून्यमनुमापयितुमलम्। अग्न्यनुमानेऽपि पूर्वदृष्टदद्रोष्णभास्वरत्वादिरूपा-लिङ्गितत्वेन तद्विरुद्धानुष्णाभास्वरत्वादिरूपतिरस्कारेणैव वह्निसिध्यति। देशकालौ तु न साध्यभूतवह्निस्वरूपानुप्रविष्टाविति तद्भेदेऽपि[3] न साध्यभूत-वह्निभेदः। तस्मात् सर्वत्र[4] पूर्वपरिचितरूपेणैव साध्यसिद्धिः नापरिचित-रूपेण परिचितपरिपन्थिना वा रूपेणेति।

कथं तर्हि सङ्गतिग्रहणशून्यस्यातीन्द्रियत्वेन चक्षुरादिसिद्धिः?

---

१. प्रतीतेरेव. ग. २. धो दूषणमिति. क. ख. ३. पि साध्यभूत. ग. घ. ४. यत्र परिचित. ङ.

उच्यते—रूपप्रतिपत्तिलक्षणं कार्यं[1] कारणव्याप्तं कारणं गमयति। तदैन्द्रियककारणाव्यभिचारित्वेनाकारणत्वग्राहिणा प्रमाणेन[2] प्रतिहन्यते। तदनयोर्विरोधादविरोधायातीन्द्रियमपि कारणं कल्प्यम्। तच्च दर्पणादौ प्रतिहतस्य परावृत्त्य ग्रहणं मूलदेशाविनाभाविनश्वरत्वं[3] रूपप्रतिपत्तिहेतुत्वमित्यादि तेजोऽन्तरसाधारणधर्मदृष्टोपपत्त्यर्थं[4] वस्तुवादैकनाथः एव ज्यायानिति लाघवपक्षपातिन्यायोपपत्त्या तेजोऽन्तरसाधारणप्रत्यक्षत्वरूपव्यापकविशेषविरोधेनौष्ण्यप्रत्यक्षत्वं[5] परिकल्प्य तैजसमिति निर्णीयते। सर्वत्र चैवंजातीयकेष्वर्थापत्तिरेव शरणमिति द्रष्टव्यम्। नन्वेवं[6] कार्यस्य कारणमात्रेणापि कथं व्याप्तिः? यत् कारणं तद् दृश्यमेवेति कारणत्वव्यापकदृश्यत्वविरोधे कारणत्वमेव प्रतिक्षिप्यत इति, तदयुक्तम्। एवं हि यत् कार्यं तत् कारणवत्, यच्च कारणं तद् दृश्यमेवेति व्याप्तिद्वयम्। तदनयोरदृश्यकारणेषु कार्येषु परस्परविरोधात् किं कार्यं कारणवदिति व्याप्तिर्भज्यताम्, उत कारणं दृश्यमेवेति व्याप्तिः उतस्विदुभयमपि परस्परविप्रतिहततयेति विमर्शे कार्यस्य कारणशून्यस्याकस्मिकत्वेन[7] नित्यं सत्त्वमसत्त्वं वा भवेदिति कारणाभावप्रतिक्षेपिप्रमाणान्तरानुरोधेन[8] कार्यं कारणवदिति व्याप्तिर्दृढ्यते तदितरा भज्यते। तदेवं साध्यव्यापकतया सपक्षे दृष्टोऽपि विशेषो[9] यत्र प्रमाणान्तरं नोपरुणद्धि तत्र स्वनिरूढां[10] व्याप्तिं विघटयति। यत्र तूपरुणद्धि तत्र स्वयमेव[11] लीयत इति विशेषः। न च दृश्यत्वस्य कारणव्यापकत्व इव शरीरित्वस्यापि कर्तृव्यापकत्वे निश्चितबाधकान्तरमस्ति;

---

१. कार्यंकारण. ग. ङ. २. न विहन्यते. घ नाप्रतिहन्यते. ङ. ३. शानश्वरत्वं. घ. ४ णदृष्टोपपत्त्यर्थं. घ. ५. नाप्रत्यक्षत्व ग. ६. नैवं घ. ७. धैकारणशून्य. ङ. ८. न्तरविरोधेन. घ ९. पक्षदृष्टो विशेषो ग. पक्षदृष्टोऽपि विशेषो. ङ. १०. स्वनियता. घ. ११. न दृश्यत इति. क. घ.

येन व्यापकतयावधृतमपि शरीरित्वविशेषमव्यापकीकृत्य[1] कर्तृमात्रानुमान-
मुदीयात् । नन्वस्ति बाधकं कार्यस्य कर्तृशून्यस्याकस्मिकत्वप्रसङ्ग इति ।
तन्न; कार्यस्य कारणमात्रादेवोपपत्तेः[2] । न च कार्यमात्रं प्रति कर्तुरपि
कारणत्वात् समवाय्यसमवायिनिमित्तानामन्यतम(तमा)भाव इव कर्त्रभावे-
ऽपि कार्यत्वानुपपत्तिरिति वाच्यम्; कार्यमात्रं प्रति कर्तुः कारणत्वासिद्धेः ।
न च पूर्वोक्तसन्निवेशविशेषयोगिनि पटादौ कर्तुः कारणत्वदर्शनात् कार्यमात्रं
प्रत्यपि तस्य कारणत्वम्; तथा सति कार्यविशेषप्रयुक्तानामपि कारण-
विशेषाणां कार्यमात्रं प्रति हेतुत्वे पटादिषु तत्तत्कार्यहेतुभूतपरस्परविलक्षण-
प्राणिकृततज्ज्ञानचिकीर्षाप्रयत्नस्यैव कर्तुः कारणत्वं दृष्टमिति क्षित्यादावपि
तादृश एव कर्तुः कारणत्वं प्रसज्येत् । अथ दृष्टान्ते तादृशकर्तुरेव कारणत्व-
दृष्टावपि कार्यमात्रस्य कारणमात्रेणाप्युपपत्तेर्न तद्विशेषादरः कार्यः, तर्हि
दृष्टान्ते कर्त्रधिष्ठितानामेव कारणत्वदृष्टावपि कार्यमात्रस्य कारणमात्रेणा-
प्युपपत्तेः न कर्त्रधिष्ठितत्वविशेषादरोऽपि कार्यः । कथं तर्हि समवाय्य-
समवायिनिमित्तनियम इति चेत्, न कथञ्चित् । न हि भूतभविष्यतोः
समवाय्यसमवायिशून्यनिमित्तमात्रहेतुकं प्राकल्पमभ्युपगच्छतां तादृशो
नियमो नियमो नाम । तस्मात् कार्यमात्रस्य कारणमात्रमेवाङ्गीकरणीयम्[3] ।
कारणविशेषास्तु कर्त्रादयस्तत्र तत्र यथादर्शनमेवाङ्गीकरणीयाः ।

यत्पुनर्भिन्नदेशकालानां कारणानां चेतनानधिष्ठितत्वे कथं कार्यानु-
गुणतया परस्परोपसर्पणम्? न हि कुम्भकारमन्तरेण कुम्भहेतवः परस्पर-
मुपसर्पन्तीति । तत्र किमिदं कुम्भादौ[4] तथा दृष्टमिति व्याप्तिमात्रं उता-

---

१ त्वमव्यापकीकृत्य. क   २ कार्यस्य कारणमात्रादेवोपपत्ते. ख   ३. मात्रे मात्रमङ्गीकरणीयम्. घ. मात्रमेवाङ्गीकरणीयम्. क   ४. दौ न दृष्टमिति. ख.

नुपपत्तिरेव? पूर्वस्मिन् पूर्वोक्त एवातिप्रसङ्गो दूषणम्। उत्तरस्मिंस्तु तत्तत्कालविशेषसमासादितपरिपाकतत्तदहृष्टवचेतनसम्बद्धानि कानिचित् कारणानि मिथः सन्निदधति कार्यं चोत्पादयन्तीति न काचिदनुपपत्तिः। अपि च सिद्धेऽपि ईश्वरकर्तरि कथं भिन्नदेशकालानां कार्यानुगुणतया परस्परोपसर्पणम्? ईश्वरेच्छाप्रयत्नाभ्यामिति चेत्, कथं ताभ्यामपि सकलदेशकालप्रवृत्ताभ्यां कदाचिदेव क्वचिदेवोपसर्पणनियमः? कादाचित्कचेतनादृष्टपरिपाकादिति चेत् तर्हि तत एवाङ्गीकरणीयात् कारणानां परस्परसन्निधानं सन्निहितेभ्यश्च कार्यमिति कृतमीश्वरपरिकल्पनेन। अत उक्तेन क्रमेण बाधकान्तराभावाद् दृष्टान्तदृष्टं शरीरित्वं सकर्तृकत्वस्य व्यापकमेवेति तद्बाधे कार्यत्वसकर्तृकत्वयोर्व्याप्तिरेव विलीयत इति सिद्धम्। एतेनार्थापत्तिगम्यत्वमपि क्षित्यादिकर्तुरपास्तम्; उक्तेन क्रमेण कार्यमात्रस्य कर्तारं विना कारणमात्रेणाप्युपपत्तेः।

एवं दूषिते परोक्तानुमाने स्वपक्षसिद्ध्यर्थमनुमानमुच्यते— क्षित्यादिकमकर्तृकं शरीरजन्यत्वात् गगनवदिति। ये पुनरिदमेवानुमानं क्षित्यादौ सकर्तृकत्वानुमानपरिपन्थित्वेन विशेषानुमानतया प्रमाणयन्ति तेषां गगनादावजन्यत्वप्रयुक्तमकर्तृकत्वमिति शरीरजन्यत्वमसमर्थविशेषणत्वाद्गमकमेव। अस्माकं तु पूर्वोक्तदूषणेनैव जन्यत्वसकर्तृकत्वयोर्व्याप्तिविघटनाच्छरीरित्वं कर्तृव्यापकमिति स्थितौ व्यापकभूतशरीरिजन्यत्वनिवृत्तेरेव गगनादावपि सकर्तृकत्वनिवृत्तिरिति निश्चयान्नाजन्यत्वप्रयुक्तव्याप्त्युपजीवित्वेनासमर्थविशेषणत्वं शरीरजन्यत्वस्य।

---

१. न कदाचिदनुपपत्तिः ङ. २. स्त्वे चेतनादृष्ट० ग. ३. बाधान्तराभावात्. ङ. ४. कर्तुरपास्तम् घ ५. दिरकर्तृक. ग. ङ.

किञ्च प्रतिहेतुविरुद्धश्च कार्यत्वम्। तथा हि— आत्मत्वं क्षित्यादि-कर्तृव्यक्तिसमवेतं न भवति जातित्वात् गोत्ववत्। एवं द्रव्यत्वसत्त्वे अपि पक्षीकृत्य वक्तव्यम्। तानेव च पक्षहेतुदृष्टान्तानाश्रित्य सर्वज्ञकर्तृकत्वाभावोऽपि समर्थनीयः। ननु कथं क्षित्यादिकं सर्वज्ञकर्तृकं न भवतीति पक्षीकरणीयम्? साध्यविशेषणस्य सर्वज्ञत्वस्य प्रमाणान्तरेण प्रमितौ तद्बाधादप्रमितावप्रसिद्धविशेषणत्वापत्तेः। अन्यथा शशविषाणस्याप्रमितेः शशविषाणं नास्तीति बुद्धस्याविततया निरुक्तिप्रसङ्गात्। न च शशे विषाणाभाव एवावगम्यते न तु शशविषाणस्य क्वचिदप्यभाव इति वाच्यम्, शशे विषाणस्येव जगति शशविषाणस्यापि लौकिकानामबाधितनिषेधप्रवृत्तेः। शशस्य निषेधाधिकरणत्वे निषेध्यविषाणोपसर्जनत्वानुपपत्तेश्च।

यत्पुनःशशशृङ्गोपलम्भसामग्र्या आभासरूपत्वात्तस्यां सत्यामनुपलम्भाभावादसत्याश्चोपलम्भसामग्रीरूपयोग्यत्वस्यैवाभावात् कथं योग्यानुपलब्धिःशशशृङ्गं निषेधतीति। यथोक्तम्—

> दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता।
> तस्यामनुपलम्भोऽस्ति नास्ति सानुपलम्भने॥

इति। तदयुक्तम्— शशशृङ्गस्यापि पशुशृङ्गत्वेन पशुशृङ्गोपलम्भसामग्र्या एव तदुपलम्भसामग्रीत्वात्। कथं पशुशृङ्गोपलम्भसामग्री तदुपलम्भसामग्री? तस्यां सत्यामपि तदनुपलब्धेरिति चेत्। कथं पशुशृङ्ग-

---

१. तौ तद्वाधादप्रमितौ क. घ ङ तौ बाधादप्रमितौ ग. २. दभाव क
३ म्या अभावरूपत्वात् क ग घ ४ दृष्टोपलम्भ० ग ५ तदुप. ग.

स्यापि सामग्री? तस्यां सत्या पशुशृङ्गस्यापि कदाचिदनुपलब्धेः। अयं यत्रस्यां सत्यां येन यदि भवेन् तर्हि तत्तत्रोपलभ्यत एवेति नियमः। सैव तदुपलम्भसामग्री, तर्हि पशुशृङ्गोपलम्भसामग्र्यां सत्यां कदाचिदपि यदि शशशृङ्गमपि भवेदुपलभ्यत एवेति सैव तस्याप्युपलम्भसामग्री। तथाप्युपलम्भसामग्र्या सत्या कदाचिदपि शशशृङ्गं नोपलब्धचरमिति चेत्, सत्यम्। अत एव तस्यात्यन्ताभावः। यथाप्युपलम्भसामग्र्यां सत्यां प्रागनुपलम्भात् प्रागभावोऽनुमीयते यथा च पश्चादनुपलम्भात् प्रध्वंसः तथा क्वचित् कदाचिदप्यनुपलम्भादत्यन्ताभावोऽपीति न काचिदनुपपत्तिः। अतः प्रकृतेऽपि सर्वज्ञस्यात्यन्तनिषेध्यत्वात् अन्यत्राप्रमितिर्गुणायैवेति नास्माकमप्रसिद्धविशेषणत्वम्। भवतामेव तु क्षित्यादिकं सर्वज्ञकर्तृकमिति साधयतां तदपवादः।

किञ्च क्षित्यादिकं सर्वज्ञकर्तृकमिति साधयद्भिः यत् सर्वज्ञकर्तृकं न भवति न तत् कार्यं यथा व्योमेति वैधर्म्येण व्याप्तिः प्रदर्शनीया। तथा च तत्रोपादानाद्यभावप्रयुक्तकार्यं न सर्वज्ञकर्तृकत्वाभावप्रयुक्तमित्यप्रयोजकत्वमेव। ततसिद्धं साधर्म्येण वैधर्म्येण वा क्षित्यादिगोचरत्वेन सकर्तृकत्वं सर्वज्ञकर्तृकत्वं वा कार्यत्वहेतुः न साधयतीति। एतेनाचेतनोपादानत्वं व्याख्यातम्।

यत्पुनरचेतनं चेतनाधिष्ठितं सत् कार्यकरम् अचेतनत्वाद्वास्यादिवत्, क्षित्यादिकं चेतनप्रयत्नधार्यं गुरुत्वे सत्यपतमानत्वाद्विहङ्गशरीरवदित्यादि।

---

१ थ यस्या ग ट २ ययत्र ग ङ. ३ त्या शशशृङ्गमपि ग.
४ वोऽवसीयते तथा च घ वोऽवसीयत क ५ त्यन्त निषेध्यत्वात्. घ
६ ति तत् घ.

तदपि योऽधितिष्ठति प्रयतते वा स शरीर्येव, रागद्वेषाश्रय एव, धर्माधर्मवानेव, चक्षुरादिजन्यकतिपयविषयक्षणिकबुद्धिरेवेत्यादिव्यापकभूतानेकविशेषविरोधादाभासीकरणीयम्। अतस्सिद्धं न प्रमाणान्तरमीश्वरसाधनमिति। आगमोऽपि पौरुषेयः साशङ्कत्वेनाप्रमाणमेव। अपौरुषेयस्त्वनाशङ्कितपुरुषदोषत्वेन स्वयं परमेश्वरं साधयन्नपि नास्मत्पक्षं क्षिणोतीति सर्वमनवद्यम्।

इति युक्तिभिरेताभिः केवलं विश्वकर्तरि ।
चिदानन्दे चिदानन्दस्तर्कगम्यत्वमत्यति ॥

इति ईश्वरवादो नामैकोनचत्वारिंशो वादः
समाप्तः ।



## [शब्दनित्यत्ववादः ।]

ननु माभूत् सङ्केतयिता तथापि शब्दानामनित्यत्वात्तदाश्रयस्य सम्बन्धस्यानित्यत्वं तदवस्थमेव। नैवम्; सदकारणत्वेन वर्णनित्यत्वस्यैव प्राप्तेः[2]। असिद्धम् अकारणत्वमिति चेत् न; दृश्यमानस्य कारणस्यानुपलब्धौ गगनादिवदकारणत्वसिद्धेः। उपलभ्यत एव ताल्वादिव्यापारो

वर्णकारणमिति चेन् न ; ह्यस्तने य एव गकारो देवदत्तेनोच्चरितः स एव यज्ञदत्तेनाद्योच्चरित इति वक्तृभेदे ताल्वादिभेदे चैकस्यैव गकारस्य प्रत्यभिज्ञानेन तस्य तद्हेतुत्वानिश्चयात् । ननु ज्वालाप्रत्यभिज्ञावद् गकारप्रत्यभिज्ञापि सामान्यमन्यद्वा किञ्चिदवलम्ब्योदीयमाना न व्यक्त्यैक्यव्यवस्थापनायालम् । तदयुक्तम् ;

जात्यैक्यं प्रत्यभिज्ञेयं व्यक्त्यैक्यासम्भवे यतः ।
अभ्रान्तत्वोपपत्तौ वा न च भ्रान्तत्वकल्पनम् ॥

यस्य हि प्रत्यभिज्ञानस्य प्रबलप्रमाणसिद्धभेदतया व्यक्तिगतमेकत्वं गोचरीकर्तुमयुक्तं तस्यैव सामान्यादितद्धर्मगतैकत्वगोचरतोपवर्णनं न्याय्यम्; गुणानामगुणपरतन्त्रत्वस्वभावेन गुणिपारतन्त्र्यस्यैवौत्सर्गिकत्वात् । अन्यथा जातिगोचरतयैव सर्वत्र प्रत्यभिज्ञोपपत्तेः[2] क्वचिदपि न सा व्यक्त्यैक्यं गोचरयेत् । न च सम्भवत्यभ्रान्तत्वे भ्रान्तत्वमपि न्याय्यम् । अतोऽवयवविनाशेन[3] निरुपाधिकतया[4] सम्बद्धमवयवविशरणमध्यक्षयतः कस्यामेव वर्तिकायां प्रबलदीपनिर्वापणेन दीपान्तरादीपने दृश्यमानेऽप्यपरस्य पार्श्वस्थस्य स एवायं दीप इति प्रत्यभिज्ञानञ्च पश्यतस्त्ववयवविशरण-लिङ्गकावयविविनाशानुमानोपगृहीतादीपभेदप्रत्ययादेव दीपप्रत्यभिज्ञायाः सादृश्यदोषनिदानत्वं निश्चिनोति ततश्च कारणदोषज्ञानाद् शुक्तिकाज्ञानादिवत्

1. न व्यक्त्यैक्य. ग. नव्यक्त्यैक्य. ङ. 2. भिज्ञानोपपत्तेः घ.
3. विविनाशेन. ङ. 4. धितया सम्बन्धिनाशमवयविशरण. ग. 5. नाशोपगृहीतादीप. ग. 6. यास्सौसादृश्य. क. घ. ङ. 7. नादेव प्रत्यभिज्ञानस्यासमीचीनत्वं. ग. ङ.

प्रत्यभिज्ञानस्यासमीचीनत्वं निर्णीयत[1] इति युक्तम्। इह तु गकारप्रत्यभिज्ञाने[2] न तथा कारणदोषज्ञानं नापि निरुपाधिकतयाविनाशेन प्रतिबद्धस्य साधनस्य दर्शनमिति न तस्य सामान्यादिगतकत्वगोचरत्वं भ्रान्तत्वं वा शक्योपपादम्।

ननु नष्टश्शब्दः निवृत्तश्शब्द इति शब्दध्वंसस्यापि प्रत्यक्षत्वात् कारणदोषाधीनत्वेन भ्रान्तत्वं गत्वादिसामान्यालम्बनत्वञ्च सुज्ञानम्। मैवम्; अभावमात्रस्यैव प्रत्यक्षायोग्यत्वस्थितेः। न च योग्यानुपलम्भो बाधकः; तस्यापि योग्यत्वज्ञानसहितस्यैवाभावज्ञानहेतुत्वात्, शब्दे च तदसम्भवात्। न हि ताल्वादिव्यापारस्य शब्दोपलम्भहेतुत्वनिरासेन शब्दोत्पत्तिहेतुत्वसाधनमन्तरेण ताल्वादिव्यापाराभावे शब्दोपलम्भयोग्यत्वमवगन्तुं शक्यम्; विषयतदधीनेतरकारणसाकल्यलक्षणत्वात्तस्य। तस्मान्नानुपलम्भोऽपि बाधकः। न चैवं कुलालादिकारणकलापस्यापि घटोपलम्भहेतुत्वप्रसङ्गः; घटोपलम्भस्य तमन्तरेणापि दृष्टत्वात्। न हि तदतिपत्यापि भवतस्तत्र्यन्यन्वं सम्भवति। न चैवं ताल्वादिव्यापाराभावे वर्णोपलम्भो दृष्ट इति न वर्णानां घटतुल्यत्वम्[4]। कथं तर्हि नष्टः शब्दो निवृत्तश्शब्द इति चेन्नित्यस्यैव कालस्य तत्तदवच्छेदकनाशान्नष्टः कालो निवृत्तः काल इति यथा तथा तत्तदवच्छेदकद्रुतत्वतीव्रत्वादिधर्मविनाशान् नष्टश्शब्दो निवृत्तश्शब्द इति व्यवहार इति किमनुपपन्नम्? ननु शब्दोपलम्भस्य ध्वन्यन्वयव्यतिरेकानुविधायित्वात् ध्वनीनाञ्चाभिव्यञ्जकवैधर्म्या-

---

१. निर्णीयत इति. क. २. भिज्ञाने न. ङ. ३. बन्ध. ग.
४. ये शब्दोपलम्भो. घ. ५. न दृष्ट शब्दो. ग. ङ. ६. स्य तदवच्छेदक. घ.
७. न दृष्टः. ख.

दुत्पादकत्वमवशिष्यते। तन्न; अभिव्यञ्जकवैधर्म्यासिद्धेः। नन्वभिव्यञ्जकपक्षे ध्वनयश्शब्दं श्रोत्रं वा संस्कुर्युः। तत्र शब्दसंस्कारपक्षे संस्कृतस्य सर्वगतत्वेन सर्वश्रोत्रश्रवणं समानदेशानां समानेन्द्रियग्राह्याणां व्यञ्जकानियमाभावेन युगपदखिलवर्णग्रहणञ्च प्राप्नोति। अथ श्रोत्रसंस्कारः, तथापि समानदेशसमानेन्द्रियग्राह्यग्रहणाय व्यञ्जकानियमाभावेन तदवस्थमेव निखिलवर्णग्रहणमिति। तदयुक्तम्; श्रोत्रध्वनिसंयोगस्यैव तदुपलम्भहेतुत्वात् शब्दोपलम्भहेतुत्वमेव च तदभिव्यञ्जकत्वमपीति। तस्मात्तत्प्रयत्नभेदभिन्नाः ध्वनयः श्रोत्रसंयुक्तास्सहकारिण इति तत्तत्सहकारिभेदेन श्रोत्रमपि तं तमेव वर्णं गृह्णाति न वर्णान्तरमिति नोतिप्रसङ्गः; न च समानदेशसमानेन्द्रियग्राह्यप्रतीतौ सहकारिभेदोऽपि न दृष्टः; त्वन्मते एव नैल्यस्य शौक्ल्याभावस्य च समानदेशत्वे समानेन्द्रियग्राह्यत्वे च सति शौक्ल्याभावावगमस्य प्रतियोगिज्ञानापेक्षत्वादितरस्य च तदभावात् सौरस्य च तेजसो गगनगतपतङ्गावगमहेतुत्वेऽपि नक्षत्रावगमपरिपन्थित्वात्। समानदेशत्वमेकसमवायित्वमभिप्रेतम् अतो नोक्तव्यभिचार इति चेत् न; वर्णानामप्येकसमवायित्वस्यासिद्धेः।

एतेन समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसम्बद्धत्वात् प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभावोऽपि पराकरणीय एव; गोत्वमहिषत्वयोस्समानेन्द्रियग्राह्ययोर्युगपदिन्द्रियसम्बन्धेऽपि प्रतिनियताभ्यामेव व्यक्तिभ्यां व्यञ्जनत्वदर्शनात्।

---

१. समवायस्यैव क. ग. घ  २. नातिप्रसङ्ग. ङ.  ३. भेदेनापि. घ.
४. पि दृष्ट॰ ग.  ५. न्मते नैल्यस्य. घ.  ६. शौक्ल्या ग.
७. स्थन्थित्वात्. ग. ङ  ८. इत्याभावोऽपि ङ

यत्तु शब्दस्य नित्यत्वे वक्तृदेशस्थतया दिग्विशिष्टतया च श्रवणं कथमिति चोद्यं, तद् उत्पत्तिपक्षेऽपि तुल्यत्वात् प्रमाणान्तरप्रमिताभिव्यञ्जकध्वनिदेशत्वसमारोपनिमित्तं भ्रान्तमेवेति कथञ्चित् परिहर्तव्यम्। तस्माद्विरुद्धमेव शब्दाभिव्यञ्जकत्वं ध्वनीनाम् ।

यत्पुनरेकस्यैव गकारस्य तीव्रतीव्रतरमन्दमन्दतरत्वादिविरुद्धधर्माध्यासाद्भेद इति, तदयुक्तम्; मुख इव मणिकृपाणदर्पणादिधर्मसमारोपस्य[1] तत्तदभिव्यञ्जकध्वनिधर्मसमारोपस्य शब्देऽप्युपपत्तेः। न चारोपस्य[2] ध्वनिधर्मत्वे वायुधर्मत्वेनाश्रावणत्वादन्येन च ग्रहणाभावादगृहीतस्य च स्मृत्यभावाद्ग्रहणेन स्मरणेन वानुपनीतस्य समारोपानुपपत्तेर्न तीव्रत्वादिसमारोप इति वाच्यम्; श्रोत्रप्रदेशवर्तित्वगिन्द्रियेणैव[3] ध्वनीनां संबन्धमानानां निर्विकल्पकेनैव युगपदवगतेः[4]। न च निर्विकल्पकेन तयावगतौ सविकल्पकेनापि ध्वनीनामेव तारतैरत्वादिधर्मविशिष्टत्वेनावगमप्रसङ्गः[5]; शब्दस्य ध्वनिधर्मयोश्च श्रोत्रेण त्वचा च निरन्तरावगमदोषेण शब्दगततयैवारोपात्। अत एवात्रारोप्यारोपाधिष्ठानयोः सविकल्पकेन न कदाचिदपि[6] पृथग्ग्रहणम्; अभिव्यञ्जकध्वनिसन्निधेरवश्यम्भावात्[7]। अत आरोपसम्भवादसिद्धं विरुद्धधर्माध्यासितत्वम्। एतेन प्रकर्षनिकर्षत्वादयो[8] व्याख्याताः।

नचैवं अभिव्यङ्ग्यत्वे कल्प्यबाहुल्यादुत्पाद्यत्वमेव वर्णानां न्याय्यम्; उत्पाद्यत्वेऽपि संयोगविभागशब्दानां शब्दकारणत्वम्, आद्यस्य कार्यविनाश्यत्वम्, अन्त्यस्य कारणविनाश्यत्वम्, इन्द्रिय-

---

१. धर्मसमारोप. ग. २. रोपस्य. ग. ३. त्वगिन्द्रियेणैव. ग. ४. दवगतेः. ग. ५. तारत्वादि. ग. ६. न कदाचिदपि. ग. ७. सद्भावा. ग. ८. प्रकर्षनिकर्षत्वादयो. ग. प्रकर्षनिकर्षत्वादयो. घ.

समवेतस्य ग्राह्यत्वं, वीचीतरङ्गक्रमेणारभ्यत्वमित्यादिकल्पनाबाहुल्यस्य ततस्तरां विद्यमानत्वात्। किञ्च—

अकारणत्वे ताल्वादिव्यापारस्य व्यवस्थिते।
तद्व्यङ्ग्योऽनन्तरं दृष्टश्शब्दो मूलोदकादिवत्॥

यस्य हि यद्व्यापारानन्तरमुपलब्धस्य तदुत्पाद्यत्वं न सम्भवति तस्य तदभिव्यङ्ग्यत्वमेव यथा खननानन्तरोपलब्धस्य मूलोदकस्य, तथा च ताल्वादिव्यापारानन्तरमुपलब्धस्य शब्दस्यापि तदभिव्यङ्ग्यत्वमेव; तदुत्पाद्यत्वासम्भवात्। न च तदुत्पाद्यत्वमपि सम्भवति। कथम्? ताल्वादिव्यापारः शब्दकारणं न भवति व्यापारत्वात् उभयसिद्धवादित्यादेर्बाधकस्य विद्यमानत्वात्। नचैवं घटादेरपि कुलालादिव्यापारानुत्पाद्यत्वप्रसङ्गः; तस्य तदन्वयव्यतिरेकानुविधायित्वस्यानन्यथासिद्धयानुत्पाद्यत्वानुमानस्य बाधितत्वात्। प्रकृते च तदभावस्य प्रागेव दर्शितत्वात्।

यत्तु सामान्यविशेषवत्त्वे सत्यस्मद्बहिरिन्द्रियग्राह्यतया शब्देनानित्येन भवितव्यमिति; तत्र एव रूपत्वादिवन्नित्येन भवितव्यम्; तथा अनारब्धेन्द्रियतया श्रोत्रेण मनोवन्नित्यग्राहकेण भवितव्यम्, तथा ध्वनिधर्मान्यत्वे सति श्रावणतया शब्देन शब्दत्ववन्नित्येन भवितव्यमित्यादिविरुद्धव्याप्तिप्रदर्शनेन पराकरणीयम्।

किञ्च गगनादिवदनवयवद्रव्यतयापि शब्दस्य नित्यत्वं सुज्ञानम्। न च द्रव्यत्वं दुरधिगमम्; साक्षादक्षसम्बन्धेन प्रतीयमानस्य घटस्येव

---

१. यित्वस्यान्यथा. घ. २. पत्वे. ङ. ३. व्यम्, अथाना. ङ. ४ व्याप्तिदर्शनेन. ङ. ग. घ.

शब्दस्यापि द्रव्यत्वसिद्धेः । ननु शब्दे[1] साक्षादक्षसम्बन्धित्वं द्रव्यकर्मादिव्यतिरेकेण गुणत्वसिद्धावेवावगन्तव्यमिति स्वोपजीव्यप्रमाणबाधः । तन्न, यावद्द्वयो विरोधिभ्यः परिशेषं विना हेत्ववगम एव न भवेत् तावत्परिशेषमात्रस्यैव हेतुनोपजीव्यत्वात् । साक्षादक्षसम्बन्धित्वस्य च द्रव्यत्वमनुगुणमेवेति विरोधिकर्मादिचतुष्टयव्यावृत्तिमात्रादेव हेतुत्वसिद्धेर्नोपजीव्यप्रमाणबाधे इति ।

किञ्च शब्दसाक्षात्कारहेतुत्वेन शब्दश्रोत्रसम्बन्धे कल्प्यमाने साक्षात् सम्बन्धे सति सम्बन्धान्तरपूर्वकसम्बन्धकल्पनं गौरवापेत्यर्थापत्त्या साक्षादक्षसम्बन्धित्वस्य सिद्धिः स्यात् । अन्यथा परिशेषाधीनत्वे द्रव्यकर्मादिरिव इव गुणत्वेऽपि घ्राणादिन्द्रियसम्बन्धित्वमेव शब्दस्य भज्येत । न च कर्मादिचतुष्टयान्तर्गतस्यास्य न प्रत्यक्षत्वम्; तस्य स्वाश्रयस्यैव प्रत्यक्षत्वमिति नियमात् । अतः तन्निवृत्तिरेव शब्दस्य कर्मादित्वबाधिका । बहिरिन्द्रियव्यवस्थाहेतुत्वञ्च रूपादेरिव द्रव्यत्वबाधकम् । गुणत्वे तु न किञ्चिद्बाधकमिति वाच्यम्; यत् ज्ञानाजन्यश्रावणं तत् न गुणः यथा शब्दत्वम्; तथा यस्य गुणत्वं न तस्य ज्ञानाजन्यश्रावणत्वं यथा रूपस्येति व्यापकभूतज्ञानाजन्यश्रावणत्ववैधुर्यं निवर्तमानं गुणत्वस्यापि निवर्तकमित्यादेर्गुणत्वेऽपि बाधकस्य विद्यमानत्वात् । अतो द्रव्यत्वगुणत्वयोरविशेषात् पूर्वोक्तन्यायेन परिशेषादर्थापत्तेर्वा साक्षादक्षसम्बन्धित्वं शब्दस्य सिद्धमिति सिद्धं ततो द्रव्यत्वम् ।

---

१. ब्देन, क. २. व् न तावत्- ढ. ३. धः । किञ्च, ध. ४. क्षात्कार. घ, ५. म्बन्धान्तर. ग, ड. ६. सिद्धत्वात् - ग. ७. स्य संशय. ढ.

किञ्च शब्दो द्रव्यम् अनाश्रितत्वात् गगनवत्। न चानाश्रितत्वमसिद्धम्; विप्रतिपन्नं व्योम शब्दाश्रयो न भवति वस्तुत्वाद् घटवदिति तत्सिद्धेः।

यत्तु शब्दस्य द्रव्यत्वे द्रव्यस्य प्रत्यक्षत्वं विशेषगुणपुरस्कारेणेति तन्निवृत्तौ द्रव्यत्वनिवृत्तिरित्युक्तम्; तन्न गुणस्य नित्येन्द्रियग्राह्यत्वं नीरसेन्द्रियग्राह्यत्वञ्च द्रव्यपुरस्कारेणैवेति तन्निवृत्तौ गुणत्वमपि निवर्तेत इति परिहरणीयम्। किञ्च यानि शब्दस्य गुणत्वमद्रव्यत्वं वा साधयन्ति साधनानि तानि सर्वाण्यपि गुणत्वाद्रव्यत्वयोस्साक्षादक्षसम्बन्धित्वेनाप्रमीयमाणत्वव्याप्तेः शब्दे च तदभावाद्विशेषविरुद्धान्येव। द्रव्यत्वे तु साक्षादक्षसम्बन्धित्वं प्रयोजकान्तराणामपि व्याप्यमेवेति सिद्धं ततो द्रव्यत्वम्। तथानारम्भकत्वे सत्यनवयवद्रव्यत्वाद्विभुत्वमुक्तमपि मानम्। एवञ्च व्यक्तिभेदाभावात् तन्निवन्धनं गत्वादिसामान्यमपि दूरापास्तमिति सर्वं निर्मलम्॥

इति शब्दविभुत्ववादो नाम चत्वारिंशवादः
समाप्तः।

---

१. नि सर्वाण्यपि. ग. ङ  २. गुणद्रव्यत्वयोः. क. ख.  ३. मानत्व. ग. मानव्याप्तेः. ङ.

## [ क्षणिकवादः । ]

---

नन्वयं शब्दो विनाशी न वेति कोऽस्य विचारस्यावसरः ?, सर्वस्य क्षणिकत्वात् । तथा हि—प्रत्यक्षमेव तावद्यथा घटं परिच्छिन्दद्[1] घटाभावं व्यवच्छिनत्ति[2] तथा घटस्य वर्तमानक्षणसम्बन्धं परिच्छिन्दत्[3] पूर्वोत्तरक्षणसम्बन्धित्वं व्यवच्छिनत्ति । तन्न; अतुल्यत्वात् । न हि यथा घटः[4] स्वाभावाभावात्मकः तथा वर्तमानक्षणसम्बन्धः पूर्वोत्तरक्षणसम्बन्धाभावात्मकः, येन वर्तमानक्षणसम्बन्धे परिच्छिद्यमाने पूर्वोत्तरक्षणसम्बन्धो व्यवच्छिद्येत । यस्तु वर्तमानक्षणसम्बन्धाभावः स स्वाभावात्मके वर्तमानक्षणसम्बन्धे परिच्छिद्यमाने व्यवच्छिद्येत । न च भावान्तरेभ्यो घटस्य प्रत्यक्षेण व्यवच्छेदाभावाद्[5] घटार्थिप्रवृत्त्यसम्भवः; भावान्तरेभ्यो व्यवच्छेदस्य दृश्यानुपलम्भसिद्धत्वात् । न च पूर्वोत्तरक्षणसम्बन्धव्यवच्छेदस्यापि दृश्यानुपलम्भसम्भवेऽन्यत्वम्[6]; पूर्वोत्तरक्षणसम्बन्धस्य पूर्वोत्तरयोः क्षणयोरुपलभ्यमानत्वाद् व्याप्ति[7]सिद्धेरिति । तस्मान्न क्षणिकत्वे प्रत्यक्षानुपलम्भौ प्रमाणम् ।

नन्वनुमानं प्रमाणम् —यत् सत् तत् क्षणिकम्, सन् च [illegible] इति । न च वाच्यम्—बुद्ध्यादेरपि द्विक्षणावस्थायित्वात् [illegible]

---

१. न्दत् घटाभावं. ग. २. त्ति यथा घटस्य. ङ. ३. न्दद् घटाभावं व्यवच्छिनत्ति. घ. ४. घटस्वभावाभावात्मकः. ग. ङ. ५. वाद् घटार्थि. ग. ६. सम्भवात्. ङ. ७. व्याप्तिसिद्धिरिति. ग. ङ.

सदन्तरानुपलम्भेन व्याप्तिसिद्धिरिति; क्षणिकान्तराभावेऽपि[1] विपक्षादक्षणिकात् बाधकप्रमाणेन सत्त्वनिवृत्त्यवधारणात् क्षणिकत्वसत्त्वयोः प्रतिबन्धसिद्धेः। अत एव न दृष्टान्तापेक्षापि। सत्यपि दृष्टान्ते विपक्षव्यावृत्त्यसिद्धौ प्रतिबन्धासिद्धेः। न च वाच्यम्—विपक्षे बाधात् पक्षे[2] चाबाधात् यत् सत् तत् क्षणिकमिति क्षणिकत्वासिद्धौ सत्त्वहेतुकथनमनर्थकमिति, सामान्यतो व्याप्तिसिद्धावपि धूमादेरिव सत्त्वस्यापि साध्यसिद्धयर्थं पक्षधर्मप्रदर्शकस्यावश्यकत्वात्। अत एवोक्तम्—सन्तश्च सर्वे भावा इति। न गगनकुसुमसमा इत्यर्थः। ननु किमक्षणिकत्वे सत्त्वस्य बाधकम्?

उच्यते—सत्त्वं ह्यर्थक्रियाकारित्वम् अन्यस्यानिरूपणात्। अर्थक्रिया कार्योत्पत्तिः। न च मिथ्यादेरर्थक्रियाभावादसत्त्वम्; तस्यापि सर्वज्ञज्ञानालम्बनत्वेनार्थक्रियाकारित्वात्[4]। अतोऽर्थक्रियाकारित्वमेव सत्त्वम्। तच्च यत् करोति तत् क्रमाभावे यौगपद्येन यौगपद्याभावे क्रमेणेति तृतीयप्रकाराभावात् क्रमयौगपद्याभ्यां व्याप्तम्। तत्राक्षणिकस्य न तावत् क्रमेणार्थक्रियाकारित्वं तस्य तदैव द्वितीयक्षणजन्यार्थक्रियां प्रति शक्तत्वे यद्यदा यज्जननसमर्थं तत्तदैव तज्जनयति यथान्त्यावस्थो बीजक्षण इति समर्थस्य क्षेपाभावात् प्रथमक्षण एव द्वितीयादिक्षणजन्यसर्वार्थक्रियाकरणात् कृतस्य च पुनःकरणाभावे द्वितीयक्षणे सर्वार्थक्रियाविरहलक्षणमसत्त्वमेव। अथाशक्तत्वं तर्हि यद्यदा यज्जननसमर्थं न भवति न तत्तस्य जनकं यथा शिलाशकलमङ्कुरस्य इति द्वितीयक्षणजन्यार्थक्रियां प्रत्यजनकत्वात् द्वितीयक्षणे तदवस्थमेवासत्त्वम्।

---

१ पि पक्षादक्ष क २. क्षेऽनाभात् ङ. ३ मर्थ क्षणिकत्वे सत्यस्य. ग ४. र्वज्ञानालम्ब. ग. ङ. ५ त्वम्। यच्च यत् ग ६. नापि क्षणिकस्य. क. ग नास्य क्षणिकस्य घ. ७. थान्त्यस्थो बीजक्षण इति. ग. थान्त्यस्थो बीजक्षण इति ङ

अथ मयमहेतोरसन्दिग्धविपक्षव्यतिरेकित्वात् शक्तस्यापि सह-कार्यपेक्षस्य तत्क्रमेण क्रमादर्थक्रियाकारित्वम्। तन्न, अनुपकारिणां सहकारिणामनुपकारकत्वादितरविश्ववदनपेक्षणीयत्वात्। उपकारकत्वे तूपकार्याद्भावादभिन्नोपकाराधाने[2] भावस्यैवोपकारभेदाज्जन्योपकारस्य[4] भावाभेदादजन्यैवेति सर्वथोपकार्यभावोत्पत्तिरुपकारानुत्पत्तिर्वा भवेत्। भिन्नोपकाराधाने तु तस्याप्यनुपकारिणोऽनपेक्षणीयत्वादुपकारान्तरकल्पने[7] चानवस्थाप्रसङ्गात् उपकाररूपेण च भावस्यैव कर्तृत्वे स्वरूपेणाकुर्वतः पररूपेण कर्तृत्वात् सर्वस्य सर्वकर्तृत्वप्रसङ्गः।

किञ्च उपकार्यात्[9] भावादुपकारस्य भिन्नत्वात् तत एवागन्तोः कार्यसिद्धेरकारणं भावः प्रसजेत्। न च भावः स्वकारणादेव विलम्बकारि-स्वभाव एवोत्पन्न इति स्वभावादेव विलम्बकारित्वम्, सहकारिसमवधानेऽपि विलम्बकारिस्वभावत्वेन कार्याजनकत्वप्रसङ्गात्। अथ सहकारिलाभे विलम्बकारिस्वभावो निवर्तते तर्हि स्वभावादनन्यो भाव इति स्वभावनिवृत्तौ भावोऽपि[10] निवर्तेत।

एतेन कारणमात्रस्याजनकत्वात्[11] समग्रभावसम्पत्त्यर्थं सहकार्यपेक्षेति निरस्तम्; समग्रत्वस्याप्यनुपकारकत्वेऽपेक्षाभावात् उपकारकत्वे प्रागिव भेदाभेदविकल्पेन[12] दूषणप्राप्तेः। अतः सहकारिक्रमेणापि स्थिरस्यार्थ-क्रियाकारित्वमनुपपन्नमेव। न च युगपदर्थक्रियाकारित्वम्, प्रथमक्षण

---

१ स्यात्सहकार्यपेक्षस्य. ग. ङ. २ णामनुपकारकत्वादितर- ङ ३. सन्निधाने. घ ४ जन्योपकारस्य. ग. ङ. ५. कार्यभावोत्पत्ति. क. कार्योत्पत्ति. ख. ६. स्यादुपकारि. ङ ७. चेत्तु वानवस्था ङ ८ न कुर्वत. ग ९ यात्त्वेदादुपकारस्य ग. १० वो निवर्तेत ग. ११ मस्य जनकत्वात्. ग ङ. १२ कल्पदूषणत्वप्राप्ते. ग कल्पदूषणत्वप्राप्ते. क. घ

एव सर्वार्थक्रियानिष्पत्तेर्निष्पन्नस्य च निष्पत्त्यभावाद्द्वितीयपक्षे सर्वार्थक्रियाविरहादसल्लक्षणत्वापत्तेः । तस्मादर्थक्रियाव्यापकौ क्रमाक्रमावुक्तेन न्यायेनाक्षणिकस्यासम्भवन्तौ ततो निवर्तमानौ स्वव्याप्यामर्थक्रियामपि निवर्तयते इत्यर्थक्रियाकारित्वलक्षणं सत्त्वमक्षणिकान्निवृत्तं क्षणिकपक्षे व्यवतिष्ठमानं क्षणिकत्वं गमयति । न च कार्यकारणभावस्य बह्वन्वयव्यतिरेकमूलत्वात् क्षणिकत्वे च तदसम्भवादन्वयव्यतिरेकग्रहस्य बीजक्षण इव रसक्षणेऽपि भावादशक्यावगमं बीजकारणत्वमङ्कुरस्येति वाच्यं, बह्वनुस्यूततया प्रत्यवमृश्यमानस्यासतोऽप्येकाकारस्याङ्गीकरणात् । तादृशावमर्शहेतुत्वेन व्यक्तीनामप्यभेदात् । यथाहुः—

> एकमन्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
> एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥

इति ।

एतेनानुसन्धातुरभावात् साध्यासिद्धिरित्यपास्तं वेदितव्यम् । तस्मात् सिद्धं सत्त्वात् क्षणिकत्वम् ।

किञ्च कृतका भावाः स्वहेतुभ्यो नश्वरस्वभावा वा जायन्ते अनश्वरस्वभावा वा ? यदि नश्वरस्वभावाः जन्मानन्तरमेव नश्येयुः, अथानश्वरस्वभावाः न कदाचन नश्येयुः; स्वभावस्यानपायात् । न च कारणान्तरजन्मा विनाशः; तस्य भावकारणव्यतिरिक्तकारणत्वेन भावतादात्म्यायोगात् । अतदात्मनि चाभावे जातेऽपि भावस्य तादवस्थ्यमेवेति पूर्ववदुपलम्भादिप्रसङ्गात् । तदुक्तम्—यद्यभावो नाम सत्त्वान्तरं किं जातं भावस्य तादवस्थ्यादिति । तस्मात् स्वहेतोरेव

---

१. न क्षणिकस्या. क.   २ र्तयेते. घ   ३ मर्शेन हेतुत्वेन ङ.

विनश्वरस्वभाव एवोत्पन्नः उत्पन्नस्य, नाशकानपेक्षत्वादुत्पत्त्यनन्तरं नाश एवेति।

किञ्च यद्यस्य ध्रुवभावि न तस्य तत्र हेत्वन्तरापेक्षा यथा शरत्कृपाणादेर्लोहमयत्वे। ध्रुवभावी च कृतकानां विनाश इति भावस्य स्वोत्पत्त्यनन्तरमेव हेत्वनपेक्षो विनाशः प्राप्तः। तस्माद्यदेवेदमिति प्रत्यभिज्ञानस्य[1] स एवायं दीप इतिवत् सदृशपरम्परोत्पन्नवस्तुविषयत्वेन भ्रान्तत्वात् सिद्धं सर्वे भावाः क्षणिका इति॥

तदिदमनुपपन्नम्। तथा हि—यत्तावत् सत्त्वात् क्षणिकत्वमित्युक्तं तत्र किमिदं क्षणिकत्वम्? यद्येकक्षणसत्त्वं तर्हि सिद्धसाध्यत्वम्। अथ द्वितीयक्षणासत्त्वं तर्हि किमिदं द्वितीयक्षणासत्त्वं? किं द्वितीयक्षणेऽत्यन्तासत्त्वं उत विनाशः? न तावदत्यन्तासत्त्वम्, तस्य त्रिकालसत्त्वविरोधेन पूर्वक्षणे सत्त्वानुपपत्तेः। अथ विनाशः, तर्हि तस्य द्वितीयक्षणे विनाशात्मनो[2] सतस्तृतीयादिक्षणेषु सत्त्वमसत्त्वं वा भवेत्, तृतीयप्रकारा[3]सम्भवात्। तत्र न तावदसत्त्वं, भावाभावयोर्विधीयमानस्येतर[4]निषेधरूपत्वात् निषिध्यमानस्य चेतरविधिरूपत्वात् सत्त्वासत्त्वे सत्त्वमेवेति नष्टस्य[5] पुनरुन्मज्जनप्रसङ्गात्। अथ विनाशस्य तृतीयादिक्षणे सत्त्वमेव तर्हि तत्रैव सत्त्वमनैकान्तिकम्। न च भावाभावस्यासद्रूपत्वात् कथं तस्य सत्त्वमिति वाच्यम्, घटादेर्ध्वंसावसरे नात्मनः, तस्मिन् हि सति घटादिरेवासन्नित्युच्यते न स्वयम्। तस्माद् घटो नास्ति कुण्डका नास्तीति प्रतीतिनिर्वाहरूपामर्थक्रियां कुर्वन् विनाशोऽर्थक्रियाकारित्वलक्षणं सत्त्वं न जहातीति बलादङ्गीकरणीयम्।

---

१. नं स एवाय ग. ङ　२. नोऽसत. क. ख. ङ.　३. राभावात्. क. ख. ङ.
४. स्येतर. ग　५ स्वादसत्त्वमेवेति नष्टस्य. ख.

अस्मदभिमतन्तु सत्त्वमहेतुरिति तत्सद्भावासद्भावावचिन्तनीयावेव। यस्य तु हेतुत्वमर्थक्रियाकारित्वलक्षणस्य तस्याभावेऽपि सद्भावो दुर्निवार एव। न च वाच्यं भावसत्त्वं क्षणिकत्वसाधनमिति; भावसत्त्वस्याप्यभावसत्त्वस्येव क्षणिकत्वेन विनाप्युपपत्तेः सन्दिग्धविपक्षव्यतिरेकित्वेनानैकान्तिकत्वात्।

स्यादेतत्—अभावोऽप्यभावान्तरजनने क्षणिक एवेति। तदयुक्तम्। अभावोऽप्यभावान्तरं जनयन्नप्यनन्तरक्षणे नश्यति न वा? यदि न नश्यति तदवश्यमनैकान्तिकत्वम्, यदि नश्यति तर्हि स्वाभावाभावात्मकत्वाद् भावस्य स्वनाशनाशे पुनरुन्मज्जनप्रसङ्ग इति प्रागेवोक्तम्।

किञ्च विनाशविनाशो भवतामप्यनिष्ट एव। यदाहुः—

> हेतुर्यस्य विनाशोऽपि तस्य दृष्टोऽङ्कुरादिवत्।
> विनाशस्य विनाशस्तु नास्ति तस्मादहेतुकः॥

इति। तस्मात्तत्र सत्त्वमनैकान्तिकमेव।

अपि च प्रथमक्षण इव द्वितीयक्षणेऽपि घटक्षमेव घटं परिच्छिन्दद्भावं व्यवच्छिनत्ति। न च तद्द्वितीयक्षणे घटान्तरम्; तस्य तद्धेतुशून्यत्वे कादाचित्कत्वानुपपत्तेः। यथोक्तम्—

> नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
> अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥

इति।

---

१. भावोऽपि घ २. वार' घटवत्। न न घ. ३. तु। अभावोऽप्यभा घ. ४. वात्मकत्वात् भावस्य. क ५. ष्टमेव. ग. ६ = ॥ तस्मात्तत्र घ. ७. ति तद्द्वितीयक्षण घ. ८ अभावतोऽपि. ग.

स्यादेतत्—प्रथमक्षणवर्तिना[1] घटस्य द्वितीयक्षणवर्तिनं[2] प्रति हेतुत्वमिति। तन्न[3]; घटहेतुत्वस्य मृद्दण्डचक्रादित्वव्याप्तेः व्यापकभूतमृद्दण्डचक्रादित्वं निवर्तमानं[4] स्वव्याप्यं घटहेतुत्वमपि घटस्य निवर्तयति। अत एवादृष्टहेतोरपि घटादेर्मृ[5]द्दण्डचक्रचीवराद्यनुमानम्। अन्यथा कथमनियतहेतुकत्वे नियतहेत्वनुमानम्? अत एवोक्तम्—

> यज्जातीयो यतस्सिद्धः स तस्मादग्निकाष्ठवत्।
>
> अदृष्टहेतुरप्यन्यो विपर्ययस्तत्प्रतीयते॥

इति।

न च कपिलहरितवृश्चिकगोमयजन्यवृश्चिकद्वयवन्मृद्दण्डचक्रादिजन्यस्य घटजन्यस्य च कमपि भेदमुपलभामहे, येनास्येदं कारणमस्येदमिति व्यवस्थापयेमहि। तदुक्तेन क्रमेण द्वितीयक्षणे घटहेतुत्वाभावेन घटान्तरोत्पादायोगात् सिद्धं द्वितीयक्षणासत्त्वं प्रत्यक्षविरुद्धमिति।

अपि च यज्जनयति तदन्यसहितमन्यासहितं वा जनयेत्; तृतीयप्रकारासम्भवात्। अत्र न तावदन्यासहितस्य जनकत्वम्; बीजस्येव क्षितिपवनपाथसामन्वयव्यतिरेकयोस्तुल्यत्वात्। तत्तुल्यत्वेऽपि कस्यचिदजनकत्वे सर्वस्याप्यजनकत्वप्रसङ्गात्। कार्यं प्रति नियतपूर्वक्षणवर्तित्वस्य च बीज इव कारणान्तरेष्वपि भावात् तन्मात्रत्वाच्च कारणत्वस्य। तस्मान्नान्यासहितस्य कारणत्वम्। यथाहुः—

> न किञ्चिदेकमेकस्मात् सामग्र्या[6]स्सर्वसम्भवः।

---

१. नो हि घटस्य. घ.      २. र्तिनो हेतुत्वमिति। तन्न; हेतुत्वस्य. घ.      ३. न; हेतुत्वस्य क.

इति। अथान्यसहितस्य जनकत्वं तर्हि यानि सहकुर्वन्ति तानि परस्परसाकाङ्क्षाण्यनपेक्षाणि वा कुर्युः; तृतीयप्रकारासम्भवात्।

न तावद्द्वितीयः; ये यत्र परस्परानपेक्षा न ते तत्र सहकुर्वन्ति यथा तक्षकुलालकुविन्दाः पीठपिठरपटेष्विति परस्परानपेक्षत्वस्य व्यापका-सहकारित्वस्य विरुद्धसहकारित्वोपलब्धेः।

एतेन परस्परानपेक्षाणां स्वोपसर्पणप्रत्ययैर्दैवमिलितानां काकतालीयन्यायेन सहकरणं प्रत्यूढम्, उक्तेन न्यायेन सहकारित्वस्य परस्परसहितत्वव्याप्तेः। कदाचिदुपसर्पणप्रत्ययैरनुपनीतेऽपि सहकारिण्यपि कार्योत्पत्तिसम्भावनेन कार्यपूर्वक्षणवर्तित्वनियमानुपपत्तेश्च। तस्मान्न परस्परानपेक्षाणि सहकुर्युः। नापि परस्परसाकाङ्क्षाणि; यद्यस्यानुपकारकं न तत्तेनापेक्ष्यते यथा मेरुर्मन्दरेणेत्यनुपकारकत्वव्यापकानपेक्षत्वविरुद्धसापेक्षत्वोपलब्धेः अनुपकारकस्यानपेक्षणीयत्वादुपकारकस्य चोत्पन्नं प्रत्युत्पन्नस्य किञ्चित्कारकरूपत्वात् क्षणभङ्गपक्षे क्षणस्याभेद्यत्वेन तद्योगाभावादुक्तदोषापत्तेः न किञ्चिदुपकारकमुपकार्यञ्चेति। तस्मादनुपकारकस्यानपेक्षणीयत्वादनपेक्षितस्य च सहकर्तृत्वाभावात् यत् करोति तदन्यसहितमन्यासहितं वा करोति परस्परसहकारिणोः तृतीयप्रकाराभावादिति व्यापकभूते अन्यसहितत्वासहितत्वे पूर्वोक्तक्रमेण क्षणिकपक्षान्निवृत्ते स्वव्याप्यमर्थक्रियाकर्तृत्वलक्षणं सत्त्वमपि निवर्तयत इति सत्त्वं क्षणिकादपि निवृत्तं गन्धवत्त्ववदसाधारणानैकान्तिकम्।

---

१. व्यावर्तकः सहकारित्वस्य. ग. ङ. २. इयम्. ग. ३. [illegible] कारणत्वस्य सहकारित्वस्य परस्परसापेक्षत्वसहितत्वव्याप्तेः. क. ४ [illegible] च परस्पर. ग ५. सापेक्षाणि ग ६. स्यानुपपन्नत्वा. क. ७. रूपत्वात्. ङ. रणरूपत्वात्. ङ. ८. क्रमो क्षणिक. ग. ९. तेः स्वव्याप्य ङ. १०. प्यत्वमर्थ. क ११. सहकारित्वकर्तृत्वलक्षणं. घ. १२. र्तत इति. ग ङ.

अपि च सहकारिक्रमेणाक्षणिकस्यापि क्रमेणार्थक्रियोपपत्तेस्सन्दिग्धविपक्षव्यावृत्तिकत्वादप्यनैकान्तिकं सत्त्वम्। न च सहकारिणामनुपकारिणामनपेक्षेति वाच्यम्; अनुपकारिणामपि सहकुर्वतां परस्परसापेक्षस्वभावत्वात्। अन्यथा भवन्मतेऽपि बीजक्षितिपवनपाथसां परस्परानपेक्षाणामेव जनकत्वे यत् परस्परानपेक्षानेकहेतुकं तन्नाना यथा पावकपयसी इति परस्परानपेक्षानेकहेतुकत्वनानात्वयोर्व्याप्तेरङ्कुरस्यापि नानात्वप्रसङ्गात्। यथोक्तं भवद्भिरेव— अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदो वेति। तस्मात् परस्परानपेक्षानेकहेतुत्वव्याप्तकार्यनानात्वविरुद्धं कार्यैकत्वं स्वविरुद्धव्याप्तात् परस्परानपेक्षत्वान्निवर्तमानं स्वहेतूनां परस्परसापेक्षत्व[1] एव व्यवतिष्ठत इति बलादुपकारगर्भत्वे तदगर्भत्वे वाप्येककार्यनिवेशिनां परस्परसापेक्षत्वं स्वभावादित्यङ्गीकरणीयम्।

अपि च भवतूपकारगर्भसापेक्षत्वं, तथाप्युपकार्यादुपकारस्य भेदाभेदवादिनां न प्रागुक्तदोषावकाशः।

यत्त्वागन्तूपकारादेव कार्योत्पत्तेरकारणं बीजमिति। तत्र, बीजपान-(ऽर्थ?)रवैयर्थ्ये)ऽपकारमात्रस्याप्यन्यगतस्य व्यभिचाराद् बीजगतस्यैवोपकारस्य हेतुत्वं वाच्यम्, तथा च विशिष्टहेतुत्वे विशेषणस्यापि हेतुत्वमनिवार्यमेव। तत् सिद्धमक्षणिकस्यापि सहकारिक्रमेण विलम्बोपपत्तेरिति अन्यत्र[2]ऽपि सत्त्वमनैकान्तिकमिति।

---

१. पेक्षा पेक्ष. प.    २. आर ...दम्. क ट.

यत्तु विनश्वरस्वभावा इति, तत्र किमिदं विनश्वरस्वभावत्वम्? किं विनाशस्य हेतुशून्यत्वं उत भावात्मकत्वम्, आहोस्विद्भावहेतुत्वम्, उतस्विद्भावसमानहेतुत्वमिति। तत्र न प्रथमः, हेतुशून्यत्वेन नित्यं सत्त्वमसत्त्वं वेति पूर्वापरक्षणयोरिव मध्यमक्षणेऽपि भावस्याभावप्रसङ्गात्। नापि द्वितीयः, तत एव दोषात्। न च तृतीयः, क्रियाजन्यफलभागित्वलक्षणस्य, कर्मत्वस्य क्रियासमवायित्वलक्षणकर्तृत्वपूर्वकत्वात्। क्षणस्याभेद्यत्वेन क्षणभङ्गिनस्तदनुपपत्तेः स्वस्यैव नाश्यनाशकत्वमनुपपन्नमिति। न च चतुर्थः, भावसमानहेतुत्वेन हेतुस्वभेदेन कार्यभेदाद्भावाभावसङ्करप्रसङ्गात्। तस्मादागन्तुकत्वेनागन्तुकमुद्गरप्रहारादिरूपभावान्तरहेतुत्वाद् विनाशस्य कृतका विनश्वरा इति कृतकत्वविनाशयोर्व्याप्तिमात्रमवशिष्यते। तावन्मात्रसाधने च सिद्धसाधनमेव।

यत्तु ध्रुवभावित्वादहेतुकत्वानुमानम्। तत्रापि किमिदं ध्रुवभावित्वम्? किमहेतुकत्वं, किं तादात्म्यम्, उतैकहेतुत्वं, उत भावहेतुत्वं, उतस्विद्व्याप्तिमात्रमिति। न प्रथमः, साध्याविशिष्टत्वात्। न च द्वितीयतृतीयचतुर्थाः, हेत्वसिद्धेः। नापि पञ्चमः, कपालमालाया घटं प्रत्यवश्यंभावव्याप्तेः तस्याश्च मुद्गरप्रहारादिहेतुकत्वाद्ध्रुवभावित्वमनैकान्तिकमिति।

यत्तु घटादेः पूर्वापरक्षणयोः कुर्वदकुर्वत्स्वभावत्वादिना विरुद्धधर्माध्यासेन भेदानुमानम्, तदुक्तेन न्यायेन हेत्वसिद्धेरपाकरणीयम्।

---

१ ति किमिद० ग  २० समवायहेतुत्वेन ग ङ  ३ हेतुत्वभेदेन कार्यभेदा० क  ४ यमङ्करप्रसङ्गात् ग  ५ नाश्यस्य ग  ६० तुत्वानुमानम् ध  ७० तु तम्, ध०  ८० न द्वितीय ग

तदेवं क्षणिकत्वसाधकप्रमाणाभावात् स एवायं घट इति संस्कारसहायेन्द्रियप्रभावितमबाधितं प्रत्यभिज्ञाप्रत्यक्षमेव घटस्य पूर्वापरकालयोरैक्यमेव व्यवस्थापयति । न च प्रदीपप्रत्यभिज्ञानवद्भ्रमत्वम्; तत्र हि प्रदीपावयवविश्लेषादेव प्रदीपनाशोऽनुमिते वर्तिप्रदेशवर्तिनः तेजःपुञ्जस्य प्रदीपहेतोर्दर्शनाद्‌वयवविनाशहेतोरवयवविश्लेषस्य दृष्टत्वात् सदृशापरापरोत्पन्नविषयत्वमङ्गीकृतम् । इह तु क्षणिकत्वे प्रमाणाभावात् घटोत्पत्तिहेतोर्मृद्दण्डादेर्घटनाशहेतोर्मुद्गरप्रहारादेश्च योग्यानुपलम्भबाधितत्वात् सदृशापरापरोत्पन्नविषयत्वमशक्यमित्यन्यथासिद्धत्वात् पूर्वापरकालयोरैक्यमेव गृह्णातीति विवेकात् । तस्मात् सिद्धं न भावाः क्षणिका इति ॥

इति क्षणिकवादो नामैकचत्वारिंशवादः

समाप्तः ।

——(o)——

## [आत्मवादः ।]

———

अथ देहेन्द्रियज्ञानसुखेभ्यो भेदमात्मनः ।
नानात्वं मुक्तिनित्यत्ववैभवे चाभिदध्महे ॥

———

1. प्रव. प. ह.　　२. प्रविविश्लेषस्य. प.　　३. सदृशापरापरो त्पत्तिविषयत्वमङ्गीकृतम्. ह.

केचिदाहुः शरीरमेवात्मेति । तदयुक्तम् ; आत्मविशेषगुणानां ज्ञानसुखदुःखादीनां तद्गुणत्वानुपपत्तेः । शरीरविशेषगुणस्य यावच्छरीरभावित्वात् तन्निवृत्तौ शरीरविशेषगुणत्वस्यापि निवृत्तेः । किञ्च प्रत्यक्षशरीरगुणस्य स्वपरबाह्येन्द्रियग्राह्यत्वव्याप्तेस्तन्निवृत्तेरपि ज्ञानसुखादेश्शरीरगुणत्वनिवृत्तिः सुव्यवसाना । कथञ्च शरीरे ज्ञानसुखादीनामुत्पत्तिः सम्भविनी ? न हि कार्यगतविशेषगुणं कारणगुणपूर्वकतामन्तरेण निष्पद्येत । न च शरीरकारणानामपि ज्ञानसुखादियोगित्वम् ; तथा सति शरीरस्य भौतिकत्वात् तत्समानकारणानां घटादीनामपि ज्ञानसुखादियोगित्वप्रसङ्गात् । अतो ज्ञानसुखादीनां शरीरसमवायित्वानुपपत्तेरन्यसमवायित्वं वाच्यम् । यश्च तत्समवायी स आत्मेति सिद्धः शरीरात्मनोर्भेदः ।

कथं तर्ह्यात्मनः स्थौल्यकार्श्याद्यभावादात्मगोचरस्याहंप्रत्ययस्य स्थूलोऽहं कृशोऽहमित्यादिशरीरगोचरस्थूलकृशादिबुद्धिसमानाधिकरणत्वमिति चेद्, अत्यन्तसंसृष्टत्वेन शरीरात्मनोरैकत्वसमारोपादिति ब्रूमः । न च बाधाभावाच्च समारोपितैकत्वगोचरत्वं न्याय्यमिति वाच्यम् ; उष्णतोयप्रत्ययस्यत्र लौकिकबाधाभावेऽपि यौक्तिकबाधस्य विद्यमानत्वात् । तस्य[1] च प्रागेव दर्शितत्वात् । किञ्च मम शरीरमिति लौ[2]किकोऽपि शरीरात्मनोर्भेदप्रतिभासोऽस्ति । तस्मादात्मव्यतिरिक्तगोच[3]रेदमित्यवभासविषयाच्छरीरादहमित्यवभासविषयस्य सिद्धं वैलक्षण्यम् ।

---

१ स्य प्रागेव. ग.  २. लिकेऽपि. घ.  ३. चरस्येद. ग. ङ. चरे दं. घ.

एतेनेन्द्रियवैलक्षण्यमप्यात्मनो द्रष्टव्यं; पूर्वोक्तनयेन भूतचैतन्यस्य प्रसङ्गादेव बाह्येन्द्रियेभ्यो भेदस्य सिद्धत्वात्। न च मन एवात्मा; तस्यात्माधिकरणसुखदुःखाद्यपरोक्ष्यसाधनेन्द्रियत्वेन कल्पस्य सिद्धरूपादपरोक्षैरूपाच्चात्मनो विलक्षणत्वात्।

अस्तु तर्हि ज्ञानमेवात्मा। न च ज्ञानस्यात्मत्वे तस्य क्षणिकत्वात् पूर्वानुभूतवस्तुविषयत्वेन स्मरणाभिलाषविषयप्रत्यभिज्ञानानि न भवेयुः; अन्येनानुभूतेऽन्यस्य तदसम्भवादिति वाच्यम्; एकसन्ततिपतितेष्वेकेनोपलब्धेऽन्यस्य स्मरणाविरोधात्। तदिदमनुपपन्नम्; ज्ञातृज्ञानत्वानुपपत्तेः। न हि कर्तैव क्रियेति सम्भवति, छेत्तुरपि छेदनाभेदप्रसङ्गात्। किञ्च योऽहं प्रागदुःखमन्वभूवं स एवाहमेतर्हि सुखमनुभवामीति पूर्वापरकालयोरेकस्य प्रत्यभिज्ञायमानस्यानुभवितुः क्षणिकानुभवरूपत्वमाशङ्कितुमपि न शक्यते।

ये पुनरौपनिषदा नित्यमेव ज्ञानं, न च नीलवेदनसमये पीतवेदनानुपलम्भादनित्यत्वं, नीलाद्युपधानभेदेऽपि ज्ञानरूपस्यैकस्यानुभूयमानत्वादित्याहुः। तेऽप्यचेतयन्नेत्रेयन्तं कालमस्वाप्समिति सुषुप्तौ ज्ञाननिवृत्तिप्रतिसन्धानादपास्ताः। तथा यस्य मे पूर्वं सुखमवर्तत तस्य मे सम्प्रति दुःखं वर्तते इत्यात्मन एकत्वानुसन्धानेऽपि सुखनिवृत्तेरनुसन्धानादात्मनस्सुखरूपत्वमपि पराकृतं वेदितव्यम्।

---

१. न्यप्रसङ्गादेव. ग. ङ. २. त्वा, मस्यात्माधिकरण. घ. ३. सद्रूपादात्मनो. ग. घ. ४. त्माहमस्वाप्समिति. घ. ५. स्वाप्समिति घ. ६. स्ताः। यथा. ग. ७. र्तते. घ.

यत्पुनरात्मनः परप्रेमास्पदत्वात् सुखरूपत्वमित्युक्तम् , तदयुक्तम् ; दुःखनिवृत्तेः परप्रेमास्पदत्वेऽपि सुखरूपत्वाभावात् , न च यदर्थमन्यत् यच्च नान्यार्थं तत् सुखम् । आत्मा च नान्यार्थः तदर्थं च विश्वमिति सुखमेवेति वाच्यम् ; सुखस्यात्मार्थतया परार्थत्वादसुखत्वप्रसङ्गेन तस्य सुखलक्षणत्वानुपपत्तेः ।

स्यादेतत्–"विज्ञानमानन्दं ब्रह्मे"ति श्रुतिरेवात्मनो विज्ञानानन्दत्व-समर्थनी । नचैकार्थनिष्ठत्वेन पर्यायतया विज्ञानानन्दपदयोरात्मानवैयर्थ्यम् ; ऐकार्थ्येऽपि व्यवच्छेद्यभेदादेव पर्यायत्ववैयर्थ्ययोरभावात् प्रकृष्टप्रकाशश्चन्द्र इतिवत् । यथा खल्वस्मिन् ज्योतिर्मण्डले कतमश्चन्द्र इति चन्द्रप्राति-पदिकार्थं पृष्टः कश्चिदाह—"प्रकृष्टप्रकाशश्चन्द्र" इति । अत्र हि प्रकृष्ट-प्रकाशपदयोश्चन्द्रपदेनाभिन्नार्थत्वमङ्गीकरणीयम् , अन्यथा चन्द्रप्रातिपदि-कार्थस्य पृष्टत्वात्तदितरार्थकथनेन प्रश्नोत्तरयोरसङ्गतिप्रसङ्गात् । अतस्त-त्रैकार्थ्येऽपि यथा प्रकृष्टपदस्याप्रकृष्टखद्योतादि व्यवच्छेद्यं, प्रकाशपदस्या-प्रकाशतिमिरादीति व्यवच्छेद्यभेदादवैयर्थ्यम् । एवं विज्ञानानन्दपदयो-रर्थभेदाभावेऽपि अविज्ञानानन्दरूपव्यवच्छेद्यभेदादवैयर्थ्यम् । तथा च प्रयोगः– विज्ञानादिवाक्यमखण्डार्थनिष्ठं लक्षणवाक्यत्वात् , प्रकृष्टप्रकाशश्चन्द्र इतिवत् । तत्सिद्धमात्मनो विज्ञानसुखरूपत्वमिति ।

---

१. स्यान्यार्थतया. ग ङ स्यात्मार्थतया. घ. २. सुखप्रसङ्गेन. ग.ङ. ३. न्दसमर्थ ग. ४. ति । अत्र. घ. ५. योरभिन्नचन्द्रपदेन चाभिन्नार्थत्व. क घ. ६. तदस्य कथनेन. क. घ. ७. रादीति. घ. ८. विज्ञानवाक्य म ज्ञानादिपद. घ. ९. ति । तदेव तदपकृष्टम् घ.

तदेतदनुसृतम् ।

संसर्गविषयं वाक्यं नाखण्डविषयं क्वचित् ।
ऐकार्थ्येन व्यवच्छेद्यभेदोऽपि पदयोर्यतः ॥

सर्वमेव हि वाक्यं पदार्थसंसर्गविषयं न त्वखण्डैकपदार्थविषयम् ; एकेनैव पदेन तस्य प्रतिपत्तेरितरपदाम्नानवैयर्थ्यस्य दुष्परिहरत्वात् । न च व्यवच्छेद्यभेदादवैयर्थ्यम् ; ऐकार्थ्ये पर्याययोरिव व्यवच्छेद्यभेदस्यैवानुपपत्तेः । न हि कुम्भकलशपदयोरेकार्थयोर्व्यवच्छेद्यभेदो नाम । यत्पुनः प्रकृष्टप्रकाशश्चन्द्र इति वाक्यमखण्डार्थनिष्ठतया अवश्याभ्युपगमनीयमित्युक्तम् , तदयुक्तम् ; तस्यापि संज्ञासंज्ञिसंसर्गमात्रपरत्वात्[2] । नचैवं प्रश्नोत्तरासङ्गतिः , प्रश्नस्यापि कस्यात्र चन्द्रसंज्ञेति संज्ञासंज्ञिसंसर्गविषयत्वात् । अन्यथा चन्द्रस्वलक्षणस्य[3] प्रत्यक्षत्वादस्मिन् ज्योतिर्मण्डले कतमश्चन्द्र इति प्रश्नस्य तन्मात्रविषयत्वेनानुत्थानात् । अतश्चन्द्रपदस्यार्थेन संज्ञासंज्ञिसम्बन्धप्रतिपादनं तदर्थमनुपलक्ष्य न शक्यमिति तदर्थोपलक्षकप्रकर्षविशिष्टप्रकाशप्रतिपादनाय प्रकृष्टप्रकाशपदयोराम्नानस्यापि प्रश्नोत्तरोपयोगित्वात् न प्रागुक्तदोषावकाशः । तस्माद्विज्ञानादिवाक्यमपि विज्ञानादिविशेषणविशिष्टविषयम् । कथं तर्हि "विज्ञानमानन्दं ब्रह्मे"ति सामानाधिकरण्यमिति चेन्नैवम् , मधुरो गुड इतिवद्भेदसहिष्ण्वोरभेदात् समवायाद्वा तदुपपत्तेः ।

---

१. र्थं भेदोऽपि. ग. २ सर्गविषयत्वात्. क. ३. णप्रत्यक्षत्वात्. घ. ४. तन्मात्रविषयत्वेऽनुत्थानात्. ग. ५. दस्य स्वार्थेन. क. ६. क्षण. ग. ७. योः यमाम्नानस्यापि. घ.

यत्पुनरद्वैतश्रुत्यनुरोधाद्विज्ञानादिवाक्यस्याखण्डार्थनिष्ठत्वोपवर्णनं तदद्वैतश्रुतेः प्रत्यक्षादिविरुद्धार्थतया यथाश्रुते प्रामाण्यानुपपत्तेः परा कुरणीयम्। किञ्च श्रुतिरपि "स एको ब्रह्मण आनन्दः" "आनन्दं ब्रह्मणो रूपम्" "आनन्दं ब्रह्मणो विद्वान्" इत्यादिरानन्दात्मनोर्भेदमापादयन्ती[1] तदैक्यस्यापबाधनी[2]। तत् सिद्धं विज्ञानानन्दात्मानः परस्परं भिन्ना इति।

स पुनरयमात्मा सकलशरीरेष्वेक इत्यौपनिषदाः। तदयुक्तम्—

नैको भोक्ता यतो युक्तश्चैत्रमैत्रशरीरयोः।
तुल्यत्वेनोभयत्रापि व्यापारस्य प्रसङ्गतः॥

यदि हि मैत्रचैत्रशरीरयोरेक एवात्मा भवेत् तर्हि मैत्रे सुखिनि दुःखिनि वा मैत्रशरीरे यादृशो व्यापारो दृष्टः तादृशश्चैत्रशरीरेऽपि स्यात्। नचैवमस्ति। अतो मैत्राधिष्ठितत्वस्यापि निवृत्तिरेव।

एतेन स्वशरीरेणाननुभूतमेव शरीरान्तरानुभूतमपि[3] तच्छरीरोपहितत्वमुन्मुच्यात्मरूपेणानुसन्धत्त एव मैत्र इत्यपास्तम्, चरणतललग्नकण्टकोद्धरणाय करतलव्यापारवच्चैत्राङ्गलग्नकण्टकोद्धरणाय मैत्राङ्गस्यापि व्यापारप्रसङ्गात्। ऐकात्म्येऽपि देहान्तरानुभूतस्य मनोभेदादनुसन्धानवैकल्यमिति चेन्नैवम्; करण[4]भेदाभेदयोरनुसन्धानवैकल्यावैकल्ये प्रति प्रयोजकत्वानुपपत्तेः। उपपत्तौ च चक्षुरादिभेदेऽप्यननुसन्धानाभावप्रसङ्गात्। न च नास्त्येव चक्षुरादिभेदेऽनुसन्धानम्; "योऽहमद्राक्षं सोऽहं स्पृशामि"

---

१. नो भेदमापादयन्ती ग ङ. २. स्यापबाधनी. ग.ङ ३. रानुभूतमेव. ग.घ.ङ. ४. कारण. ग ङ

योऽहमश्रौषं स एव पश्यामीत्यादेर्दर्शनात्[1]। देहभेदादनुसन्धानवैकल्यमिति चेन्न, जन्मान्तरीयदेहान्तरानुभूतस्य स्तन्यपानादेरिष्टसाधनतया बालेनानुसन्धीयमानस्य दृष्टत्वात्, जातिस्मराणां भवान्तरीयदेहोनुभूतस्मरणस्य च दर्शनात्।

एतेन ब्रह्मैवाद्यानुसन्धाता जीवस्तु भोक्तैव "अनश्नन्नन्यो अभिचाकशीती"ति श्रुतेः। अतो देहान्तरे भोक्तुरन्यत्वाद्भोगमनुक्तत्वाच्च वेदनापरिहारस्य न चैत्राङ्गलग्नकण्टकोद्धरणाय[2] मैत्राङ्गे व्यापारप्रसङ्ग इति प्रत्युक्तम्। अमुष्याः श्रुतेर्जीवब्रह्मभेदप्रतिपादनपरत्वे ब्रह्माद्वैतभङ्गप्रसङ्गः। अन्यपरत्वे वा भोक्तुरनुसन्धातुश्च मिथो भेदाभावेन पूर्वोक्तदोषापत्तेः। अस्त्येव ब्रह्मणो भेदः किन्त्वसौ कल्पनानिर्मित[3] इति नाद्वैतभङ्गप्रसङ्गः नापि प्रागुक्तदोषप्रसङ्ग इति चेन्नैवम्; कल्पनानिर्मितस्य भेदस्य प्रामाणिकव्यवस्थाहेतुत्वानुपपत्तेः। न हि जातु कल्पनानिर्मितरजतभावं शुक्तिशकलं कटकमुकुटादावुपयुज्यते। यथा च नाप्रामाणिकस्य प्रामाणिकाद्भेदत्वं तथा प्रत्यक्षपरीक्षायामेव प्रतिपादितम्।

ननु यथैकस्यैव[4] नभसः श्रावणत्वेऽपि[5] तत्तदवच्छेदककर्णशष्कुलीभेदात् किञ्चिदेव शृणोति किञ्चिन्नेति व्यवस्था प्रतिज्ञायं श्रोत्रभेदश्च घटते तथैकस्यैवात्मनस्तत्तदवच्छेदकभोगायतनादिभेदात् कश्चिदेव सुखी च खिन्नेति

---

१. स्तन्यपानादे. ग. ह. २. द्धरणाय. ह. ३. नामाप्रनिर्मित. ह. ४. ह्य नभसः. ह. ५. ऽपि तदवच्छिन्न. ग. ह.

व्यवस्था प्रतिदेहं जीवभेदश्च स्यातम्। यदिदमनुपपन्नम्; दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात् । तथा हि—नभसस्तत्र[1] तत्र तदेवेदं गगनमिति प्रत्यभिज्ञानाद् भेदावेदकप्रमाणाभावाच्च सिद्धमेकत्वम्, आत्मनि तु न प्रतिशरीरमेकत्वप्रतिसन्धानं नापि भेदावेदकप्रमाणाभाव इति न तदैक्यमभ्युपगन्तुमुचितम् ।

यानि पुनर्विवादपदानि शरीराणि चैत्राधिष्ठितानि[2] जीवच्छरीरत्वात् चैत्रशरीरवदित्याद्यैक्यसाधनानि तानि विवादपदानि शरीराणि चैत्रानधिष्ठितानि चैत्रशरीरसमकालत्वे सति तदन्यत्वाच्चैत्रवत्, तथात्माद्रव्यत्वातिरिक्तापरजात्याधारं भेदेन[3] नानाशरीरात्मसम्बन्धसम्बन्धित्वाद्विशेषगुणाधिकरणत्वाद्वा शरीरवदित्यादिभिः सप्रतिसाधनानि कर्तव्यानि। न च शरीरादौ नानात्वस्य कार्यत्वप्रयुक्तत्वादप्रयोजकत्वं पाश्चात्यहेतुद्वयस्येति शङ्कनीयम्, अकार्याणामपि परमाणूनां नानात्वाभ्युपगमेन कार्यत्वस्य साहचर्यव्यापकत्वानुपपत्तेः । न च विशेषगुणाधिकरणत्वमसिद्धम्; अस्मदभ्युपगतस्यैवात्मनो नानात्वैकत्वविवादास्पदत्वात् तस्य च बुद्ध्याद्यधिकरणत्वात् ।

यत्पुनः 'एको देवस्सर्वभूतेषु गूढः'

'एक एव च भूतात्मा भूते भूते व्यवस्थितः।'

इत्यादिश्रौतस्मार्तपौराणिकादिवचनबलादात्मैक्यप्रसाधनं तद् "निरञ्जनः परमं साम्यमेति"

---

1 भस्तत्र तत्र- ग. ङ. 2- नि तानि चैत्राधिष्ठितानि- ग. ङ. 3 धारभेदेन घ. धानभेदेन- ङ.

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।"

इति तादृशवचनान्तरविरुद्धत्वेन तदर्थस्य प्रमाणान्तरतो निर्णयात् तस्य च पूर्वोक्तनयेन भेद एवानुगुणत्वात् पराकरणीयम्।

किञ्च आत्मैक्ये यदि कश्चिन्मुच्येत सदैव तदितरोऽपीति[1] बद्धमुक्तव्यवस्थापि नोपपद्यते।

कः पुनरसौ मोक्षः? केचित्तावच्छीलादिविषयोपधानविलये सत्यनुपधानस्य बोधसन्तानस्य स्वरूपेणावस्थानं मोक्षमाहुः। अन्ये तु निखिलबुद्ध्यादिविशेषगुणविलयेनात्मस्वरूपावस्थानम्, अपरे पुनः प्रपञ्चविलयम्। वयं तु निखिलदुःखप्रविलये सति नित्यनिरतिशयानन्दाभिव्यक्तिलक्षणं मोक्षमाचक्ष्महे।

तत्र न तावदाद्यः पक्षः साधीयान्;[2] निर्विषयबोधसन्तानाभावस्य[3] बाह्यार्थसमर्थनसमयसमर्थितत्वात्। किञ्च कस्य मोक्षः? न तावत् सन्तानस्य; सन्तानिव्यतिरेकिणस्सन्तानस्यानुपपत्तेः। उपपत्तौ वा संविदद्वैतभङ्गप्रसङ्गात्। नापि सन्तानिनः; तस्य क्षणभङ्गुरत्वेन मोक्षफलसम्बन्धानुपपत्तेः। एतेनोत्तराधरभावेन निरन्तरमुपजायमानरागादिदोषदूषितचित्तसन्तानस्य प्रदीपसन्तानस्येवात्यन्तिको विलयो मोक्ष[4] इत्यपास्तम्; आत्मोच्छित्तेरपुरुषार्थत्वात्, पूर्ववन्मोक्षफलं प्रति फलिनो निरूपणानुपपत्तेश्च। नापि द्वितीयः पक्षः, मुक्तेरपुरुषार्थत्वप्रसङ्गात्।

---

1. बन्धमुक्त. ग. छ. 2. न, बाह्यार्थबोधसन्तानाभावस्य बाह्यार्थबोधसमर्थन एव समर्थितत्वात्. घ. 3. बार्थबोधनसमर्थन क. बार्थबोधसमर्थन ट. 4. पूर्वे मोक्ष. ग. ङ.

न च निखिलदुःखविलयरूपत्वात् पुरुषार्थत्वम्; निखिलसुखविलयरूपत्वेनापुरुषार्थत्वस्यापि प्रसङ्गात्। न च निद्रायास्सुखाभावेऽपि निद्राभावमात्रेण समीहितत्वं दृष्टमिति वाच्यम्; असम्भवादनल्पविषयत्वाद् दुःखाभाव[1]समीहितत्वस्य। अपरथा विस्मृत्य सुप्तोत्थितस्य दुःखाभावे[2]ऽनुसन्धीयमानेऽपि कामिनीसम्भोगादिसम्भवसुखलवलोपनिमित्तनिर्वेदानुपपत्तेः। अतः स्वर्गादि[3]सुखलोपेऽपि मोक्षस्य समीहितत्वं न केवलं[4] दुःखाभावस्वरूपत्वात् किन्तु सुखरूपत्वात्। अन्यथा केवलदुःखाभावरूपत्वे मूर्च्छाया इव स्वर्गादिसुखलोपेऽपि समीहितत्वस्यानुपपत्तेः।

एतेन प्रकृतिपुरुषविवेकज्ञानात् पुरुषस्य स्वरूपावस्थानं मोक्ष इत्यपास्तम्; आनन्दादिव्यतिरेकसम्भवेनापुरुषार्थत्वस्य तादवस्थ्यात्। अस्तु तर्हि प्रपञ्चविलयो मोक्षः। मैवम्; अलोप्यत्वात् प्रपञ्चस्य। न च तस्याविद्यानिमित्तत्वात् सति विद्योदये सम्भवत्येव तद्विलय इति वाच्यम्; अविद्यामयत्वस्याप्रामाणिकत्वात्।

यत्पुनः "यत्र त्वस्य सर्वमात्मैवाभूद्" इत्यादि श्रुत्यावात्मनोऽद्वितीयत्ववचनम्, तत् प्रमाणान्तरविरुद्धार्थत्वेन भोग्यभोगायतनभोगसाधनादिरूपप्रपञ्चसम्बन्धाभावपरमिति निश्चेतव्यम्। एतेन "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येद्" इति व्याख्यातम्। नास्य कश्चित् सम्बन्ध्यस्ति अयमेव सर्वमिति लौकिकवदात्मनस्सम्बन्ध्यन्तरनिषेधपरत्वात्। प्रतिपादितश्चाविद्यायास्तन्निवृत्तेश्चाप्रामाणिकत्वमधस्ताद् इति नेह पुनर्विपञ्च्यते।

---

१. दुःखभाव- क. २. दुःखभावे- क. ३. अथ स्वर्गादि- ग. ४. न कं, ग. ङ.

कथं संसारावस्थायामविद्यमानस्यानन्दस्य मुक्तावाविर्भाव इति चेन्न; संसारावस्थायामपि विद्यमानत्वात्। कुतस्तर्हि विद्यमानः संसारावस्थायां नानुभूयत इति चेद् अनुभवहेतोरभावादिति ब्रूमः। कः पुनरनुभवहेतुः? आत्यन्तिकदेहेन्द्रियादिसम्बन्धपरिध्वंससध्रीचीनं[1] मन एव। किं पुनरत्र प्रमाणम्? "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते"[2] इति श्रुतिरेव। न च "अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुतिरत्र बाधिका, अस्या वैषयिकसुखदुःखनिषेधपरत्वेनाप्युपपत्तेः। सामान्यविषयस्य विशेषविषयत्वेन सङ्कोचेऽपि श्रुतहान्यश्रुतकल्पनयोरभावात्। आनन्दश्रुतेस्तु दुःखाभावपरत्वे तयोरनिवार्यत्वात्। यत् पुनः सुखं तत् क्षणिकमिति व्याप्तेर्नित्यानन्दाभ्युपगमः प्रमाणबाधित इति चेन्नैवम्; तादृशव्याप्तेस्संसार्यनुभाव्यसुखविषयत्वात्। न च यत् सुखं तत् संसार्यनुभाव्यमिति वाच्यम्।

"आनन्दं ब्रह्मणो विद्वान् तच्च मोक्षेऽभिव्यज्यते"

इति[3] श्रुतिविरोधात्।

"अमनोऽपाण्यपादम्" इति वचनेन मुक्तस्यामनस्त्वप्रतिपादनात् कथं नित्यानन्दानुभव इति चेन्न; मुक्तस्य संसारमूलप्रवृत्त्यसम्भवप्रदर्शनाय[4] प्रवृत्तिसाधनत्वेन मनःपाणिपादानामभावप्रतिपादनपरत्वात्तस्य। "विज्ञातारमरे[5] केन विजानीयात्" इति वचनस्यापि सांसारिकसुखदुःखाधि-

---

१. न इत्येव. क. २. स एवमिति श्रुतिरेव. ग. ३. इति विरोधात्. घ.
४. सम्भूतप्रदर्श्या. ग. ङ. ५. मन्तरेण केन. क.

करणविज्ञातृगोचरज्ञानसाधननिषेधपरत्वात्। अन्यथा साधनान्तराभावेन मुक्तावानन्दाभिव्यक्तिश्रुतेरत्यन्तबाधप्रसङ्गात्। न हि[1] ज्ञातुर्ज्ञातेर्विपरिलोपो विद्यत इति मुक्तस्य ज्ञानसत्त्ववेदनश्रुतेर्ज्ञानशक्तिगोचरतया व्याख्यानेन स्वारस्यभङ्गप्रसङ्गाच्च। तस्मान्निषिद्धकाम्यकर्मभ्यो परावृत्तस्य नित्यनैमित्तिकानुष्ठानेन शमदमब्रह्मचर्याङ्गकात्मध्यानेन योगेन च निरस्तसमस्तसंसारबन्धस्य मुक्तौ[2] नित्यनिरतिशयानन्दानुभवो भवतीति सिद्धम्। तदुक्तं—

> नित्यं[3] यत्त्वात्मचैतन्यमानन्दोऽप्यक्ष्यते[4] च यः।
> यच्च नित्यविभुत्वादि तेनात्मा नैव मोक्ष्यते॥

इति।

कथं पुनरस्य नित्यत्वविभुत्वे[5]? नित्यत्वन्तावद् "अविनाशी वा अरेऽयमात्मा" इति श्रुतेर्[6]म्बरादिवदनवयवद्रव्यत्वाच्चेति द्रष्टव्यम्। विभुत्वं पुनरपर्यायेण चरणशिरसोः कण्टकविद्धस्य युगपदुभयत्र वेदनानुसन्धानानुपपत्तेरणुत्वे निरस्ते मध्यमपरिमाणत्वे च कार्यत्वेनानित्यताप्रसङ्गात् परिशेषप्रमाणसिद्धमिति सर्वमवदातम्॥

इति चिदानन्दपण्डितकृतौ नीतितत्त्वाविर्भावे आत्मवादो द्विचत्वारिंशवादः

समाप्तः।

——•«(o)»•——

---

१. हि ज्ञातु ज्ञातेर्वि ङ. २. क्तौ निरतिशयानन्दानुभवो. ग ३. यथात्म. क. ४. क्षते तदः. क ग ङ. ५. त्वविभुत्वे. घ. ६. रम्बरादिवदनवयव. ङ.

# [अन्विताभिधानवादः।]

पदानामन्विते शक्तिर्वाक्यार्थप्रतिपत्तये।
यैरकल्प्यत निर्मूला तन्निरासे यतामहे॥

अत्र हि प्राभाकरा वाक्यार्थप्रत्ययस्य कार्यस्य पदानामन्विते सामर्थ्यमन्तरेणानुपपत्तेस्तत् कल्प्यमित्याहुः। तथा हि— न तावद्वाक्यस्फोटाद्वाक्यार्थप्रत्ययः[1]; तस्य पदस्फोटनिरासेन तुल्यन्यायतया निरस्तत्वात्। नापि श्रूयमाणा वर्णावली वाक्यार्थधीहेतुः; संसर्गरूपस्य वाक्यार्थस्य संसर्गिषु पदार्थेष्वप्रतिपन्नेषु प्रतिपत्तुमशक्यतया पदार्थस्मृत्यनपेक्षायास्तस्या हेतुत्वानुपपत्तेः। तदपेक्षाया वा[2] हेतुत्वे तदव्यवहितत्वेन श्रूयमाणताभङ्गप्रसङ्गात्[3]। न च पदार्थस्मृतिनिरपेक्षा वर्णमालैव स्मृतिसमारूढा वाक्यार्थधीहेतुः, दीर्घतमेषु वाक्येषु वर्णावलीविस्मरणेऽपि पदार्थस्मृतिभिरेव वाक्यार्थधीदर्शनाच्चाभिरेवोपपत्तौ वर्णमालाया अपि तद्धेतुत्वकल्पनस्य निर्मूलत्वाच्च। भवतु तर्हि वाक्यार्थप्रत्ययं प्रति पदार्थस्मृतय एव हेतुरिति[4] चेत् तदयुक्तं; व्युत्पत्तिविरोधात्। तथा हि— गामानयेति प्रयोजकवृद्धवाक्यश्रवणादानयनान्वितगोविषयां प्रयोज्यवृद्धचेष्टां दृष्ट्वान्वितविषयामेव धियं तत्कारणत्वेनानुमाय तस्याश्चान्वयव्यतिरेकाभ्यां शब्दहेतुत्व-

---

१. वाक्यार्थस्फोटात्. क.   २. क्षया वा ग.   ३. स्वदवाक्यार्थं. ग.   ४. हेतव इति. क.

मवधारयन् पार्श्वस्थो व्युत्पित्सुः[1] पदानां अन्विते शक्तिं निश्चिनोति। न चैवं अन्वितानन्त्यात् व्युत्पत्त्यसम्भवः; तदानन्त्येऽप्याकाङ्क्षादित्रयोपलक्षिते व्युत्पत्तिसम्भवात् केवलाभिधानपूर्वकान्विताभिधाने द्विरभिधानप्रसङ्गात् अश्रुतान्विताभिधाने पदान्तरवैयर्थ्यात् श्रुतान्विताभिधाने परस्पराश्रयापत्तेर्नान्विताभिधानमिति चेन्मैवम्; स्मारितनिमित्तार्थानामेव पदानामन्विताभिधानस्वीकारात्। किञ्च यदि पदार्थाः वाक्यार्थप्रत्ययमादध्युः ततो मानान्तरप्रतिपन्नेभ्योऽपि तेभ्यो वाक्यार्थप्रत्ययः स्यात्। नन्वस्त्येव मानान्तरप्रतिपन्नेभ्योऽपि वाक्यार्थप्रत्ययः। यथोक्तं—

> पश्यतः श्वेतमारूपं हेषाशब्दञ्च शृण्वतः।
> खुरनिक्षेपशब्दञ्च[2] श्वेतोऽश्वो धावतीति धीः॥

इति।

तदयुक्तम्; अमुष्य प्रत्ययस्य खुरहेषितरवयोः श्वेतसामानाधिकरण्येन मतिरत्तावनुमानार्थापत्त्योरन्तर्भावादप्रतिपत्तौ[3] वानुपपत्तेः। एवं हस्तसंज्ञादिभ्यो विशिष्टप्रत्ययो व्याख्येयः। तस्माच्छब्दप्रतिपन्नानामेव पदार्थानां[4] वाक्यार्थप्रत्ययजननसामर्थ्यात् पदार्थानां वाक्यार्थप्रत्ययजननसामर्थ्ये पदानां तत्सामर्थ्याधानसामार्थ्यमित्यभिहितान्वये[5] शक्तिद्वयं कल्प्यम्। अन्विताभिधाने तु शक्तिरेकैवान्वितगोचरा[6] कल्प्येति। न चान्विते शक्तिकल्पनेऽप्यन्वयमन्तरेणापि तस्याप्रतिपत्तेरन्वयेऽपि शक्तिः

1. त्सुः शब्दानामन्विते. क. 2. निक्षेप क. ख. 3. नुपपत्तेः. क. 4. दानां. ध. 5. भ्यांभिधानसामर्थ्यं. घ. 6. के शक्ति. घ.

कल्प्येति वाच्यम्; विशिष्टगोचरत्वाच्छक्तेर्विशिष्टस्य विशेषणमन्तर्भाव्यैव भावात्। ननु विशिष्टज्ञानस्य विशेषणज्ञानमूलत्वात्[1] प्रथमं विशेषणज्ञानेन भाव्यम्। न[2] च पदेभ्योऽन्यद्विशेषणभूतस्यान्वयस्य प्रत्यायकं किञ्चिदस्तीति पदानां प्रथममन्वयप्रतिपादने शक्तिः पश्चादन्वितप्रतिपादनशक्तिरिति शक्तिद्वयं कल्प्यम्। नैवम्; यथा जातिमात्रगोचरयैव पदशक्त्या जायमानायां जातिप्रतिपत्तेरपर्यवसानाद् भवन्ती व्यक्तिप्रतिपत्तिर्न[3] पदसामर्थ्यमात्मनि कल्पयति, न च पृथगवगममपेक्षते तथान्वितगोचरयापि पदशक्त्यान्वय-सिद्धिर्भवन्ती नात्मनि पदसामर्थ्यं कल्पयति, न च पृथगवगममपेक्षते इति। अतः पदानामेव सामर्थ्यादभिधावृत्त्वात् तात्पर्योपगमाच्चान्वित-प्रत्यायनसामर्थ्यमिति सिद्धम्।

अत्रोच्यते—

आन्विते गौरवाच्छक्तेरन्वयस्यान्यतो मतेः[4]।
पदार्थैरेव तत्सिद्धेर्नान्विते शक्तिमत् पदम्॥

सर्वं हि कार्यं कारणं परिकल्पयत् सति सम्भवे लाघवपक्षपातेनैव कल्पयतीत्यविवादम्। तथा च कार्यभूता वाक्यार्थप्रतिपत्तिरपि पदहेतुत्वे गौरवान्न पदसामर्थ्यमात्मनि कल्पयति। कथं पदहेतुत्वे गौरवम्? श्रूयताम्—यत्र खल्वेकस्मिन्नर्थे बहवश्शब्दाः, यथा घटकरीरकु-म्भकलशाः। तत्रानयनान्वितघटप्रतिपत्तौ पदवादिनः प्रतिपर्यायं शक्त्यन्तर-

1. तत्पूर्वं विशेष. क. 2. न पदे. क. ख. ङ. 3. न सामर्थ्यमात्मनि. घ.
4. गतौ. ग.

कल्पनाद्गौरवम् । पदार्थवादिनस्तु प्रतिवाक्यं वाचकभेदेऽप्यर्थस्य सत्त्वेन शक्तिरेकैव कल्प्येति लाघवम् । नचैवं पदार्थवादिनोऽपि यत्रानेका अर्था एकस्य पदस्य वाच्याः, यथा विभीतकादित्रयमक्षशब्दस्य, तत्र गौरवमिति वाच्यम्; अन्वितस्य शक्यत्वाच्छेदे शक्तिभेदस्य[1] पदवादिनोऽप्यवश्याङ्गीकरणीयत्वात् । न च पदवादिन इतरान्वितस्वार्थाभिधाने पदानां शक्तिरिति स्वीकारादक्षशब्दस्य विदेवनादित्रयमपि स्वार्थं एवेति शक्त्यन्तरमन्तरेणापि इतरान्वितत्तदर्थाभिधानं युज्यत इति वाच्यम्; परस्परविलक्षणविदेवनादिविशेषान्वितभेदप्रत्ययस्य शक्तिभेदमन्तरेणानुपपत्तेः, कार्यान्तरभेदस्य शक्त्यन्तरभेदनिबन्धनत्वात् । अन्यथा दहनस्यापि स्वोत्पाद्यनिखिलकार्यानुगुणत्वेन शक्तिरेकैव कल्प्येति दाहपाकादिकार्यभेदानुगुणत्वेन शक्तिभेदो न सिध्येत् । अतः पदार्थवादिनः पदवादिनश्च यत्रैकस्यानेकार्था[2] वाच्यास्तत्र शक्तिकल्पनं समानमेव । यत्र पुनरेकस्यार्थस्य बहूनि पदानि वाचकानि तत्र पदवादिनो गौरवं प्रागेव दर्शितमिति स्थितमेव गौरवम् ।

किञ्च यदि पदानामन्वितगोचरा शक्तिरेकैवाभ्युपगम्यते ततोऽन्वितविशेषणस्यान्वयस्य प्रत्यायकाभावात्तदनवगतौ तदवगतिमूलमन्वितज्ञानमेव न स्यात् । न ह्यस्ति सम्भवः प्रथमानवगतविशेषणो विशिष्टं प्रत्येतीति ।

यत् पुनर्यथा[3] जातिमात्रगोचरयैवेत्यादि, तत्र वदामः—न हि जातिमात्रगोचरया पदशक्त्या जायमानाया जातिप्रतिपत्तौ व्यक्तेः

---

१. इतरेतरान्वित म   २. भेदेऽपा. ग.   ३. यथा करणादिमात्रगोचरयैवेत्यादि, तत्र वदाम – ट.

विषयभावोऽस्ति ; पदशक्तेरतद्विषयत्वेन तदवगतिहेतोरभावात् । न च प्रतीयमानजात्यपर्यवसानादवगतिरिति वाच्यम् ; अपर्यवसानार्थस्यानिरूपणात् । किं खल्वपर्यवसानं नाम ? किमनुपपत्तिभेदः, किं वा व्याप्तिभेदः, पदार्थान्तरम् ? न तावत्तृतीयः कल्पः ; तस्याप्रसिद्धत्वात् । नापि प्रथमद्वितीयौ ; अनवगतयोरनुपपद्यमानव्याप्तयोरनवगमैकत्वेन प्रथमतो जातिमात्रप्रत्ययस्यावश्यकत्वात् । अतः प्रतिपत्त्यैव जातिरनुपपत्त्या व्याप्त्या वा व्यक्तिमाक्षेपतीति न जातिव्यक्त्योरेकप्रतिपत्तिविषयभावः । तथा च तद्दृष्टान्तेनापि नान्वितान्वययोरेकप्रतिपत्तिविषयभावः सिध्येत् । एतेन न रूपिशून्या रूपबुद्धिरित्यपास्तम् ; चक्षुरादेरिव रूपरूपिणोरुभयत्रापि पदस्य शक्त्यनङ्गीकारे रूपप्रतिपत्तिमन्तरेण कारणाभावेन रूपिबुद्ध्यनुत्पत्तेरेवोपपादितत्वात् । किञ्च भवतु वा पदैरप्यन्तर्भावितरूपिण एव रूपस्य प्रत्ययः, तथापि नान्तर्भावितान्वयस्यान्वितप्रत्ययस्य संभवः । तथा हि—किमिदमन्वितमन्वयविशिष्टमन्वयोपलक्षितं वोच्यते ? न तावदन्वयविशिष्टं ; तथा सति विशेषणानवगतौ विशिष्टबुद्ध्यनुत्पत्तेरन्वयस्य च तदवगतिहेतोरभावाद्विशेषणे विशिष्टे च पदस्यैव शक्तिरिति शक्तिद्वयप्रसङ्गात् । नाप्यन्वयोपलक्षितं स्वरूपमात्रम् ; तस्यान्तर्भावितान्वयत्वेनैव प्रतीतिविषयत्वानुपपत्तेः । न हि यथा जातिर्व्यक्तिमन्तरेण दुरधिगमा एवं पदार्थस्वरूपमप्यन्वयमन्तरेण दुरधिगमं, येन जातिवत्तौ

---

१. नाम्नाऽस्यवगतिरिति. ग. २ अवगतयो. घ. ३. मत्वेन. ङ ४. च दृष्टान्तेनापि. ग. ङ. ५. रूपबु. घ. ६ तत्त्वरूप ङ. ७. तिविप्रतिपत्तेः. घ.

व्यक्तेरिव पदार्थस्वरूपविचारेऽन्वयस्यानुप्रवेशो भवेत्। अन्तरेणाप्यन्वयं पदार्थस्य स्वरूपेणावगम्यमानत्वात्। अतोऽन्वयस्यान्यतः प्रत्येतुमशक्यत्वाद् अन्वयान्वितयोः पदस्यैव प्रत्यायनशक्तौ कल्प्यायां गौरवमिति सिद्धम्।

अपि च पदवादिनोऽपि न पदान्येव पदार्थस्मृतीरनपेक्ष्य वाक्यार्थप्रत्ययमाहत्योदधति; श्रुतव्युत्पन्नपदस्यापि प्रमुषितसंस्कारतया पदार्थस्मृतिविधुरस्य वाक्यार्थावबोधात्। पदार्थानामन्योन्यान्वययोग्यत्वावगमस्य वाक्यार्थज्ञानसामग्र्यन्तर्निविष्टत्वाच्च। तथा च पदाहितस्मृतीनां पदार्थानामप्यनन्यथासिद्धान्वयव्यतिरेकितया वाक्यार्थबोधहेतुत्वे कल्प्ये तत एव तदुपपत्तेरर्थापत्तिपरीक्षायां पदानामन्विते सामर्थ्यं कल्प्यम्।

यत्पुनः प्रमाणान्तरप्रतिपन्नेभ्यः पदार्थेभ्यो वाक्यार्थप्रत्ययादर्शनात् पदार्थानां वाक्यार्थप्रत्ययजननसामर्थ्यं पदानां तत्सामर्थ्याधानसामर्थ्यमिति शक्तिद्वयं कल्प्यमिति, तन्मन्दम्; पदार्थेषु सामर्थ्याधानसामर्थ्यस्य पदाश्रयत्वेनानभ्युपगमात्। न च प्रमाणान्तरप्रतिपन्नेभ्यो वाक्यार्थबोधोदयः स्यादिति वाच्यम्; यतो न सन्निधिमात्रं वाक्यार्थज्ञानसामग्री किन्तु शब्दसन्निधिः, स च प्रमाणान्तरप्रतिपन्नेषु नास्तीति तत्र वाक्यार्थज्ञानाभावः सहकारिभूतसन्निधिवैधुर्यप्रयुक्त एव। न च द्वारमिति शब्दसन्निध्यमानेऽप्यावरणाद्यन्वयो दृष्ट इति वाच्यम्; तत्रापि कल्पितशब्दसन्निहितस्यैवावरणादेर्वाक्यार्थान्वयित्वात्। अत

---

१. पश्यन्ता. ग. २ णान्वय घ. ३ र्थस्वरूपेण. क ४. स्यामि- दधति ग. स्याद्धाति. घ. ५ र्थावबोधात् क ६. [illegible] ग. घ. ७. र्थानां तत्सामर्थ्यमिति. क. र्थानां तत्सामर्थ्याभिधानसामर्थ्यमिति घ. ८. नाभ्युपगमात्. क ९. वधारणादेर्वाक्यार्थान्वयित्वात्. क

एव शब्दैकगोचरतया श्रुतार्थापत्तेर्भेदः । न च द्वारमित्यत्र द्वारार्थस्य प्रतिसम्बन्ध्यर्थान्तरमन्तरेणानुपपत्तेः तत् कल्प्यं न तच्छब्द इति न तत्र शब्दसन्निधिरङ्गमिति शङ्कनीयम्[1] ; अशाब्दस्यापि शाब्देनान्वये गामानयेत्यत्र प्रत्यक्षसन्निहितेनाश्वेनाप्यानयनान्वयप्रसङ्गात् । न चानयनं प्रति गवाश्वयोरसन्निधियोग्यताउल्यत्वेऽपि प्रत्यक्षस्याश्वस्य क्रियापेक्षावैधुर्याच्छब्दस्य च गोः साकाङ्क्षत्वात् गौरेवानयनान्वयं प्रतिपद्यत इति वाच्यम् ; अश्वस्यानयनानपेक्षत्वेऽप्यानयनस्य कारकमात्रापेक्षत्वेनाश्वं प्रत्यपेक्षासम्भवात्[2] । न च परस्परसाकाङ्क्षयोरेवान्वयाद्यानयनाश्वयोरन्वय इति वाच्यम् ; खुररवहेषिताभ्यामनुमितस्याश्वस्य किमयं गच्छति तिष्ठति वेति क्रियापेक्षायां देवदत्तो गच्छतीत्युक्ते कारकमात्रापेक्षस्य गच्छतेरश्वस्य च मिथोऽन्वयप्रसङ्गात् । न च देवदत्तस्य साकाङ्क्षत्वात् गच्छतिर्नाश्वान्वयं प्रतिपद्यत इति वाच्यम् ; अश्वस्यापि साकाङ्क्षत्वाद्देवदत्तेनाप्यनन्वयप्रसङ्गात् । यावन्ति पदानि श्रुतानि तावतां सम्भूयकारित्वव्युत्पत्त्या गच्छतेर्देवदत्तेनैवान्वयो नाश्वेनेति चेन्नैवम् ; देवदत्तो गौरनुधावतीत्याद्यनैकान्तिकत्वात् । ननु सति सम्भव इति विशेषणान्नायं दोषः । यद्येवं कोऽयं सम्भवो नाम ? आकाङ्क्षासन्निधियोग्यत्वानामविरोध एव सम्भवः । स च देवदत्तो गौरनुधावतीत्यादौ देवदत्तेनान्वये गोराकाङ्क्षानिरोधाद्गवान्वये देवदत्तस्याकाङ्क्षानिरोधान्न[3] सम्भवतीति न तत्र सम्भूयकारित्वमिति चेत्तर्हि खुररवहेषितत्वानुमिताश्वस्य जिज्ञासितत्व-

---

1. येन गामान- ख. ग.　　2. सम्भवात् क　　3. वक्षविरोधात्. ए. ग.

क्रियस्य गौस्तिष्ठतीत्युक्ते तिष्ठतेर्गवान्वयेऽश्वस्याकाङ्क्षानिरोधाद् अश्वेनान्वये गोराकाङ्क्षानिरोधाच्चिष्ठतिगवोरसम्भूयकारित्वं भज्येत।

अथ शाब्दप्रतिपन्नस्याकाङ्क्षानिरोधः संहत्यकारित्वप्रतिबन्धेन वाक्यार्थप्रत्ययपरिपन्थी, न प्रमाणान्तरप्रतिपन्नस्य। यद्येवं शाब्दप्रतिपन्नस्याकाङ्क्षैव संहत्यकारित्वानुकूलतया वाक्यार्थप्रत्ययहेतुः न प्रमाणान्तरप्रतिपन्नस्य; मूलनिरोधस्यैव मूलिनिरोधहेतुत्वादतन्मूलस्य तन्निरोधे निरोधानुपपत्तेः। तथा चाश्वस्य गत्यनन्वयश्शाब्दप्रतिपन्नत्वाभावनिबन्धन एव।

स्यादेतत्—नैवमादेरशाब्दत्वादनन्वयः, किन्तु शब्दस्यातत्परत्वात्।[1] येन तु शब्दस्य तात्पर्यं तस्य प्रमाणान्तरप्रतिपन्नस्यान्वय एव यथा द्वारमित्यत्रेति। तदयुक्तम्। एवं हि वदता शाब्दत्वमशाब्दत्वं च नान्वयानन्वययोरुपाधिः शब्दस्य तत्परत्वमतत्परत्वञ्चेत्युक्तं स्यात्। नचैतद्युक्तम्; तस्य साधनव्यापकत्वेन उपाधित्वानुपपत्तेः। न हि शाब्दतात्पर्यमपि शब्दप्रतिपन्नेभ्योऽन्यत्र दृष्टचरं; तात्पर्यस्य शब्दप्रतिपन्नेष्वेव सम्भव इति नियमात्। अतस्तन्निबन्धनोऽप्यन्वयश्शाब्दयोरेव न शाब्दाशाब्दयोरिति व्यवस्थितम्।

एतेन श्रुतशब्दप्रतिपन्नस्य अश्रुतशब्दप्रतिपन्नेनैवान्वय इत्यतिप्रसङ्गापादनमपि परस्य परिहर्तव्यम्; द्वारमित्यादौ श्रुतशब्दप्रतिपन्नस्य प्रतिसम्बन्धिनोऽर्थान्तरस्य प्रमाणविरुद्धत्वात्। अतस्सिद्धमेतत् न सन्निधिमात्रं

---

१ स्यार्थतत्परत्वात् ■ २. तत्र पु० क ३ पु। तन्नि ग

वाक्यार्थज्ञानसामग्री किन्तु शब्दसन्निधिरिति । तया च प्रमाणान्तरप्रतिपन्नेभ्यो वाक्यार्थप्रत्ययानुदयस्य सामग्र्येकदेशभूतसन्निधिविशेषाभावप्रयुक्तत्वान्न पदानां सामर्थ्याधानसामर्थ्यं कल्प्यम् ।

एवं तावत्पदवादिनः पदार्थवादिनश्च शक्तिकल्पनायां गौरवलाघवे प्रतिपादिते । भवतु वा तुल्यत्वं तथापि पदार्थानामेव वाक्यार्थप्रत्ययहेतुत्वं युक्तम्; अव्यवहितत्वादन्यत्रानुपक्षीणत्वाच्च । नहि ज्वलनमिव काष्ठानां पदार्थस्मृतिः पदानां न व्यवधिमापादयति । न च ज्वलनानुगुणशक्तिव्यतिरेकेण काष्ठानां पाकानुगुणस्वशक्तिः कल्प्या । तयैव ज्वलनव्यवधानेन पाकसिद्धौ शक्त्यन्तरकल्पनायां प्रमाणाभावात् । एवञ्च पदानामपि पदार्थस्मृत्यनुगुणयैव शक्त्या तद्व्यवधानेन वाक्यार्थप्रत्ययलाभान्न शक्त्यन्तरं कल्प्यम् । पदार्थस्वरूपस्तु न व्यवहिता नाप्यन्यत्रोपक्षीणा इति तासामेव पाक इव ज्वलनस्य सामर्थ्यं कल्प्यम् । एवञ्च प्रायम्यं विरुद्धमेव । तात्पर्यन्तु काष्ठेषु व्यभिचारादनैकान्तिकम् । अभिधातृत्वन्तु पदानां स्मारकत्वादसिद्धमेव । तदसिद्धमेतच्छक्तिकल्पनातुल्यत्वेऽपि पदार्थानामेव सा युक्ता न पदानामिति ।

किञ्च न पदार्थानां सामर्थ्यमपूर्वं कल्प्यम् । येतः

तत्परेभ्यः पदेभ्योऽर्थाः प्रतिपन्ना मिथोऽन्वयम् ।
विना न पर्यवस्यन्ति तेन तं लक्षयन्ति ते ॥

---

१. युक्तं तथापि- घ. २. नत्र व्यवधानेऽत्र पाकसिद्धौ- ग. ३. चारादनैकान्तिकम्- ग. घ. ४. भेव तच्छक्ति- ग. क. ५. यतः परेभ्यः- ग.

व्यतिपद्व्यापारैः पदैः प्रतिपन्नाः पदार्थाः तामन्तरेणापर्यवस्यन्तस्तां लक्षयन्ति । न च वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तिविरहान्न लक्षणेति वाच्यम् ; छत्रिणो गच्छन्तीत्यत्र व्यभिचारात् । एतेन लोकप्रसिद्धलक्षणाप्रकारवैलक्षण्येन लक्षणाश्रयणं गौरवायेत्यपास्तम् ; यतोऽस्मदाश्रितलक्षणालक्षणं लोकप्रसिद्धामपि लक्षणां व्याप्नोति । तदव्याप्तौ हि विधाद्वयाङ्गीकरणाद् गौरवम् । न च तदस्ति । भवत एव त्वसदुक्तेन व्यापिनाल्पीयसाऽपि लक्षणाबीजेन लोकप्रसिद्धाया अपि लक्षणायास्सिद्धौ तदतिरिक्तस्य तद्बीजत्वकल्पनं गौरवमापादयति । कथं पुनः क्रियामात्रस्य कारकमात्रम् ? क्रियामात्रमन्तरेणापर्यवसितस्य तद्विशेषान्वयलक्षणत्वं तत्प्रतिपादकयोः पदयोरेकविशिष्टार्थप्रतीतिपरत्वावगमात् तदविरोधाय तयोरेव परस्परान्वयनियमादिति ब्रूमः । अत एव पदार्थहेतोरपि वाक्यार्थस्य शाब्दत्वम् ; अन्वयविशेषलाभस्य पदानामेकविशिष्टार्थबोधतात्पर्यात्मकैकवाक्यत्वनिबन्धनत्वात् । अयमेव शाब्दस्यानुमानार्थापत्तिभ्यां भेदोऽपि । तयोस्तत्तद्विशेषप्रतिर्बद्धया व्याप्त्यानुपपत्त्या वा तत्तद्विशेषसिद्धिः । न सामान्यतो व्याप्तिमात्रेणानुपपत्तिमात्रेण वा । प्रकृते पुनरेकवाक्यत्वसनाथया सामान्यव्याप्त्यैव विशेषव्याप्तिमन्तरेण विशेषसिद्धिरिति । एवन्तावदेकवाक्यार्थप्रतिपत्तिपरेभ्यः पदेभ्यः प्रतिपन्नाः पदार्था एव वाक्यार्थं लक्षयन्ति । तदन्विते साक्षात् सामर्थ्यमन्तरेण पदार्थस्मृतिव्यवधानेनापि पदहेतुत्वस्य निरूढत्वाच्च तद्विरुद्धम् । न च साक्षात् सामर्थ्यविधुरस्य न हेतुत्वमपीति

१ शब्दपदव्यापारैः. ग २. ध्वन व्याप्ति. क ३ त्वदुक्तेन क ४. वा लक्षणाबीजेन. क. ग ५ प्रसिद्धाया अपि क. ६. तस्य क्रियामात्र. क. ७. स्त्वप्रतीति ग. ङ. ८ तद्व्याप्त्या. ग ९ द्धिः । सामान्यतो. ग ङ. १०. तत्परेभ्य क. पदार्थाः ग. ङ ११. नाऽपि. ग. १२. स्त्विति. क.

वाच्यम् ; आग्नेयादीनामवान्तरापूर्वतत्साधनशक्तिभ्यां विलक्षणयोश्शक्य-शक्त्योरभावेऽप्यधिकारापूर्वं[2] प्रति करणत्वाङ्गीकारात्, ज्योतिष्टोमस्य परमापूर्वतत्साधनशक्तिभ्यां भिन्नयोश्शक्यशक्त्योरभावेऽपि[3] स्वर्गं प्रति करणत्वाभ्युपगमात्[4] लोकेऽपि हि काष्ठानां ज्वलनतत्साधनशक्ति-व्यतिरेकेण शक्यशक्त्योरभावेऽपि पाकहेतुत्वाभ्युपगमाच्च यतो न दोषगन्धमप्यावहति ।

किञ्च ।

अन्वितस्यैव शक्यत्वे भवेद्वाक्यस्य शक्तता ।
औचित्याल्लाघवादेवमात् क्वचिदप्यनुपक्षयात् ॥

यदि हि व्युत्पत्तिसमयसिद्धप्रथमावगमानुरोधादन्वितस्यैव[6] शक्यत्वं तदविरोधाद्वाक्यस्यैव शक्तत्वमपि । व्युत्पित्सुर्हि प्रयोज्यवृद्धस्य चेष्ट-मानस्यान्वितविषयमनुमाय तत्र पदानां हेतुत्वमवधारयन् प्रथमतोऽनधि-गतपदार्थत्वात्तत्र पदशक्तिमनुविधत्ते किन्तु तावतो वर्णसमुदायस्यैव। तथा च यथा तादृशप्रथमावगमानुरोधेनान्वितस्यैव शक्यत्वं स्वरूपस्य तु निष्कृष्टस्य स्मार्यत्वमित्यभ्युपगतमेव। तेनैव नयेन वर्णसमुदाय-स्यैवान्विताभिधानशक्तत्वं पदस्य तु निष्कृष्टस्य स्वरूपमात्रस्मारकत्व-

---

१. शक्यशक्त्योर. ग. ङ.  २. कापूर्वं प्रति. ङ.  ३. शक्यशक्त्योर. ग. ङ.
४. तु पाकेऽपि काष्ठानां. ग. ङ.  ५. शक्यता. ग. ङ.  ६. मात्रनुरोधात्. ग. ङ.
७. दन्वयस्यैव. ग. घ. ङ.  ८. शक्यत्वमपि. ग. ङ.  ९. व्युत्पित्सुः प्रयोज्य. ग. ङ.

मित्यभ्युपगन्तव्यम्। आवापोद्वापाभ्यामपि सर्वत्रानुयायिनोः[१] पदतदर्थयोः स्मार्यस्मारकभावेन निष्कर्षमात्रं[२] विधेयम्। एवञ्च पदमात्रं स्वरूपमानस्य[३] स्मारकं स्वरूपातिरिक्तस्य तदन्वितस्य पदातिरिक्तं वाक्यमभिधायक-मित्यौचित्यं[४] स्यात्। तथानेकेषां पदानामेकत्रान्विते शक्तिकल्पनादेकस्य वाक्यस्यैव वाचकत्वकल्पनं लघुतरञ्च स्यात्। तथान्वितस्य वाक्याभिधेयत्वे तस्यैकत्वाच्चान्वयतत्प्रत्यययोरविप्रसङ्गः। पदाभिधेयत्वे तु तेषामनेकत्वात् प्रतिपदं[५] सोऽपि स्यात्। पदानां पदार्थस्मृताविव वाक्यस्य न क्वचिदुपक्षय इत्यनुपक्षीणस्य तस्यैवान्वितबोधहेतुत्वं युक्ततरञ्च भवेत्। अतोऽस्मदु-पदर्शित एव पन्था निरवद्य इत्यास्तान्तावत्।

इति चिद्रानन्दपण्डितकृतौ नीतितत्त्वाविर्भावे अन्विताभिधानवाद
त्रिचत्वारिंशः समाप्तः।

---

१ सर्वपदानां ख  २. निष्कृष्टमात्र. ग  ३. स्वस्मारक ग  ४ स्यैव वाक्यस्य ख  ५ पदनार्थ स्यात्. क

## [वेदापौरुषेयवादः।]

वेदानां पौरुषेयत्वे भवेत्पुरुषदोषतः।
तदप्रामाण्यशङ्केति तन्निरासे यतामहे॥

वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद् यदुक्तसाधनं तदुक्तसाध्यं, उक्तसाधनानि च वेदवाक्यानि अत उक्तसाध्यानीति। पौरुषेयत्वञ्च स्वतन्त्रपुरुषपूर्वकत्वमभिमतम्। अतः क्रमवन्तो वर्णाः पदं, क्रमवन्ति च[1] पदानि वाक्यम्। क्रमश्च नित्यविभुषु वर्णेषु स्वयमसम्भवन्नुच्चारणक्रमनिबन्धन एव। स च पुरुषप्रयत्नसाध्य एवेति वेदवाक्यान्यपि क्रमवत्त्वेन पुरुषप्रयत्ननिष्पाद्यान्येवेति सिद्धसाध्यत्वं वदतामनवकाश एव। न च वाच्यं—किं साक्षात् परम्परया वा स्वतन्त्रपुरुषपूर्वकत्वं साध्यम्? पूर्वस्मिन्निदानीमुच्चार्यमाणेषु वेदवाक्येषु बाधितविषयत्वं अनुवक्तृप्रणीतास्मदादिवाक्येष्वनैकान्तिकत्वञ्च। उत्तरस्मिन् साक्षात्स्वतन्त्रपुरुषप्रणीतेष्वस्मदीयवाक्येष्वनैकान्तिकत्वमिति; साक्षात्त्वपरम्परात्वयोः परस्परव्यभिचारेऽपि साक्षात् परम्परया वा इत्येकाकार[2]परिग्रहात्। अन्यथा भारतवाक्यानि[3] यानि कृष्णद्वैपायनेन साक्षात् प्रणीतानि तानि परम्परया यानि तु परम्परया तानि साक्षादित्युभयानुगतपौरुषेयत्वाभावादन्यतरस्यापौरुषेयत्वप्रसङ्गात्। तस्माद्यद्वाक्यं तत् साक्षात् परम्परया वा स्वतन्त्रपुरुषपूर्वकमिति साधयतां क्वचिद् बाधो व्यभिचारश्चेति सिद्धं वेदाः पौरुषेया इति।

---

१. नि च वाक्यम्। क. २. काकारपरिग्रहात्। ग. ३. वाक्यान्यपि वाजि. ग. ङ.

तदिदमनुपपन्नम्। तथा हि—वाक्येषु पुरुषस्वातन्त्र्यं वृद्धव्यवहार-समधिगतपद[1]पदार्थसम्बन्धस्य चक्षुरादिजन्य[2]तत्तदर्थविशेषविषयपरस्पर-विलक्षणक्षणिकवेदनस्य शरीरिण एव दृष्टमिति यदि वाक्येषु पुरुषः स्वतन्त्रो भवेत् तादृश एव भवेदिति पुरुषस्वातन्त्र्यं तादृशत्वेनैव व्याप्तम्। अतो वाक्यत्वं स्वतन्त्रपुरुषपूर्वकत्वं साधयत् स्वसाध्यविरुद्धस्येव स्वसाध्यव्यापक-विरुद्धस्यापि स्वविरोधित्वात् स्वसाध्यविरुद्ध[3]स्वतन्त्रपुरुषपूर्वकत्वाभावमिव स्वसाध्यव्यापकतादृशत्वविरुद्धमतादृशत्वमप्य[4]प्रतिक्षिप्य साधयितुमशक्तं योग्यानुपलम्भविरोधात्तादृशत्वमादायापि साधयितुमशक्तं निरुद्धाशेष-[5]विशेषत्वेन स्वतन्त्रपुरुषपूर्वकत्वसामान्यमप्यसाधयदात्मना स्वतन्त्रपुरुष-पूर्वकत्वस्य व्याप्तिमेव विघटयति—नाहं स्वतन्त्रपुरुषपूर्वकत्वेन व्याप्तमिति।

स्यादेतत्—अस्तु तर्हि वृद्धव्यवहारसमधिगतव्युत्पत्तिस्तदर्थानु-गुणलक्षणक्षणिकवेदनशरीरैव कर्ता। न च योग्यानुपलम्भबाधोऽपि; निरस्ते कर्तरि योग्यत्वस्यैवाभावादिति। तन्न, वस्तुविचारासाध्येषु [6]ज्योतिष्टोमादिषु वेदप्रामाण्यमेवोपदिश्य पुंसां प्रवर्तयतां स्वयञ्च तदे[7]वालम्ब्य भूयो भूयः प्रवर्तमानानां त्रैवर्णिकानां पौरुषेयवाक्येषु पुरुषाप्तिनिबन्धनत्वात् प्रामाण्यस्य सत्याप्ते प्रणेतरि तत्स्मरणं प्रामाण्यावगमोपकारित्वेन प्रयोजन-वदेवेति स्मृत्यर्हस्यास्मरणमेव तादृशस्वतन्त्राभावं गमयतीति। न च जैमिनी-यैरस्मरणेऽपि कणादाक्षचरणमतानुसारिभिः स्मरणादस्मरणमसिद्धमिति वाच्यं; तैरपि वृद्धव्यवहारावसेयव्युत्पत्तेस्तदर्थविषयविलक्षणक्षणिक-चक्षुरादिजन्यवेदनस्य मातापितृसम्बन्धप्रभूतपार्थिवशरीरस्य कर्तुर-

---

१. तपदार्थसम्बन्धस्य. ग. ङ. २. तद्विशेषण. घ. ३. द्धत्वं स्वतन्त्र. ग. द्धं स्वतन्त्र. ङ. ४. त्वविरुद्धमप्यप्रतिक्षिप्य. ग. ङ. ५. विषयत्वेन. घ. ६. दवाक्ये प्रामाण्यमेवोपदिश्य. ङ. ७. तदेवालम्ब्य. ग. ङ.

स्मरणात्। तदेवं वेदवाक्येषु यादृशस्य स्वतन्त्रपुरुषस्य ते स्मरन्ति तादृशस्य वाक्यत्वमेव[1] स्वपरिपन्थित्वेन निरोधकं[2] इतरस्य तु प्रयोजनवत्त्वेन स्मृत्यर्हस्य सर्वैरेवास्मरणाद्योग्यस्मृत्यनुदय एव बाधक इति वाक्यत्वं[3] निरुद्धसमस्तविशेषत्वेन स्वतन्त्रपुरुषपूर्वकत्वमात्रमपि साधयितुमसमर्थमिति[4] सिद्धो[5] विशेषविरोधः । यथा विशेषविरोधस्य दूषणत्वं यथा च चक्षुषस्तैजसत्वादौ नातिप्रसङ्गः तथेश्वरानुमान एव समर्थितमिति नेहोच्यते ।

किञ्च सम्भवदस्मदादिप्रमाणान्तरमूलवाक्यत्वमेव प्रमाणवाक्यानां स्वतन्त्रपुरुषप्रणीतत्वे प्रयोजकं[6], न वाक्यत्वमात्रम्। न च साध्यानुप्रविष्टतया वाक्यत्वेनैव तदपि साध्यम्; अनाप्तवाक्येषु व्यभिचारात्। न च प्रमाणवाक्यत्वादिति साध्यं; वेदवाक्यगोचरतया सम्भवदस्मदादिप्रमाणान्तरमूलत्वसाधनस्य बाधितविषयत्वात् अपसिद्धान्तापत्तेश्च।

स्यादेतत्—सम्भवदस्मदादिप्रमाणान्तरमूलत्वमस्मदादिविशेषणस्यासमर्थत्वाद् अप्रयोजकम्। यत्तु सम्भवत्प्रमाणान्तरमूलत्वमात्रं तत् प्रमाणवाक्यत्वादिति हेतुनैव साध्यानुप्रविष्टतया साध्यमिति, तदयुक्तम्; असमर्थविशेषणत्वादिरस्यैवासिद्धेरन्योन्याश्रयप्रसङ्गात्, सम्भवत्प्रमाणान्तरमूलत्वमात्रप्रयुक्तिनिश्चयाधीनत्वाद् अस्मदादिविशेषणासामर्थ्यनिश्चयस्य तदधीनत्वाच्च सम्भवत्प्रमाणान्तरमूलत्वमात्रप्रयुक्तिनिश्चयस्य। तथा च सकलसपक्षव्यापितया दृष्टस्य सम्भवदस्मदादिप्रमाणान्तरमूलत्वस्य

---

1. शब्दवाक्यत्वमेव- ग. ङ. 2. क इतरस्य तु- ग. ङ. 3. वाक्यत्वनिरुद्ध- ग. ङ. 4. मसमर्थमिति- ग. ङ. 5. सिद्धे विशेषविरोधः- ग. ङ. 6. कं, वाक्यमात्रम्- ङ.

प्रमाणवाक्येषु पुरुषस्वातन्त्र्यप्रयोजकत्वं प्रति निश्चयाभावेऽपि सन्देहस्य दुर्वारत्वात्, निश्चितप्रयोजकान्तरस्येव सन्दिग्धप्रयोजकान्तरस्यापि वाक्यत्वस्यागमकत्वमेव।

ननु अष्टकाकर्तव्यत्वादिविषयेषु स्मृतिवाक्येषु पुरुषस्वातन्त्र्यदर्शनेऽपि सम्भवदस्मदादिप्रमाणान्तरमूलत्वस्यादर्शनाच्च पुरुषस्वातन्त्र्ये तदुपाधित्वम्। तन्न; तेषामपि वेदमूलत्वेन सम्भवदस्मदादिप्रमाणान्तरमूलत्वात्। न हि प्रमाणान्तरशब्दस्य वेदव्यतिरिक्तपरत्वं; यद्वाक्यं यदर्थे प्रमाणं तद्वाक्यव्यतिरिक्ततदर्थविषयप्रमाणपरत्वात्, वेदवाक्यस्यापि स्मृतिव्यतिरिक्तप्रमाणत्वात्। अतः सम्भवदस्मदादिप्रमाणान्तरमूलत्वं पुरुषस्वातन्त्र्यस्य व्यापकमेवेति तत्प्रयुक्तव्याप्त्युपजीविवसन्देहस्य निष्प्रतिबन्ध्यत्वाद्बाधकमेव वाक्यत्वमिति।

किञ्चात्मत्वं प्रमाणव्यक्तिमन्वेतं न भवति जातित्वाद् गोत्ववत्। एवं द्रव्यत्वसत्त्वे अपि पक्षीकृत्य वक्तव्यम्। यथा चात्यन्ताभावप्रतियोगिनोऽन्यत्राप्रसिद्धस्य साध्यविशेषणत्वेऽपि नाप्रसिद्धविशेषणत्वं तथेश्वरानुमान एव समर्थितम्। न च तावेव हेतुदृष्टान्तावाश्रित्य भास्वदादेरपि निरंपेत्वप्रसङ्ग इति वाच्यम्; अविगीतदृढकर्तृ[12]स्मृतिबाधितविषयत्वात्। यत्पुनः

"अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः"

---

१. त्वादनिश्चयप्रयोजकान्तरस्येव. ग. ङ. २. रस्यैव वाक्यत्वस्याप्यगम. ग. ङ. रस्य वाक्यस्याप्यगम. घ. ३. त्वादिविषयेषु घ. ४. द्वाक्यं तदर्थे. ग. ङ. ५. तस्य वाक्यव्यतिरिक्त घ. ६. कस्य व्या. क. ७. मयमिति ग ङ. ८. त्वादेव द्रव्यसत्त्वे अपि. ग. ङ. त्वादेव द्रव्यत्वसत्त्वे. क. ९. चात्यन्ताभाव. घ. १०. दृष्टान्तावाश्रित्य. ग. ङ. ११. त्यत्वं साध्यमिति वाच्यम्. घ. १२. गीतं दृढस्मृति ङ.

इति, "ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्" "तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे" इत्येवमादयो वेदकरणवादा वेदस्य पौरुषेयत्वे प्रमाणमिति। तदयुक्तम्; तेषामपि परस्परविरुद्धार्थतया प्रमाणान्तरप्रतिहततया चार्थवादत्वमेवेति न पुनः स्वातन्त्र्यमिति निर्णयात्। काठकादिसमाख्यापि कस्यचिदेव कठादेः प्रकृष्टवचनमिति "तेन प्रोक्तम्" इति[1] प्रवचननिबन्धनैवेति सिद्धमपौरुषेया वेदा इति ॥

[2]इति चिदानन्दपण्डितकृतौ नीतितत्त्वाविर्भावे वेदापौरुषेयवादः चतुश्चत्वारिंशस्समाप्तः ॥

---

साकूतं गहनं कुमारिलमत जिज्ञासुभिः पण्डितै-
रप्यस्मास्ववधीरणा यदि परं ग्रन्थोऽयमभ्यस्यताम् ।
नो चेदुद्धततर्कतार्किकसभामभ्यस्यितानां भवेत्
तत्तन्मार्गविचक्षणत्वविरहाद्दास्यैव नो वञ्चितः ॥

यो भूयस्सोमपायी श्रुतिसरणिमणिर्विश्वसाधारणश्री-
र्विद्यानामेकमोकस्त्रिजगति विदितः श्रीधरो यज्ञनिष्ठः ।
तत्सूनुः सूक्तिभूमिर्जगदुपकृतये श्रीचिदानन्दनामा
तत्त्वाविर्भावमुच्चैर्व्यधित बुधसमारोहणे रौहिणेयः ॥

इति चिदानन्दपण्डितकृतौ नीतितत्त्वाविर्भावस्समाप्तः ॥

---

१. ति वचन म- ह. २. इदं पपाठे केवल दृश्यते.

# श्लोकानुक्रमणी।

—

## अनूदितश्लोकानुक्रमणी।

| अनुवादः | आकरः | पुटम् |
| --- | --- | --- |
| नित्यं सत्त्वमसत्त्वं वा | | २०९ |
| पश्यतः श्वेतमारूपं | श्लोकवार्तिकम् वाक्याधिकरणम् श्लो. ३५८ | २१४ |
| प्रतिपत्तेरपारोक्ष्याद् | न्यायकुसुमाञ्जलिः ३–२० | १७७ |
| प्रतियोगिनि सामर्थ्याद् | „ ३–२१ | १७७ |
| प्रमाणग्राहिणीत्वेन | | १६९ |
| भावो यथा तथाभावः | न्यायकुसुमाञ्जलिः १–१० | १६२ |
| मूलक्षयकरीं प्राहुः | | २०९ |
| यज्जातीयो यतस्सिद्धः | | २०७ |
| यद्यात्मा वदने न्यस्तो | | १६४ |
| वायुवेश्मनि वायुस्थं | | १६२ |
| वृत्तावभ्यासवत्यां तु | | ३४ |
| श्येनस्वरूपं नानर्थः | श्लोकवार्तिकम् सू. २–श्लो. २२९ | २४ |
| श्रुतान्वयादनाकाङ्क्षं | न्यायकुसुमाञ्जलिः ३–१२ | १९४ |
| स्वकाले यदकुर्वंस्तु | | १६१ |
| स्वरूपमात्रं दृष्ट्वा च | श्लोकवार्तिकम् सू. ५–श्लो. १८ | १७८ |
| हेतुर्यस्य विनाशोऽपि | | २०९ |

## शुद्धिपत्रिका ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १ | सामर्थ्यलभ्यमर्थं | सामर्थ्यलभ्यमर्थन |
| ६ | १० | माशङ्क्यन्तरङ्ग | माशङ्क्यान्तरङ्ग |
| ७ | १८ | अचार्यस्य | आचार्यस्य |
| १६ | २ | कार्थवादः | कार्थवादः |
| १२ | १० | रुत्पत्यपूर्वा | रुत्पत्त्यपूर्वा |
| २१ | ३ | च्छयेनस्य | च्छ्येनस्य |
| २७ | २ | शास्राभ्या | शास्त्राभ्या |
| २८ | ७ | भिवृत्तेः | निवृत्तेः |
| २९ | १ | प्रागभावरूपस्यऽपि | प्रागभावरूपस्यापि |
| ३१ | ३ | असत्वासम्बन्ध | असत्त्वासम्बन्ध |
| ३१ | ९ | असत्वान्नास्ति | असत्त्वान्नास्ति |
| ३१ | ५ | सत्वसद्भिभिः | सत्त्वसद्भिभिः |
| ३१ | १७ | सत्वसाधनम् ; | सत्त्वसाधनम् ; |
| ३१ | १७ | सत्वेऽप्यनुप | सत्त्वेऽप्यनुप |
| ३१ | १८ | असत्वेऽप्युप | असत्त्वेऽप्युप |
| ३५ | ९ | स्वविषय | स्वविषय |
| ३६ | ८ | स्वनिषय | स्वविषय |
| ३१ | १४ | दूरत्वादिषु, | दूरत्वादिषु |
| ३९ | ४ | प्रमाण्याप्रामाण्ये | प्रामाण्याप्रामाण्ये |
| ३९ | १२ | तत्र च । | तत्र च — |
| ४० | १ | शक्तो | शक्तौ |

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९९ | १० | पूवत्रं | पूर्वत्र |
| ९६ | १९ | क्षणमात्रमहिणो | क्षणमात्रग्राहिणो |
| ६२ | ७ | प्रमाणभावात् | प्रमाणाभावात् |
| ६४ | १० | साक्षात्परम्परया वा | साक्षात्परम्परया वा |
| ६४ | १७ | [आत्मसंयोगवाद ।] | [अजसंयोगवाद ।] |
| ७० | १४ | वा वावयविनि | वावयविनि |
| ७० | १९ | महत्वे | महत्त्वे |
| ७१ | ४ | विशेष्यभाव | विशेष्यभावः |
| ७९ | १६ | वस्तुनो भवेत् | वस्तुनोर्भवेत् |
| ८० | २–३ | सहादर्शने विरोधस्य | सहादर्शनेन विरोधस्य |
| ८९ | १७ | ग्रहणान्महत्व | ग्रहणान्महत्त्व |
| ९९ | १६ | स्सत्वमित्युप | स्सत्त्वमित्युप |
| ९६ | ९ | सत्व सिद्धम् । | सत्त्व सिद्धम् । |
| १०० | ७ | व्यवच्छेदावधि | व्यवच्छेदावधि |
| १०७ | १७ | माया मयत्वेऽपि | मायामयत्वेऽपि |
| १०८ | १७ | स्यानुपपत्ते | स्यामानुपपत्ते |
| ११९ | ६ | [मिथ्यावाद ।] | [अविद्यावादः।] |
| ११२ | १ | कादाचित् कस्य | कादाचित्कस्य |
| ११२ | १४ | एवञ्चार्थापत्ति | एवञ्चार्थापत्ति |
| ११६ | ८ | अतस्सिद्धमबाधित | अतस्सिद्धमबाधित |
| १२७ | ८–९ | यथा—सम्प्रतिपन्नो | यथा सम्प्रतिपन्नो |
| १३४ | १० | सस्कारश्च | संस्कारश्च |
| १३९ | ८ | सख्यायोगस्यैव | सङ्ख्यायोगस्यैव |
| १३७ | ५ | व्याप्तिस्वभावात् | व्याप्ति स्वभावात् |
| १३७ | १७ | इत्युभयत· स्पाशा | इत्युभयत स्पाशा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४१ | ४ | प्रतिपिपादयिषयापक्ष | प्रतिपिपादयिषया पक्ष |
| १४१ | ८ | तद्यथा— | तद्यथा |
| १४१ | १२ | साधारणश्च | साधारणोऽसाधारणश्च |
| १४४ | १७ | वाक्यार्थस्यापि | वाक्यार्थस्यापि |
| १४५ | १, ३ | कांक्षादि | काङ्क्षादि |
| १५४ | ११ | कांर्त्स | कार्त्स्न्यं |
| १५५ | ३ | नवकंबलो | नवकम्बलो |
| १५७ | ९ | यतः । | यतः — |
| १६३ | ८ | प्रध्वंसामा | प्रध्वंसानां |
| १६८ | ८ | शाब्देनैवान्वय | शाब्देनैवान्वय |
| १६८ | १४ | छिनत्त्यर्थेन | छिनत्त्यर्थेन |
| १६९ | ११ | किमेकसंख्या | किमेकसङ्ख्या |
| १७३ | ३ | पलम्भावस्य | पलम्भाभावस्य |
| १७३ | १२ | वैध्यर्त्स्याच्च | वैधर्म्याच्च |
| १७५ | १ | त्वादननन्यथा | त्वादनन्यथा |
| १७९ | ६ | स्संबन्धान्तर | स्सम्बन्धान्तर |
| १९४ | १४ | दीपान्तराद्दीपने | दीपान्तरोद्दीपने |
| १९५ | ३ | सामान्यादिगतकत्व | सामान्यादिगतैकत्व |
| २०१ | १३ | व्यावृत्तिसिद्धारिति | व्यावृत्तिसिद्धिरिति |
| २०१ | १५ | भाव इति | भावा इति |
| २१३ | ९ | च्छेत्तुरपि च्छेद | छेत्तुरपि छेद |
| २१५ | १२ | अतश्चन्द्रपदेस्यार्थेन | अतश्चन्द्रपदस्यार्थेन |
| २१७ | १५ | श्रावणत्वेऽपि | श्रवणत्वेऽपि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २२० | २ | निद्राभाव | दुःखाभाव |
| २२० | १७ | सर्वमात्मैवासी तत् | सर्वमात्मैवासीत् तत् |
| २२१ | १ | मुक्तावविर्भाव | मुक्तावाविर्भाव |
| २२१ | १५ | मुक्तस्यामनस्त्वप्राति | मुक्तस्यामनस्त्वप्रति |
| २२२ | २ | ज्ञातुज्ञाते | ज्ञातुर्ज्ञाते |
| २२२ | ८ | निर्जं यत्वात्म | निर्जं यत्वात्म |
| २२६ | ८ | णानुः पपत्तेः | णानुपपत्तेः |
| २२४ | ४ | तथानकेषा | तथानेकेषा |
| २२५ | १५ | परम्पराय | परम्परया |
| २२९ | ९ | कुमारिलमत | कुमारिलमतं |

—